।।श्रीः।।
।।नमो राघवाय।।
।।श्रीसीतारामौ विजयेते।।

धर्मचक्रवर्तिमहामहोपाध्यायवाचस्पतिकविकुलरत्नमहाकवि
जगद्गुरुरामभद्राचार्यविकलाङ्गविश्वविद्यालयीयजीवनपर्यन्तकुलाधिपति
श्रीचित्रकूटतुलसीपीठाधीश्वरप्रस्थानत्रयीभाष्याकार
जगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यप्रणीतम्

# गीतरामायणम्

(गीतसीताभिरामं संस्कृतगीतमहाकाव्यम्)

प्रकाशकः

जगद्गुरुरामभद्राचार्यविकलाङ्गविश्वविद्यालयः

चित्रकूटः उ०प्र० २१०२०४

**प्रकाशक :**

जगद्गुरुरामभद्राचार्यविकलाङ्गविश्वविद्यालयः
चित्रकूटः उ०प्र० २१०२०४

**प्रथमावृत्ति :**

मकरसङ्क्रान्तिः विक्रमाब्दः २०६७
१४ जनवरी २०११ (गीतरामायणप्रणेतुर्जन्मदिनम्)



**पुस्तकप्राप्ति स्थानम् :**

* जगद्गुरुरामभद्राचार्यविकलाङ्गविश्वविद्यालयः
चित्रकूटः उ०प्र० २१०२०४
* श्रीतुलसीपीठ आमोदवन पो० नयागाँव
चित्रकूट जनपद सतना म०प्र० ४८५३३१

**देयराशिः**

पञ्चशतानि (५०० रुपये)

**कम्पोजिंग :**

श्रीसांई कम्प्यूटर
३, डी० रोड, इलाहाबाद २११००३
दूरभाष : ०५३२-२५६४६४२, ०९३३५५८६३५२, ०९४५२४०३३८४

**मुद्रक :**

नागरी प्रेस
९१/१८६, अलोपीबाग, इलाहाबाद २११००६
दूरभाष : ०५३२-२५०२९३५, ०९४१५२३९९५८, ०९३३५११०७३८

।।श्रीः।।

।।नमो राघवाय।।

।।श्रीमद्राघवो विजयते। श्रीसीतारामौ विजयेते।।

# गीतरामायणम्

## ( गीतसीताभिरामं संस्कृतगीतमहाकाव्यम् )

प्रणेता
श्रीचित्रकूटतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्य-
स्वामिरामभद्राचार्यः प्रस्थानत्रयीभाष्यकारः

**श्रीसीतानाथसमारम्भां श्रीरामानन्दार्यमध्यमाम्।**
**अस्मदाचार्यपर्यन्तां वन्दे श्रीगुरुपरम्पराम्।।**

अथ मया प्रस्थानत्रयीभाष्यकारेण श्रीचित्रकूटतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्येण गिरिधरकविना गीतरामायणं गीतसीताभिरामं संस्कृतगीतमहाकाव्यं विरचयता गीयते।

# अथ बालकाण्डम्

## गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये
## बालकाण्डे
### गीतस्तुतसीतारामचन्द्रो नाम

## प्रथमः सर्गः

### मङ्गलाचरणम्

**श्रीसीताहृत्सरोजे कृतनिजनिलयो नीलरत्नावदातो**
**रातः श्रीप्रेमराया रघुकुलमहिषीमान्यया मञ्जुगुञ्जः।**
**ऐश्वर्याद्यैः षडङ्घ्रिर्भजनजनिरसं रातु रामानुगेभ्यो**
**भौमीभव्यास्यकञ्जासवमभिरसयन् रामराजालिराजः।।१।।**

**भौमीटीका–**

**जय जय श्रीसीताभिराम श्रीराम राम रघुकुलनन्दन।**
**निखिललोकनयनाभिराम घनश्याम कामरिपुमनचन्दन।।**
**सुकृतगीत सीताभिराम सुरगिरागीतरामायण की।**
**भौमी व्याख्या राष्ट्रगिरा में करता शुभ पारायण की।।**

अब मैं अपने ही द्वारा विरचित संस्कृत गीतकाव्य गीतरामायणम् (गीतसीताभिरामम्) की राष्ट्रभाषा हिन्दी में भावार्थरूप में '**भौमी**' नामक व्याख्या प्रस्तुत करता हूँ। जिससे संस्कृत भाषा से अनभिज्ञ महानुभाव भी गीतरामायणम् को सरलता से समझकर गा सकेंगे।

गीतरामायणम् के रचयिता महाकवि जगद्गुरु रामानन्दाचार्य स्वामिरामभद्राचार्य आशीर्वादात्मक मंगलाचरण स्रग्धरा छन्द में प्रस्तुत करते हुए कहते हैं कि श्रीसीताजी के हृदय कमल को जिन्होंने अपना निवास स्थान बना लिया है, जो नीलमणि के समान सुन्दर हैं, श्रीरामप्रेम की एकमात्र धनाढ्य रघुकुल की रानियों में माननीया भगवती कौसल्या जी ने जिन्हें प्रकट करके संसार को समर्पित किया है, जिनका गुञ्जन अर्थात् शब्द बहुत ही मधुर है, जो ऐश्वर्य, धर्म, यश, श्री, ज्ञान और वैराग्यरूप छः चरणों से युक्त हैं, ऐसे भूमिनन्दिनी सीताजी के मुखकमल के सौन्दर्यमकरन्द का पान करने वाले भ्रमरश्रेष्ठ राजाधिराज भगवान् श्रीराम श्रीरामानुगामी श्रीरामभक्त वैष्णवों को भजन से उत्पन्न रस प्रदान करते रहें।

**यदि चिकीर्षसि राममयं मनः**
**यदि बुभूषसि भौमिभवे जनः।**
**नवपदीललितां श्रितभारतीं**
**गिरिधरस्य तदा शृणु भारतीम्।।२।।**

**भौमी–** अब महाकवि श्रीगीतरामायणम् के रसिक अनुशीलन पाठकों को सावधान करते हुए द्रुतविलम्बित छन्द में कहते हैं–यदि आप अपने मन को श्रीराममय बनाना चाहते हैं तथा यदि आप भूमिनन्दिनी सीताजी के पति श्रीराम के भक्त बनना चाहते हैं तो फिर नवीन–नवीन पदों से ललित, भगवती सरस्वती का श्रयण करने वाली, गीतरामायणम् के रूप में प्रस्तुत होने वाली **गिरिधर** कवि की वाणी को अवश्य श्रवण कीजिए।

**दर्शं दर्शं सहर्षं हरिमवनिजया स्वर्णसिंहासनस्थं**
**नामं नामं विरामं भवभयविपदां राममात्माभिरामम्।**
**भावं भावं भवानीभवभवकृपया लब्धरोमाञ्चदेहे**
**गायं गायं गवास्मानगदतु हनुमान् गीतसीताभिरामम्।।३।।**

**भौमी–** अब महाकवि श्रीहनुमान् जी के श्रीचरणों में प्रार्थना करते हुए कहते हैं– भूमिपुत्री सीताजी के साथ स्वर्ण सिंहासन पर विराजमान प्रभु श्रीराम को प्रसन्नतापूर्वक निहार–निहार कर, संसार के भय और विपत्तियों के विनाश के एकमात्र कारण, विशुद्ध आत्माओं में अभिरमण करने वाले श्रीराम को बार–बार नमन करके, भवानीपति श्रीशंकर के भी आराध्य भगवान् श्रीराम की कृपा से बार–बार रोमांच को प्राप्त करते हुए, अपनी दिव्यवाणी से '**गीतसीताभिरामम्**' नामक संस्कृतगीत महाकाव्य का गान करते हुए अञ्जनानन्दवर्धन श्रीहनुमान् हम सबको सांसारिक रोगों से मुक्त करते रहें।

सीतारामप्रथितचरितप्रेमपीयूषभाग्भिः
सर्गैर्लोकाधिपनयनकैर्भोगदृग्व्योमचैत्यैः ।
सीताप्रीत्यै विरचयति रामायणं रामभद्राऽऽ-
चार्यो दैव्यां गिरि गिरिधरो गीतसीताभिरामम् ।।४।।

**भौमी–** अब महाकवि रचयिष्यमाण ग्रन्थ की प्रतिज्ञा करते हुए कहते हैं कि–श्रीसीताराम जी के प्रसिद्ध चरित्रों में निःस्यूत प्रेमामृत से युक्त अट्‌ठाईस सर्गों में एवं एक हजार आठ गीतों में **गिरिधर** कवि नाम से प्रसिद्ध जगद्‌गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य भगवती श्रीसीता जी की प्रीति के लिए 'गीतरामायणम्' नामक संस्कृतगीतकाव्य की रचना कर रहे हैं–

## गीत संख्या १

रामनवाम्बुददामिनि हरिभामिनि हे।
सीते धरणिकुमारि जय जय जानकि हे।।१।।
गिरेन्दिरागिरिजाजनि जगतिजननि हे।
श्रीरघुचन्द्रचकोरि जय जय जानकि हे।।२।।
चम्पककनकविकाशिनि सितवासिनि हे।
मैथिलि जनककिशोरि जय जय जानकि हे।।३।।
हरकार्मुकमदखण्डिनि महिमण्डिनि हे।
कोसलराजवधूटि जय जय जानकि हे।।४।।
चित्रकूटसुविहारिणि वनचारिणि हे।
सुजनसुजीवनिमूलि जय जय जानकि हे।।५।।
दण्डकविपिनविलासिनि भयनाशिनि हे।
दनुजवनजहिमरात्रि जय जय जानकि हे।।६।।
मारुतिवरसुरवल्लारि रतिजित्वरि हे।
पावकपावनि देवि जय जय जानकि हे।।७।।
लक्ष्मणभरतशुभङ्करि रिपुहेश्वरि हे।
सततमवधसाम्राज्ञि जय जय जानकि हे।।८।।
ब्रह्ममयि व्रतभावनि जनतावनि हे
गिरिधरमव जगदम्ब जय जय जानकि हे।।९।।

**भौमी–** अब महाकवि गीतरामायणम् के बालकाण्ड के मंगलाचरण रूप में प्रथम गीत का उद्‌भावन करते हुए भगवती जानकी का जय–जयकार कर रहे हैं। हे श्रीरामरूप नवीन बादल की विद्युत! हे भगवान राम की धर्मपत्नी! हे पृथ्वीपुत्री! हे जनक नन्दिनी सीते! आपकी जय हो, जय हो। हे, सरस्वती, लक्ष्मी एवं पार्वती को भी जन्म देने वाली, सम्पूर्ण संसार की माँ, श्रीराममुखचन्द्र की चकोरी सीताजी आपकी जय हो–जय हो।

चम्पा एवं सुवर्ण को भी अपनी शोभा से विकास प्रदान करने वाली, नीलवस्त्र धारण करने वाली, मिथिला में प्रकट हुई हे जनकराजकिशोरी सीते! आपकी जय हो, जय हो। हे शंकरजी के धनुष के अहंकार को दूर करने वाली, पृथ्वी की अलङ्कारस्वरूपा तथा कोसलराज दशरथ की बड़ी बहूरानी, सीताजी आपकी जय हो, जय हो। हे चित्रकूट विहारिणी! वन में भ्रमण करने वाली श्रीवैष्णवजन के लिए जीवनमूलिकास्वरूपा श्रीसीताजी आपकी जय हो, जय हो। हे दण्डकवन को अलङ्कृत करने वाली, भक्तों के भय को दूर करने वाली, राक्षसकुलरूप कमल वन के लिए हेमन्त ऋतु की रात्रि रूप श्रीसीताजी! आपकी जय हो, जय हो। हे हनुमान् जी के वरदानों के लिए कल्पलतास्वरूपिणी, अपनी शोभा से रति को जीतने वाली, अपने निवास से अग्नि को भी पवित्र करने वाली देवि श्रीसीते! आपकी जय हो, जय हो। हे श्रीलक्ष्मण-भरत का कल्याण करने वाली, श्रीशत्रुघ्नलालजी की भी ईश्वरी अर्थात् बड़ी भाभी की भूमिका में शत्रुघ्न का लालन-पालन करने वाली, निरन्तर श्रीअवध की साम्राज्ञी, महारानी जी आपकी जय हो-जय हो। हे ब्रह्मस्वरूपिणी, समस्त व्रतों की जन्मदात्री, जनता की रक्षा करने वाली सीते! आप मुझ कवि **गिरिधर** की रक्षा कीजिए, आपकी जय हो, जय हो।

## गीत संख्या २

**सुभगशरासनसायक रघुनायक हे।**
**कटितटलसितनिषङ्ग जय जय राम हरे।।१।।**
**अमितमनोजमनोहर तडिदम्बर हे**
**नलिननयन नरदेव जय जय राम हरे।।२।।**
**कोसलजासुखवर्धन हृतबन्धन हे**
**दशरथराजकिशोर जय जय राम हरे।।३।।**
**स्मररिपुकार्मुकखण्डन महिमण्डन हे**
**जानकिरमण मुकुन्द जय जय राम हरे।।४।।**
**शरदमलेन्दुसमानन श्रितकानन हे**
**सीतानलिनिदिनेश जय जय राम हरे।।५।।**
**समरनिहतखरदूषण गतदूषण हे**
**खगशबरीप्रतिपाल जय जय राम हरे।।६।।**
**सखितसुकण्ठविभीषण रणभीषण हे**
**दशमुखकमलतुषार जय जय राम हरे।।७।।**
**लक्ष्मणभरतसमर्चित रिपुहार्चित हे**
**मारुतिमानसहंस जय जय राम हरे।।८।।**
**कोसलपुरजनरञ्जन भवभञ्जन हे**
**गिरिधरमव श्रीराम जय जय राम हरे।।९।।**

**भौमी-** अब कवि भगवान् श्रीराम की जय-जयकार करते हुए कहते हैं- सुन्दर धनुषबाण धारण करने वाले, कटितट पर तरकश को सुशोभित करने वाले हे रघुनाथ श्रीराम! आपकी जय, जय हो। असंख्य

कामदेवों के मनों को हरने वाले, विद्युत् के समान पीताम्बर को धारण करने वाले, कमलनेत्र, मनुष्यों में देवता, महाराज श्रीराम आपकी जय हो, जय हो। हे कौसल्या के सुख को बढ़ाने वाले, भवबन्धन को नष्ट करने वाले, महाराज दशरथ के किशोर राजकुमार श्रीराम आपकी जय–जयकार हो। हे शंकर जी के धनुष को तोड़ने वाले, पृथ्वी के अलंकारस्वरूप, सीतारमण, भुक्ति–मुक्ति प्रदाता, भगवान् श्रीराम आपकी जय हो, जय हो। शरद्कालीन विमल चन्द्र के समान मुखमण्डल एवं प्रसन्नता से वनवास स्वीकार करने वाले, श्रीसीतारूप कमलिनी के सूर्य, श्रीराम आपकी जय हो, जय हो। युद्ध में खरदूषण का वध करने वाले, समस्त दोषों से रहित, जटायु व शबरी का प्रतिपाल करने वाले श्रीराम आपकी जय हो, जय हो। हे सुग्रीव–विभीषण के मित्र, संग्राम में भयंकर, रावणरूप कमल के लिए तुषारस्वरूप श्रीराम आपकी जय हो, जय हो। श्रीलक्ष्मण एवं श्रीभरत के द्वारा पूजित, श्री शत्रुघ्न लाल से सत्कृत एवं श्रीहनुमान् के मनमानस सरोवर के राजहंस श्रीराम आपकी जय हो, जय हो। हे अयोध्यावासियों को आनन्दित करने वाले भवभयनाशक प्रभु श्रीराम मुझ कवि **गिरिधर** की रक्षा कीजिए। आपकी जय, जय हो।

## गीत संख्या ३

**हृदये निवेश्य रामं नयने निमील्य श्यामम्।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।**
**निर्विकारमथ मनोमन्दिरं भावमयं निर्माय।**
**सानुजसीतं कृपापरीतं रामं तत्र निधाय।**
**आवाह्य धारणाख्यं दत्वासनं सुविख्यम् ।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।१।।**
**प्रीतिं पाद्यं प्रणतिं स्वर्घ्यं स्वाचमनं सत्सङ्गम्।**
**स्नानार्थं ते सरयूसलिलं भवदनुरागमभङ्गम् ।**
**सदुपासनासुवस्त्रं त्रैभावयज्ञसूत्रम्।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।२।।**
**सम्बन्धं हरिभक्तिनिबन्धं मुदितापरिमलधारि।**
**मलयमनोरथमण्डितगन्धं भववासनाप्रहारि।**
**सुमनो मनो मदीयं सुविरागि राघवीयम्।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।३।।**
**श्रद्धाधूपं सौरभभूपं दूरितकुमतिकुगन्धम् ।**
**सुस्मृतिदीपं वितिमिरदीपं दलितदुरितनिर्बन्धम् ।**
**धृतचारुचित्तद्वारं सुस्नेहसर्पिसारम् ।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।४।।**
**नवधाभक्तिमनोहरमधुरं प्रेमभक्तिनैवेद्यम् ।**

**अनन्यतातुलसीदलमण्डितसुललितरुचिमावेद्यम्।**
**सुस्वादुभावभव्यं सुममत्वनीरनव्यम् ।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।५।।**
**विगलितमत्सरसंशयमूलं प्रेममञ्जुताम्बूलम् ।**
**रामकथाखदिरं प्रभुपादासक्तिसुधं सुखमूलम्।**
**वृत्तिर्दृढा मदीया सुप्रदक्षिणा त्वदीया।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।६।।**
**सङ्कल्पः स्वयमेव चामरे स्मरणं घण्टानादम् ।**
**शंखध्वनिं निश्चयं बुद्धेर्भजने दमितविषादम्।**
**विरहाश्रुदिव्यमर्घ्यं विलपनलसन्महार्घ्यम् ।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।७।।**
**सप्तावरणवर्तिकामण्डितनीराजनं करिष्ये ।**
**सप्तसप्तकृत्वः करणैरथ भक्त्या मनो हरिष्ये।**
**भजनं चतुर्विधं मे सुमनोऽञ्जलिं शुभं ते**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।८।।**
**जानकिजीवन विलसितयौवन राघव जलधरश्याम।**
**गिरिधरकविकृतमानसपूजामङ्गीकुरु हे राम।**
**त्रायस्व दासमेनं नतपाल पाहि दीनम्।**
**पूजनमहं करिष्ये अर्चनमहं करिष्ये।।९।।**

**भौमी–** अब महाकवि अपने मनोराज्य में प्रभु श्रीराम की मानसिक पूजा करते हुए गा रहे हैं। मैं अपने हृदय में श्यामवर्ण श्रीराम को विराजमान करके बाहरी आँखें बन्दकर उन्हीं प्रभु की मानसपूजा व अर्चना करूँगा। सम्पूर्ण विकारों से रहित, भावनाओं से पूर्ण अपने मन को ही मन्दिर बनाकर उसमें श्रीलक्ष्मणसीता सहित कृपापूर्ण श्रीराम को ही इष्टदेवता के रूप में पधराकर, आह्वान करके धारणा नामक शोभायुक्त आसन समर्पित कर पूजन अर्चन करूँगा। हे प्रभो! अपनी प्रीति को ही आपका पाद्य तथा प्रणाम को अर्घ्य एवं सत्संग को ही आचमन बनाकर आपके स्नानार्थ अपने निर्मल अनुराग को ही सरयू जल के रूप में उपस्थित करके श्रेष्ठ उपासनारूप वस्त्र धारण कराकर अपने तीनों भावों अर्थात् सख्य, वात्सल्य और दास्य को ही यज्ञोपवीत बनाकर आपकी पूजा अर्चना करूँगा। भजन की प्रसन्नता रूप सुरभि से युक्त आप श्रीराम की भक्ति से निबद्ध, भववासना को नष्ट करने वाले, मंगलमय मनोरथरूप मलय सुगन्ध से युक्त, सेवक–सेव्य भाव रूप सम्बन्ध को ही मैं आपके लिए गन्ध समर्पित करूँगा। श्रेष्ठ वैराग्य से युक्त आप श्रीराघव के लिए समर्पित अपने मन को ही मैं पुष्प के रूप में आपको समर्पित करूँगा। हे प्रभो! अपनी श्रद्धा को ही मैं श्रेष्ठ सुगन्ध से युक्त धूप बनाऊँगा जिसमें दुर्गन्ध नहीं होगी और अन्धकार रूप हाथी को दलित करने वाले दीप के रूप में मैं प्रस्तुत करूँगा अपनी स्मृति को जहाँ हठरूप दारिद्र्य नहीं होगा। जहाँ सुन्दर स्नेह ही घी बनकर जगमगाएगा और उस दीपक को मैं अपनी चित्तरूप देहली पर विराजमान कराकर आपकी पूजा–अर्चना करूँगा। हे प्रभो! अपनी

नवधाभक्तिरूप नौ मिष्ठान्नों से सजाकर, अनन्यता तुलसीदल से मण्डित सुन्दर ललित रुचि से पूर्ण प्रेमभक्ति को ही नैवेद्य के रूप में अर्पित करूँगा जहाँ आपके प्रति निःस्वार्थ ममत्व जल होगा और निर्मल भाव ही अलौकिक स्वाद होगा। इस प्रकार मैं आपकी पूजा-अर्चना करूँगा। हे प्रभो! मत्सर और संशय के मूल से रहित मेरा निर्मल प्रेम ही आपके लिए ताम्बूल होगा उसमें श्रीरामकथा ही कत्थे की भूमिका निभाएगी और आपके श्रीचरण की आसक्ति ही चूना बन जाएगी। मेरी दृढ़ वृत्ति ही आपकी सुन्दर प्रदक्षिणा होगी। इस प्रकार मैं आपकी मानसी पूजा करूँगा। हे प्रभो! मेरा संकल्प ही आपका चामर होगा तथा स्मरण घण्टानाद। भजन में विषाद को नष्ट करने वाला मेरी बुद्धि का दृढ़ निश्चय ही शंखध्वनि, मेरे विरह के आँसू ही मेरे विलापों की बहूमूल्यता से युक्त विशेषार्घ्य की भूमिका निभाएँगे। यही मेरी मानसिक पूजा अर्चना होगी। हे प्रभो! अपने सात आवरणों से युक्त, सात वर्तिकाओं द्वारा सजी हुई नीराजना से अपने चौदह करणों अर्थात् दस इन्द्रिय और चार अन्तःकरणों द्वारा मैं आपकी चौदह आरती करूँगा और अपनी भक्ति से आपके मन को भी हर लूँगा। अपने चार प्रकार के भजन को आपकी पुष्पाञ्जलि बनाकर मैं आपकी पूजा-अर्चना करूँगा। हे जानकीजीवन! हे युवावस्था को भी सुशोभित करने वाले, नवीन बादल के समान श्यामल, रघुश्रेष्ठ हे प्रभो राम! इस **गिरिधर** कवि द्वारा की गई यह मानसिक पूजा आप स्वीकार करें। इस दास की रक्षा करें और हे प्रणतपाल! इस दीन को भवबाधाओं से बचा लें, मैं आपकी सदैव मानसिक पूजा करूँगा।

## गीत संख्या ४

**दशावतारस्तुतिः**

**अधिलयजलधिधृता भवता महिनौका।**
**श्रितमनुवेदमयेन जनौका।**
**राघव धृतमत्स्यशरीर जय श्रीराम हरे।।१।।**
**कुधरमवन् भगवन् स्वकरे धृतमन्दर।**
**भववारिधिमन्दर गुणमन्दिर।**
**राघव धृतकमठशरीर जय श्रीराम हरे।।२।।**
**कनकनयनमवता भवतावनिरूढा।**
**निशिनलिने स्वलिनीव निगूढा।**
**राघव धृतसौकररूप जय श्रीराम हरे।।३।।**
**शितनखकनककशिपुतनुवीरणदारण।**
**जनप्रहलादविपत्तिविदारण।**
**राघव धृतनृहरिशरीर जय श्रीराम हरे।।४।।**
**भिक्षयसे बलिमवनिमह वटुविग्रह।**
**पदनखजनितगङ्गखलनिग्रह।**
**राघव धृतवामनरूप जय श्रीराम हरे।।५।।**
**द्विजकुलशस्यपयोदपरश्वधधारण।**

हैहयपतिगजपतिमदवारण ।
राघव धृतभृगुवररूप जय श्रीराम हरे।।६।।
दशरथकौसल्यासुकृताब्धिसुधाकर ।
रामचन्द्ररणहतदशकन्धर ।
राघव प्रकटितनृपरूप जय श्रीराम हरे।।७।।
कंसवंशवनदहन सुजनसुखशालिन्।
राधावर गिरिधर वनमालिन्।
राघव धृतकृष्णशरीर जय श्रीराम हरे।।८।।
करुणयसेऽकरुणेषु विधूतविरोधः।
समदर्शी हृदि संश्रितबोधः।
राघव धृतबुद्धशरीर जय श्रीराम हरे।।९।।
म्लेच्छेभ्योऽपि विधित्सुः पदनिर्वाणम्।
कलयसि सहजकृपोऽपि कृपाणम्।
राघव धृतकल्किशरीर जय श्रीराम हरे।।१०।।
गिरिधरकविकृतगीतं परममुदारम्।
शृणु हर मे भवशोकमपारम्।
राघव धृतदशविधरूप जय श्रीराम हरे।।११।।

**भौमी**–अब महाकवि भगवान् श्रीराम को ही दश अवतारों के अवतारीरूप में प्रस्तुत करते हुए यह शास्त्रीयसंगीतविधापूर्ण ललित गीत गाते हैं–हे प्रभो श्रीराम! आपने प्रलय के समय अपनी शरण में आये हुए वैदिक वाङ्मय के साथ वर्तमान वैवस्वत मनु का उद्धार करने के लिए पृथ्वी को ही नौका बनाकर स्वयं मत्स्यावतार ग्रहण करके अपने सींग में धारण किया था। जो सम्पूर्ण जीवों का निवास स्थान है। हे मत्स्यमूर्ते राघव! आपकी जय हो। हे भगवन् ! जब समुद्रमन्थन के समय मन्दराचल पर्वत पाताल में धंसने लगा था तब उस पर्वत की रक्षा करते हुए समस्त गुणों के मन्दिर भवसागर को मथने के लिए मन्दर के समान हो करके भी आप श्रीराघव ने कच्छप का रूप धारण करके अपनी पीठ पर मन्दराचल को धारण कर लिया था। हे कच्छपावतार श्रीराम! आपकी जय हो। हे प्रभो श्रीराम! हिरण्याक्ष का वध करते हुए आपश्री ने अपने दाँतों पर पृथ्वी को धारण किया था वह पृथ्वी आपके दाँतों पर उसी प्रकार सुशोभित हुई थी जैसे रात्रि के समय कमल में भ्रमरी छिप गई हो। हे शूकरावतारी श्रीराम! आपकी जय हो। अपने नुकीले नखों से हिरणयकशिपु रूप कोमल घास को फाड़ देने वाले भक्त प्रह्लाद की विपत्ति को दूर करने वाले नृसिंहावतारधारी राघव! आपकी जय हो। अहो! ब्राह्मण वटु शरीर धारण करके वही आपश्री महाराज बलि से तीन पग भूमि माँगते हैं जिन आपश्री के चरणकमल से गंगा जी प्रकट हुई, जिन आपश्री ने बड़े-बड़े दुष्टों को दण्डित किया ऐसे श्रीवामनावतारी प्रभु श्रीराम आपकी जय हो। हे प्रभो! आपने परशुराम का रूप धारण करके ब्राह्मण कुलरूप खेती के लिए दिव्य बादल बने फरसे को धारण किया और आप सहस्रबाहु रूप मतवाले हाथी को नष्ट करने के लिए अंकुश बने। हे परशुराम रूपी अवतारी श्रीराम! आपकी जय हो। हे श्रीराघव प्रभु राम! आपने अवतारी होते हुए भी

श्रीअवध में स्वयं को श्रेष्ठ राजा के रूप में प्रकट किया। हे श्रीदशरथ एवं माँ कौसल्या के पुण्य क्षीरसागर के चन्द्रमा, युद्ध में रावण का वध करने वाले रामचन्द्र श्रीराघव आपकी जय हो। हे राघव! आपने श्रीकृष्ण शरीर धारण करके कंस के वंश को उसी प्रकार नष्ट किया जैसे बांस के वन को अग्नि नष्ट कर देती है। सुजनों को सुख देने वाले हे राधावर, हे गोवर्धनधारी, हे वनमाली रामाभिन्नश्रीकृष्ण! आपकी जय हो। हे प्रभो! आप बुद्ध शरीर धारण कर निर्दय लोगों पर भी करुणा करते हैं। आप सम्पूर्ण विरोधों से रहित समदर्शी तथा दिव्य ज्ञान के आश्रय हैं। हे बुद्ध जगन्नाथस्वरूप श्रीराम! आपकी जय हो। हे परमात्मन्! सहज कृपालु होकर भी म्लेच्छ लोगों के लिए निर्वाण पद का विधान करने की इच्छा से आपश्री हस्तकमल में तलवार धारण करते हैं। हे कल्कि अवतार के अवतारी श्रीराम! आपकी जय हो। हे प्रभु श्रीराघव! मुझ **गिरिधर** कवि द्वारा प्रणीत इस श्रेष्ठ गीत को सुनिए और मेरे अपार भवशोक को दूर कीजिए। हे दशावतारों के अवतारी श्रीराम! आपकी जय हो।

## गीत संख्या ५

**श्रीराम दीनबन्धो घनश्याम शीलसिन्धो।**
**कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे ।।**
**हे रघुनायक जनसुखदायक कोसलराजकिशोर ।**
**सरसिजलोचन भवभयमोचन विश्वविलोचनचोर ।।**
**दिवसेशवंशकेतो भवभीमसिन्धुसेतो ।**
**कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।१।।**
**क्षणमपि विमलं तवपदकमलं चिन्तयते नहि देव ।**
**ध्यायति विषयं भवभयनिलयं सम्बद्धं स्वयमेव ।।**
**न कदापि यात्यरोगं म्रियते विपन्नभोगं ।**
**कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।।।२।।**
**त्यक्त्वा तव चरितामृतमनिशं पातुं भवमृगवारि ।**
**दिशि दिशि भ्राम्यति नहि विश्राम्यति ताम्यति ममताधारि।।**
**निजपादपद्मभृङ्गं विमदं विमुक्तसङ्गं ।**
**कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।३।।**
**चञ्चलकपिरिवाभिकं भगवन् भ्राम्यति द्वारे द्वारे ।**
**वानरबन्धो वर्जय बलवद् भ्रष्टं भवकान्तारे ।।**
**निजभावरज्जुबन्धं नर्तय विभो विबन्धम् ।**
**कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।४।।**
**सारमेय इव यत्र तत्र किल स्वच्छन्दं परियाति ।**
**साहं साहं तिरस्कारमपि भुक्तोज्झितमश्नाति ।।**
**लभते न वै विरामं दण्डय शठं निकामम् ।**

कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।५।।
हरिण इवार्तं सुखतृष्णार्तं दिशि दिशि भ्रमति विषण्णम् ।
हे हरिणाक्षिदयित हरिणानुग पालय मरणासन्नम् ।।
निजपादप्रेमनीरं पायय विलुब्धधीरम् ।
कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।६।।
मोहत्रिकूटे श्रितमलकूटे दृष्ट्वा विषयतडागम् ।
दुष्टमतङ्गः श्रितभवरंङ्गः पिबति पयो धृतरागम् ।।
झषराजराजग्रस्तं त्रस्तं भयाद् विषस्तम् ।
कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।७।।
ग्राहग्रस्तमबलमतिदीनं म्रियमाणं परिपाहि ।
अभयसुदर्शननिहतमहाझष कृपानिधे किल त्राहि ।।
कुरु मा विभो विलम्बं दिश ते करावलम्बम् ।
कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।८।।
हे हरहृदयसरोरुहमधुकर प्रणतिं प्रभो गृहाण ।
गिरिधरमनोमतङ्गं निजचरणाङ्कुशतो निगृहाण ।।
आगच्छ रावणारे वस मानसे खरारे ।
कुरु निर्मलं मनो मे कुरु सद्बलं मनो मे।।९।।

**भौमी-** महाकवि प्रभु श्रीराम से प्रार्थना करते हुए कहते हैं हे श्रीराम! घनश्याम! दीनबन्धु श्रीराम! मेरे मन को निर्मल कीजिए और उसे सन्तों के बल से सम्पन्न बनाइए। हे रघुनायक! हे भक्तों के सुखदाता! हे दशरथराजकिशोर! हे कमलनयन! भवभयहारी, विश्व के नेत्रों को चुराने वाले, सूर्यवंश के पताकास्वरूप, भयंकर संसारसागर को पार करने के लिए सेतुस्वरूप प्रभु श्रीराम मेरे मन को निर्मल बनाइए तथा उसे आत्मबल संपन्न बनाइए। हे प्रभो! यह मेरा मन एक भी क्षण निर्मल होकर आपके श्रीचरण का चिन्तन नहीं करता और स्वयं सम्बद्ध होकर भवभय के निवासस्थानरूप संसार के विषय का ही ध्यान करता रहता है इसीलिए यह कभी भी रोगमुक्त नहीं हो पाता और भोगों से थककर यह मरता जा रहा है। अतः इसे निर्मल कीजिए और सत्संग बल से युक्त कीजिए। हे प्रभो! यह दुष्ट मन आपके चरितामृत को छोड़कर संसार की मरुमरीचिका का जल पीने के लिए सभी दिशाओं में भटकता रहता है। कभी विश्राम नहीं लेता। कुटुम्ब की ममता से युक्त नीच मन बहुत ही कष्ट पा रहा है। इसे मद से हीन और अनासक्त बनाकर अपने श्रीचरणकमल का भ्रमर बना लीजिए। इसे निर्मल कर दीजिए और भजन बल से सम्पन्न कर दीजिए। हे वानरों को बन्धु जैसे प्रेम देने वाले प्रभु श्रीराम! मेरा यह कामी मन चञ्चल बन्दर की भाँति ही द्वार-द्वार पर भटक रहा है। संसार वन में भूले हुए इस मन को बलपूर्वक रोक लीजिए। इसके विकार बन्धन को दूर कीजिए और अपनी भाव रस्सी में बाँधकर इसे नचाइए, निर्मल बनाइए और श्रेष्ठ बल से युक्त कीजिए। हे परमेश्वर! मेरा स्वच्छन्द मन कुत्ते के समान ही जहाँ-तहाँ भटक रहा है। अपमान सह-सहकर भी यह जूठन ही चाटता रहता है। कभी विराम नहीं लेता। इस शठ को बहुत दण्डित कीजिए। इसे निर्मल बनाइए और दिव्य बल से सम्पन्न कीजिए। हे

प्रभो! मेरा दुष्ट मन मृगतृष्णा से आर्त होकर हरिण की भाँति व्याकुल हुआ सभी दिशाओं में भटकता रहता है। हे मृगाक्षि सीता जी के पति, हे कपटमृग के अनुगामी श्रीराम मरणासन्न इस मन को पालिए और धीर जनों के विरोधी इस मन को अपने श्रीचरण का प्रेमजल पिला दीजिए और इसे निर्मल बना दीजिए। हे प्रभो! यह दुष्ट हाथी संसार की रंगभूमि पर घूमता हुआ इस मलकूट युक्त मोह त्रिकूट पर विषय सरोवर को देखकर उसका रागात्मक जल पी रहा है। इसे कामरूप ग्राह ने ग्रस लिया है। यह भयभीत होकर नष्ट हो चुका है। इसे निर्मल बनाइए। हे प्रभो! ग्राह से ग्रस्त निर्बल, अत्यन्त दीन, मरणासन्न इस मन मतंग की रक्षा कीजिए। अपने अभयदानरूप सुदर्शन से कामग्राह का वध करके मन गजराज को बचा लीजिए। हे प्रभो! विलम्ब मत कीजिए, अपने श्रीहस्त का अवलम्ब दीजिए। इसे निर्मल बनाइए और सात्त्विक बल से सम्पन्न कीजिए। हे श्रीशंकर के हृदयकमल भ्रमर प्रभु श्रीराम! मेरा प्रणाम स्वीकार कीजिए और मुझ कवि **गिरिधर** के मनमतंग को अपनी चरण की अंकुश रेखा से नियंत्रित कीजिए। हे रावण के शत्रु प्रभु श्रीराम! आइए। हे खरारे! मेरे मन में बस जाइए। इसे निर्मल बनाइए और अपनी भक्ति का बल प्रदान कीजिए।

## गीत संख्या ६

**राघव तव धन्या मर्यादा ।**
**सुरनरमुनिसुखदा गतवादा शमितसमस्तविषादा।।१।।**
**सत्यसन्ध इह धर्मरथी त्वं पालितवैदिकसेतुः ।**
**त्वमिव त्वं ते राम सकलसद्गुणजलधी रघुकेतुः।।२।।**
**परब्रह्म पुरुषोत्तम ईशः सर्वज्ञः स्वयमेव ।**
**स्वीकृतवानथैकनारीव्रतमीड्यं व्रती त्वमेव।।३।।**
**सदाचारचारित्रशीलनिधिरेकस्त्वं सविवेकः ।**
**पतिव्रतास्त्रिभुवने कोटिशः पत्नीव्रतस्त्वमेकः।।४।।**
**सीतातोऽन्या स्वप्नेऽपि स्त्री काचित् त्वया न दृष्टा ।**
**अहो अले नलिनीव्यतिरिक्ता नैव सुमालिः स्पृष्टा।।५।।**
**कुसुमधन्वना स्मरेणापि नो विजितो धन्विधुरीणः ।**
**योषादृक्सायकैर्न विद्धस्त्वं सायकिप्रवीणः।।६।।**
**नालुभ्यः सुरराजदुर्लभे प्राज्ये कौसलराज्ये ।**
**सानुजगृहिणिरितः कण्ठीरव इव काननसाम्राज्ये।।७।।**
**नाकुप्यः कोपितः कुमतिना दशशिरसा कृतसेतुः ।**
**जलधौ लङ्कां गतो हतरिपुर्जगदगमङ्गलहेतुः।।८।।**
**कामक्रोधलोभनामकमथ जितवान् नरकद्वारम् ।**
**नरकान्तक गिरिधरं पाहि नरकाभिमुखं सविकारम्।।९।।**

**भौमी–** अब महाकवि अपने इष्टदेव श्रीराम की मर्यादा का स्तवन करते हुए कहते हैं– हे राघव! देवता

मनुष्य एवं मुनियों को सुख देने वाले, संपूर्ण वाद-विवादों से रहित, समस्त विषादों को नष्ट करने वाले आप श्रीराम की मर्यादा धन्य है। हे प्रभो! इस दृष्ट जगत् में आप ही एकमात्र सत्यसन्ध अर्थात् सत्यप्रतिज्ञ हैं। आप धर्मरथ पर आरूढ़ होकर वैदिक धर्म सेतु का पालन किए हैं। हे श्रीराम आपके समान आप ही हैं। आप समस्त सद्गुणों के महासागर तथा रघुकुल के ध्वज हैं। आप परब्रह्म परमात्मा पुरुषोत्तम अर्थात् क्षर और अक्षर शरीर जीवात्मा से अतीत परम पुरुष, सबके शासक, सर्वज्ञ होते हुए भी स्वयमेव नरलीला रंगमंच पर एक नारीव्रत जैसे कठिनतम व्रत को स्वीकार कर लोकोत्तर आदर्श का पालन कर रहे हैं। हे प्रभो! आप विवेकवान्, सदाचार, चरित्र और शील के एकमात्र निदर्शन हैं। तीनों लोकों में पतिव्रताएँ तो करोड़ों हैं परन्तु पत्नीव्रत तो एकमात्र आप ही हैं। प्रभो! आपश्री ने स्वप्न में भी श्रीसीता जी से अतिरिक्त किसी नारी पर दृष्टि नहीं डाली। अहो भ्रमरश्रेष्ठ! तुमने कमलिनी को छोड़कर अन्य पुष्पों की पंक्ति का स्पर्श भी नहीं किया। तुम विलक्षण भ्रमर हो। हे धन्वियों में धुरीण! तुम पुष्पधन्वा काम के द्वारा भी नहीं जीते गए। हे कुशल बाणधारी! तुम किसी भी नारी के नेत्रबाण से भी कभी नहीं बिद्ध हुए। आप इन्द्र के लिए दुर्लभ स्वर्णसंपदा से पूर्ण अयोध्या के राज पर भी नहीं लुब्ध हुए और सिंह की भाँति अपने छोटे भाई लक्ष्मण और धर्मपत्नी श्रीसीता जी के साथ वन के साम्राज्य में पधार गए। कुबुद्धि रावण द्वारा क्रोध के लिए उकसाए जाने पर भी आप कुपित नहीं हुए और समुद्र में सेतु बाँधकर लंका पर आक्रमण करके त्रिलोकशत्रु रावण का वध करके जड़-चेतन सभी के मंगल के कारण बन गए। हे भगवन्! आपने काम, क्रोध, लोभ नामक तीनों नरकद्वारों को जीत लिया है। अतएव हे नरकान्तक! विकारों से भरे हुए नरक की ओर मुख किए हुए अर्थात् नरक जाने की पूर्ण पात्रता से युक्त मुझ कवि **गिरिधर** को बचा लीजिए, मेरी रक्षा कीजिए।

## गीत संख्या ७

**अभिरम मनो रमावरचरणे।**
**सुरनरमुनिशरणे भयहरणे निजजनतारणतरणे।।१।।**
**बन्धुजीवराजीवसमरुणे सरसशिरीषसवर्णे।।२।।**
**शुकसनकादिभवादिसकरुणे देवधुनीभवकरणे।।३।।**
**गौतमपत्नीपातकदरणे मैथिलिहृदयाभरणे।।४।।**
**हरहृत्सरसि सरोरुहतरुणे कलिमलकलुषविदरणे।।५।।**
**लक्ष्मणभरतसुजीवनकरणे हनुमत्सुखविस्तरणे।।६।।**
**परमहंसमुनिवैष्णववरणे दण्डकविपिनविचरणे।।७।।**
**वनभुवि कपटहरिणमनुसरणे मंगलमोदवितरणे।।८।।**
**चित्रकूटवनशैलविहरणे अशरणगिरिधरशरणे।।९।।**

**भौमी-** अब महाकवि अपने मन को प्रभु श्रीराम के चरणों में रमने के लिए प्रोत्साहित करते हैं–हे मेरे मन! तुम सीतापति श्रीराम के श्रीचरणों में रम जाओ। जो देवता, मनुष्य और मुनियों के आश्रय हैं तथा अपने भक्तों के लिए संसारसागर से तारणार्थ नौका के समान हैं, जो बन्धु पुष्प एवं लालकमल के समान अरुण हैं जो कोमलता में शिरीष पुष्प के समकक्ष हैं, जो शुकाचार्य, सनकादिमहर्षिगण तथा शिव आदि देवगणों के प्रति करुणापूर्ण हैं, जो गंगाजी के जन्मदाता श्री वामन भगवान के भी मूलकारण हैं, जो गौतम ऋषि की पत्नी

अहल्या के पातकों के नाशक तथा मिथिलाधिराज कन्या श्रीसीता जी के हृदय के अलंकार हैं, जो शिवजी के हृदय सरोवर के नवीन कमल तथा कलियुग के मलों और पापों के नाशक हैं, जो लक्ष्मण एवं भरत जी के जीवनदाता तथा श्रीहनुमान् जी के सुखों के विस्तारक हैं, जो परमहंस मुनिगण श्रीवैष्णवों के वरणीय तथा दण्डकवन में विहार करते रहते हैं, जो दण्डकवन की पगडंडियों में कपटमृग मारीच का अनुसरण करते हैं और जो अपने भक्तों के लिए मंगल और प्रसन्नता का वितरण करते हैं, जो चित्रकूट वन और कामद पर्वत पर विहार करते हैं तथा शरणहीन मुझ **गिरिधर** कवि के एकमात्र आश्रय हैं, ऐसे श्रीराम के श्रीचरण में रम जाओ।

## गीत संख्या ८

## ( युगलगीतम् )

**भजे हृदि कोटिकामकमनीयौ सुरनरमुनिनमनीयौ।**
**श्रीसीतारामौ भजे।।१।।**
**पुरहरहृदयसरोजमधुकरौ रतिरतिपतिरमणीयौ।**
**श्रीसीतारामौ भजे।।२।।**
**चपलानन्दपयोदसुन्दरौ विधिहरिहरभजनीयौ।**
**श्रीसीतारामौ भजे।।३।।**
**धृतवरकार्मुकविशिखनिषङ्गौ विमलसतां श्रयणीयौ।**
**श्रीसीतारामौ भजे।।४।।**
**पीतनीलसरसीरुहसुभगौ भगवन्तौ वरणीयौ।**
**श्रीसीतारामौ भजे।।५।।**
**चित्रकूटवनशैलविहरणौ सदा समादरणीयौ।**
**श्रीसीतारामौ भजे।।६।।**
**शरणागतभवभीतिनाशनौ क्वापि न विस्मरणीयौ।**
**श्रीसीतारामौ भजे।।७।।**
**मारुतिलक्ष्मणभरतवन्दितौ सततमनुस्मरणीयौ।**
**श्रीसीतारामौ भजे।।८।।**
**मनसा वाचा तथा कर्मणा कविगिरिधरमननीयौ।**
**श्रीसीतारामौ भजे।।९।।**

**भौमी-** भगवान् श्रीसीतारामजी के भजन करने की प्रतिज्ञा करते हुए महाकवि कहते हैं–मैं करोड़ों रति कामदेवों से सुन्दर देवता, मुनि और मनुष्यों के नमन करने योग्य भगवान् श्रीसीतारामजी का भजन करता हूँ जो त्रिपुरासुर के शत्रु शिवजी के हृदय कमल के भ्रमरस्वरूप हैं तथा रति और काम को रमणीयता जिनसे प्राप्त हुई है, जो बिजली और आनंद के बादल के समान सुन्दर हैं, जो ब्रह्मा, विष्णु तथा शङ्कर के भजनीय हैं तथा जो निर्विकार सन्तों के भी आश्रयणीय हैं, जो पीले–नीले कमलों के समान सुन्दर षडैश्वर्य सम्पन्न भगवत् स्वरूप तथा सबके वरणीय हैं, जो चित्रकूट के वन और पर्वतों पर विहार करने वाले हैं तथा जो सदैव प्राणियों के लिए

आदरणीय हैं, जो शरणागतों के भवभय को नष्ट करने वाले हैं और जो कभी भी कहीं भी भुलाए नहीं जा सकते, जो हनुमान् जी, लक्ष्मण जी, भरत जी द्वारा वन्दित हैं और जो निरंतर अनुकूलता पूर्वक स्मरणीय हैं अर्थात् जिनका प्रतिकूलता से स्मरण करना उचित नहीं है और जो मन से वाणी से तथा कर्म से **गिरिधर** कवि के लिए मननीय हैं ऐसे श्रीसीताराम जी का मैं भजन करता हूँ।

**विशेष–** यह गीत अवधी लोकधुन में निबद्ध है। इसे प्रायशः माताएँ विवाहोत्सव में गाती हैं। उसका आकार यों समझना चाहिए–

''जेहिं दिन राम जनकपुर आए......
देखन आई सारी दुनिया श्रीसीताराम जी भजो........।''

## सन्दर्भश्लोकः

**केचिद् ध्यानपरायणाः सुकृतिनः पारम्परं वै भवाद्**
**भूयिष्ठं समुपासते तु विरजं तन्निर्गुणं निष्क्रियम् ।**
**किन्त्वस्मन्नयनाभिरामविषयः श्यामस्तमालद्युतिः**
**कौसल्यासुकृताब्धिशारदशशी श्रीराघवो राजते।।१।।**

**भौमी–** इस सन्दर्भश्लोक में कवि अपने मनोभावों को व्यक्त करते हुए कहते हैं– कुछ सुकृत् जन ध्यानस्थ होकर जगत् के व्यवहार से अत्यन्त दूर रजोगुण से रहित उस अपूर्व निर्गुण और निष्क्रिय ब्रह्म का भजन करते हैं तो किया करें; किन्तु मेरे नेत्रों के तो विषय बन चुके हें तमाल वृक्ष के समान सुन्दर महारानी कौसल्या के पुण्यसागर को तरंगित करने के लिए शरद् पूर्णिमा के चन्द्रस्वरूप श्रीराघव।

## गीत संख्या ९

**अये मन्मनो नित्यमेवेति गाय**
**नमो राघवाय नमो राघवाय।**
**मते! मे विनिश्चिन्विदं मङ्गलाय**
**नमो राघवाय नमो राघवाय।।**
**इदं जीवमात्रस्य सद्धर्ममूलं**
**इदं घोरसंसारकूपारकूलम्।**
**इदं चानुकूलं श्रुतिर्निर्णिनाय**
**नमो राघवाय नमो राघवाय।।१।।**
**इदं विश्वरोगस्य दिव्यं निदानं**
**तृषार्तस्य चित्तस्य चेदं निपानम्।**
**इदं शन्निधानं स्मृतिर्निश्चिकाय**
**नमो राघवाय नमो राघवाय ।।२।।**

इदं गायतीशः सगौरीगणेशः
इदं ध्यायती स्वानुगश्रीरमेशः।
नमस्यामिदं वक्ति वेधा विधाय
नमो राघवाय नमो राघवाय।।३।।
इदं कौत्यहो कुः पयो रौति चेदं
इदं भाषतेऽग्निर्नभो वक्त्यखेदम्।
इदं वाति वातः सदाशं प्रवाय
नमो राघवाय नमो राघवाय।।४।।
हृषीकैरिदं सन्ततं प्रार्थ्यमानं
इदं प्राणकैः प्राणतश्चार्थ्यमानम्।
इदं पञ्चभूतैर्नुतं कौशलाय
नमो राघवाय नमो राघवाय।।५।।
तमालाब्दनीलाय लीलाधराय
व्रताढ्याय धीराय सीतावराय।
लसत्कर्मणे ब्रह्मणे चिन्मयाय
नमो राघवाय नमो राघवाय।।६।।
जनी राघवो मे पिता राघवो मे
सखा राघवो मे धनं राघवो मे।
न मेऽन्या गती राघवं तं विहाय
नमो राघवाय नमो राघवाय।।७।।
न जानामि मन्त्रं न यन्त्रं न तन्त्रं
न जाने विधिं कञ्चनास्मात् स्वतन्त्रम् ।
अहं मुक्तचिन्तः स्वमस्मै प्रदाय
नमो राघवाय नमो राघवाय।।८।।
नमो राघवायेति मन्त्रं षडर्णं
सदा रामभक्त्येकवर्ण्यं सुवर्णम् ।
गिरा गाय गिरिधरमनोऽस्मिन् निधाय
नमो राघवाय नमो राघवाय।।९।।

**भौमी–** अब अपने आराध्य श्रीराघव को नमस्कार करते हुए कवि अपने प्रिय ''नमो राघवाय'' उद्घोष को आधार बनाकर गीत गा रहे हैं– अरे मेरे मन! 'नमो राघवाय–नमो राघवाय' यही उद्घोष तुम निरन्तर गाते रहो। हे मेरी बुद्धि तुम भी जगत् के मंगल के लिए 'नमो राघवाय' यही उद्घोष निश्चित कर लो। यही उद्घोष जीवमात्र का श्रेष्ठ धर्ममूल है। 'नमो राघवाय' ही संसार सागर का किनारा है। श्रुति ने भी इसी का अनुकूलता

से निर्णय कर लिया है। ' नमो राघवाय' उद्घोष ही विश्व के रोगों की दिव्य ओषधि है। यही उद्घोष प्यास से व्याकुल चित्त के लिए जलाशय है। स्मृति में भी इसी उद्घोष को कल्याणों का कोश निश्चित किया है। इसी उद्घोष को पार्वतीगणेश सहित शिव जी गाते हैं, अपने अनुगामियों सहित भगवान् विष्णु भी इसी का ध्यान करते हैं। ब्रह्मा जी भी श्रीराम की पूजा करके 'नमो राघवाय' कीर्तन करते रहते हैं। 'नमो राघवाय' उद्घोष पृथ्वी करती रहती है। जल अपने प्रवाह में इसी को गाता रहता है। अग्नि अपने स्फुलिंगों में इसी को रटता रहता है। आकाश अपनी सनसनाहट में 'नमो राघवाय' कहता है। वायु सदा बहता हुआ अपनी हरहराहट में 'नमो राघवाय' की टेर लगाता रहता है। इन्द्रियाँ इसी की प्रार्थना करती रहती हैं। प्राण अपने प्राणभूत जीवात्मा से इसी को माँगते रहते हैं। अपनी कुशलता के लिए पृथ्वी, जल, तेज, वायु और आकाश 'नमो राघवाय' कहकर भगवान् श्रीराम को नमन करते रहते हैं। तमाल और बादल के समान नीले, अलौकिक लीलाओं को धारण करने वाले, दिव्य व्रतों से संपन्न सीतापति, श्रेष्ठ कर्मों से युक्त चिन्मय परब्रह्म श्रीराघव को नमस्कार-नमस्कार। श्रीराघव ही मेरे माता, पिता, मित्र और धन हैं। प्रभु राघव को छोड़कर मेरा अन्य गन्तव्य नहीं है। उन्हीं शिशु राघव को नमस्कार है, नमस्कार है। मैं मन्त्र, यन्त्र और तन्त्र कुछ भी नहीं जानता तथा श्रीराघव के अतिरिक्त कोई भी स्वतंत्र विधि मैं नहीं जानता। मैं अपना सबकुछ श्रीराघव को समर्पित करके अब पूर्णतया निश्चिन्त हो चुका हूँ। हे **गिरिधर**! निरन्तर रामभक्तों के द्वारा वरणीय, सुन्दर अक्षरों से युक्त 'नमो राघवाय' यही छः अक्षरों का मन्त्र भगवान् श्रीराम में मन लगाकर गाते रहो।

## सन्दर्भश्लोकः

**मन्दाकिनीपुण्यतटे विहारी सीतासरोजास्यविकासकारी।**
**भग्नत्रिकूटः श्रितचित्रकूटः श्रीराघवो मङ्गलमातनोतु।।१।।**

कवि जगत् के लिए श्रीराघव से मंगल की प्रार्थना करते हुए कहते हैं– श्री मन्दाकिनी के पवित्र तट पर विहार करने वाले श्रीसीता के मुखकमल के विकासक भक्तों के कामक्रोधलोभात्मक कूट को नष्ट करने वाले श्रीचित्रकूटविहारी राघव सरकार जगत् के लिए मंगल का विस्तार करें।

## गीत संख्या १०

**हे चित्रकूटविहारिन् निजं दर्शनमाशुदेयम्।**
**हे रघुनन्दन निजजनचन्दन तूणचापशरधारिन्**
**निजं दर्शनमाशुदेयम्।।१।।**
**वल्कलपटधर जलधरसुन्दर जटामुकुटरुचिकारिन्**
**निजं दर्शनमाशुदेयम्।।२।।**
**सीतानयनचकोरसुधाकर मन्दाकिनितटचारिन्**
**निजं दर्शनमाशुदेयम्।।३।।**
**शङ्करमानसराजमरालक मुनिजनमानसहारिन्**
**निजं दर्शनमाशुदेयम्।।४।।**
**करुणासागर सुन्दरनागर शरणागतसुखकारिन्**
**निजं दर्शनमाशुदेयम्।।५।।**

तरुणतमालपयोदमनोहर        दण्डकदुरितविदारिन्
निजं दर्शनमाशुदेयम्।।६।।
सुरपतिसुतमदहर करुणाकर भववासनाप्रहारिन्
निजं दर्शनमाशुदेयम्।।७।।
रावणसूदनमतमधुसूदन        जनगुणनिकरप्रचारिन्
निजं दर्शनमाशुदेयम्।।८।।
म्रियते दर्शनकृते गिरिधरः पाहि पाहि भयहारिन्
निजं दर्शनमाशुदेयम्।।९।।

**भौमी–** अब कवि प्रभु श्रीराघव से दर्शन की प्रार्थना करते हैं– हे चित्रकूटविहारी प्रभु आप शीघ्र अपना दर्शन दें। हे रघुकुल को आनंद करने वाले अपने भक्तों को आह्लादित करने वाले, तरकश धनुष बाण धारण करने वाले, वल्कलवस्त्रधारी, बरसाती बादल के समान सुन्दर, जटामुकुट की शोभा को बढ़ाने वाले, सीताजी के नेत्रचकोर के चन्द्रमा, मन्दाकिनी के तट पर विहार करने वाले, शिव जी के मन मानसरोवर के राजहंस, मुनिजन के मनों को चुराने वाले, करुणा के समुद्र, सुन्दर तथा चतुर, शरणागतों को सुख देने वाले, नवीन तमाल एवं मेघ के समान सुन्दर, दण्डकवन के पाप को विदीर्ण करने वाले, इन्द्रपुत्र जयन्त का मद भङ्ग करने वाले, करुणा की खान, संसार की वासना को नष्ट-भ्रष्ट करने वाले, रावण का वध करने वाले, मधु के शत्रु भगवान् विष्णु द्वारा भी पूजित, भक्तों के गुणों का प्रचार करने वाले हे प्रभु श्रीराम! **गिरिधर** कवि तो आपके दर्शन के लिए मर रहा है। हे भक्तभयहारिन्! आप मेरी रक्षा कीजिए।

**विशेष–** यह गीत अवधी की लचारी लोकधुन के आधार पर निबद्ध है, जिसके बोल हैं–

**''कैसे धरऊँ मन धीरा, हमार दोउ हीरा निकरि गए''**

## गीत संख्या ११

राघव मम भवभरं व्युदस्य।
हे रविवंशवनजवनभानो मायातमीं निरस्य।।१।।
ममताचपलचकोरीवल्लभमोहचन्द्रमपसारय।
वारय पापोलूककुलं मत्सरस्त्येनमपवारय।।२।।
भजनरीतिनलिनीमपशोकय कुलटामतिं सशोकय।
विमलविरतिकोकीञ्च विशोकय भीतिकुमुदिनीं शोकय।।३।।
रश्मिरथ्य निजकृपारश्मिभिः जगदगमिदं प्रकाशय।
चिरसुप्तं मामपि सम्बोधय नीचनिराशां नाशय।।४।।
गुञ्जय निजानुरागमधुकरं निजपदपद्मे मत्तम्।
कूजय मधुरमनोरथपिकमथ निजगुणगानविमत्तम्।।५।।

भावमयं खगकुलं निरलसं वियति विशुद्ध विनोदय।
गापय प्रीतिकोकिलां किल सुखलोकं प्रभो प्रमोदय।।६।।
निर्विकारमथ सुमनः सुमनः सुमनः सुखं विकासय।
परमानन्दमरन्दभरेण परेश पुनश्च चकाशय।।७।।
मम विवेककिसलयमभिनवय नवीनपयोधरसुन्दर।
शरणागतपञ्जरविरुदं स्मर हे भववारिधिमन्दर।।८।।
स्वप्रपत्तिमयमुषःकालमभिलोकय देव विभातम्।
गिरिधरहृद्‌यगगने उदितः प्रकटय प्रार्थितं प्रभातम्।।९।।

**भौमी–** अब रूपक अलंकार द्वारा भगवान् श्रीराम से प्रार्थना करते हुए कहते हैं– हे राघव! प्रभु श्रीराम मेरे संसारभार को नष्ट कर दीजिए। हे सूर्यवंशरूप कमल के सूर्य श्रीराम! मेरे जीवन में आई हुई माया रूपी रात्रि को निरस्त कर दीजिए अर्थात् दूर भगा दीजिए। ममतारूपिणी चंचल चकोरी के प्रिय मोहरूपी चन्द्रमा को दूर कर दीजिए। पापरूप उल्लुओं के समूह को भगा दीजिए और मत्सररूप चोर को मुझसे दूर कर दीजिए। भजन की पद्धतिरूप कमलिनी को प्रसन्न कीजिए। कुमतिरूपिणी कुलटा को शोकाकुल कीजिए अर्थात् दुर्बुद्धि को हर लीजिए और निर्मल विरतिरूपिणी चक्रवाकी को प्रसन्न कीजिए तथा संसार की भयविडंबना रूप कुमुदिनी को दुःखी कर दीजिए। हे रश्मिरथ्य, अर्थात् रश्मि रथ सूर्य के कुल में प्रकट प्रभु श्रीराम! अपने कृपा किरणों द्वारा इस जडचेतनात्मक जगत् को प्रकाशित कीजिए और चिरकाल से सोये हुए मुझे भी जगा दीजिए और मेरी नीच निराशा को नष्ट कर दीजिए। अपने श्रीचरण में मतवाले मेरे प्रेमरूप भ्रमर को गुञ्जित कर दीजिए अर्थात् गुनगुनवा दीजिए। अपने गुणगान में पागल मेरे मधुरमनोरथरूप कोकिल को कुहका दीजिए। हे प्रभो! परमपवित्र श्रीराम! मेरे भावरूप पक्षिसमूह को आलस्यरहित करके भावनामय आकाश में विनोदित कीजिए, आपविषयक मेरी प्रीतिरूप कोकिला से अपना गुणगान कराइए। मेरे सुख समूह को सन्तुष्ट कीजिए। हे सुमनः अर्थात श्रेष्ठ मन वाले श्रीराम! मेरे विकार रहित सुन्दर मनरूप पुष्प को सुखपूर्वक विकसित कीजिए और हे परमेश्वर! पुनः मेरे मनःपुष्प को परमानंदरूप मकरंद से भरकर सुशोभित कीजिए। हे नवीन बादल के समान सुन्दर, मेरे विवेकरूप पल्लव को नवीन बनाइए और हे भवसागर को मथने के लिए मन्दराचलस्वरूप प्रभु! आप शरणागत के लिए पिंजरे के समान हैं, इस विरुद का भी स्मरण कीजिए। हे प्रभु श्रीराम, देवाधिदेव, अपनी शरणागतरूप इस उषाकाल को निहारिए और मुझ कवि **गिरिधर** के हृदयाकाश में सूर्य के समान उदित होकर मेरे द्वारा प्रार्थित प्रातःकाल को प्रकट कीजिए। अर्थात् प्रभातकाल की संपूर्ण भूमिका मेरे हृदयरूप आकाश में उपस्थित कर दीजिए।

## सन्दर्भश्लोकः

जानीमः परमं ब्रह्म कौसल्योत्सङ्गलालितम् ।
धूलिधूसरसर्वाङ्गं राघवं लघु विग्रहम्।।१।।

**भौमी–** हम तो कौसल्या जी के द्वारा अपनी गोद में लेकर दुलराए जाते हुए सम्पूर्ण अंगों में धूलि से धूसरित बालरूप श्रीराघव को ही परब्रह्म के रूप में जानते हैं।

## गीत संख्या १२

राघव मा कुरु किमपि विलम्बम् ।
अधिभवनिधि मज्जते सपदि मे दिश कररुहावलम्बम्।।१।।
षड्विकारमलकलितमनार्यं पामरपातकपीनम्।
पाहि पाहि पार्वतीनाथ हित! पापपयोनिधिमीनम्।।२।।
शरणागतपालकं तव यशः सद्भ्यः श्रुत्वा यातम्।
अगतिं पतितमिमं परिपालय श्रीपदरजोऽनुयातम्।।३।।
सर्वैर्जगति निरादृतमभिकं शरणागतमघपात्रम्।
प्रांशुपातकं पाहि परमपद गलधृतकलियुगदात्रम्।।४।।
यया करुणया राम रक्षितो गृद्ध्रो जरठजटायुः।
तयैवाद्य पाल्यतामेष निष्पक्षः शीघ्रमघायुः।।५।।
मन्त्रमथो यन्त्रं न च तन्त्रं योगविधिं न हि जाने।
भ्राम्यन्भवाटवीमभि सततं त्वामपि नाथ विजाने।।६।।
लब्ध्वा मानवतनुं भजनमपि विषयी क्वापि न कुर्वे।
त्वयि न दधे क्षणमात्रमपि मनस्तनुरुचिविगणितदूर्वे।।७।।
एतावान्निर्घृणो निरीशो निकृतो निम्नो नीचः।
मयि कपटिनि कुटिले कुमतौ जिह्नेति हरे मारीचः।।८।।
तव गुरुगोत्रजनिर्द्विजबन्धुर्गतदृक् साधनहीनः।
अनेनैव भावेन गिरिधरो रक्ष्यो नितरां दीनः।।९।।

**भौमी-** हे श्रीराघव, कुछ भी विलम्ब मत कीजिए। इस संसार सागर में डूबते हुए मुझको अपने श्रीकर की उँगली का अवलम्ब दे दीजिए। हे पार्वतीपति शिव जी के आराध्य, छः विकारों और मलों से युक्त, असभ्य, नीच, पापों के कारण स्थूल, पापसागर की मछली मुझ जीव की रक्षा कीजिए, रक्षा कीजिए। आप शरणागतों के पालक हैं ऐसा आपका यश महात्माओं से सुनकर आपके श्रीचरणों में आए हुए और आपकी चरणधूलि का अनुगमन करते हुए सभी गतियों से शून्य इस पतित का पालन कीजिए। इस संसार में सबके द्वारा अपमानित कामान्ध, पापों के पात्ररूप, कलिकाल द्वारा गले में काटने वाले हँसिया नामक शस्त्र को धारण किए हुए मुझ बहुत बड़े पापी की रक्षा कीजिए क्योंकि आप परमपद स्वरूप हैं। हे श्रीराम! आपने जिस करुणा से बूढ़े गृद्ध जटायु की रक्षा की थी उसी करुणा से लोक-परलोक दोनों पक्षों से हीन इस पापायु जन की भी शीघ्र रक्षा कीजिए। हे नाथ! मैं मन्त्र, यन्त्र, तन्त्र और योगविधि भी नहीं जानता, यहाँ तक कि संसार के जंगल में दिनरात भटकता हुआ मैं आपश्री का भी तो अपमान करता हूँ। हे प्रभो! मानव शरीर पाकर भी मैं विषयी प्राणी कभी भी आपका भजन नहीं करता, अपनी शरीरकांति से दूर्वादल की भी सुंदरता को लज्जित करने वाले आपश्री में भी एक क्षण भी मैं अपने मन को नहीं लगाता। हे श्रीहरे! मैं इतना निर्दय, अनीश्वरवादी, सभी के द्वारा ठुकराया हुआ निम्नपथगामी नीच हूँ कि मुझ कपटी, कुटिल, कुबुद्धि प्राणी पर तो कपटमृग बना

हुआ मारीच भी लज्जित हो जाता है। हे प्रभो! मैं कवि **गिरिधर** आपके गुरुदेव श्रीवसिष्ठ के गोत्र में जन्मा हूँ। यद्यपि मैं ब्राह्मणोचित कर्मों से हीन होने के कारण द्विजबन्धु अर्थात् अधम ब्राह्मण हूँ, मैं नेत्रहीन और साधनों से भी हीन हूँ, परन्तु आपके गुरुगोत्र में मेरा जन्म हुआ है केवल इसी भाव से आप मेरी रक्षा कीजिए।

## गीत संख्या १३

**कर्हिंचित्तव कृपा मयि भविष्यति प्रभो।**
**या कृपा ते कृपाणीव हन्तुं हरे**
**कर्हिंचिन्मद्रिपून् प्राभविष्यति प्रभो।।१।।**
**या कृपा ते भवत्तोऽपि वल्सलतरा**
**कर्हिंचिन्मय्यनाथे द्रविष्यति प्रभो।।२।।**
**या कृपा हे कृपानाथ निर्जरगवी**
**कर्हिंचिन्मङ्गलं मे स्त्रविष्यति प्रभो।।३।।**
**या कृपा ते कमनकल्पतरुवल्लरी**
**कर्हिंचिन्मत्कृते शम्भविष्यति प्रभो।।४।।**
**या कृपा ते कृपणपाल चिन्तामणिः**
**कर्हि चिन्मद्दरिद्रां दविष्यति प्रभो।।५।।**
**या कृपा ते पुनातीव गङ्गाजगद्**
**कर्हिंचिन्मन्मलान्यभि भविष्यति प्रभो।।६।।**
**या कृपा ते सुमातेव ममतामयी**
**कर्हिंचिन्मद्व्यथामनुभविष्यति प्रभो।।७।।**
**या कृपा ते स्वयं रामसीतामयी**
**कर्हिंचिन्मां विपद्भ्योऽप्यविष्यति प्रभो।।८।।**
**या कृपा ते सुनौकेव भववारिधेः**
**कर्हिंचिद् गिरिधराय प्लविष्यति प्रभो।।९।।**

**भौमी–** अब कवि श्रीराम की कृपायाचना करते हुए प्रार्थना करते हैं– हे प्रभु श्रीराम! मुझ पर आपकी कृपा कब होगी? आपकी जो कृपा तलवार के समान है वह मेरे बाह्य और आन्तर शत्रुओं को मार डालने में कब समर्थ होगी? जो आपकी कृपा आपश्री से भी अधिक वत्सला है वह मुझ अनाथ पर कब द्रवित होगी? हे कृपानाथ! आपकी जो कृपा कामधेनु के समान है वह मेरे लिए कब मंगलरूप दुग्ध को प्रदान करेगी? जो आपकी कृपा सुन्दर कल्पलता के समान है वह मेरे लिए कल्याणों को कब उत्पन्न करेगी? हे दीनों के पालक प्रभु श्रीराम! आपकी जो कृपा चिन्तामणि के समान अभीष्टदायिनी है वह मेरी दर्रिद्रता को कब भस्मसात् करेगी अर्थात् मुझको आपके प्रेमधन से कब सम्पन्न करेगी। हे प्रभो! आपकी जो कृपा गंगाजी के समान सम्पूर्णजगत् को पवित्र करती रहती है वह मेरे मलों को कब नष्ट करेगी? हे प्रभो! आपकी जो कृपा आदर्श माता की भाँति ममतामयी है वह मेरी व्यथा का कब अनुभव करेगी। हे प्रभो! आपकी जो कृपा श्रीसीतास्वरूपा

है वह विपत्तियों से मेरी कब रक्षा करेगी? आपकी जो कृपा भवसागर से पार करने के लिए सुन्दर नौका के समान है वह मुझ कवि **गिरिधर** के लिए कब जहाज बनेगी अर्थात् मुझे पार कब करेगी?

## गीत संख्या १४

**कर्हिचित्तां कृपां मयि करिष्यसि हरे।।**
**रामराजीवलोचन सुगुणवारिधे**
**विमलविज्ञान तामनुसरिष्यसि हरे।।१।।**
**यां समाश्रित्य पारं गजाद्या गता**
**विश्ववारान्निधौ येऽपतन्दुस्तरे।।२।।**
**तामुपासीन एषोऽस्मि पापीष्ठको**
**नाथ रोदिम्यनीशो मले निर्भरे।।३।।**
**परमबर्बरखलः पापिचूडामणिः**
**क्रन्दमानोऽस्म्यनाथः श्लथक्कुस्वरे।।४।।**
**सन्मुखेभ्यो निशम्याथ कीर्तिं शुभाम्**
**तावकीनां मृताऽशोप्यसून् स्वान् भरे।।५।।**
**कुत्र गच्छामि कं वेदये वेदनाम्**
**लब्धजन्मास्मि काले कलौ दुर्भरे।।६।।**
**ज्ञानगर्वोप्यखर्वो महान् मत्सरो**
**दुष्टधीर्दैव बीजं वपाम्यूसरे।।७।।**
**भूरिनिष्किञ्चनोऽसाधनोऽहं जनो**
**घोरसिन्धुं कथं नाथ वै निस्तरे।।८।।**
**हे प्रणतपाल नरपाल सीतापते**
**राम कार्या कृपा पामरे गिरिधरे।।९।।**

**भौमी-** हे श्रीहरे! आप वह कृपा मुझ पर कब करेंगे? हे लाल कमल के समान नेत्र वाले, सद् गुणों के महासागर निर्मल विज्ञान संपन्न प्रभु श्रीराम! उस कृपा का अनुसरण कब करेंगे, जिस कृपा को प्राप्त करके गज– अजामिल आदि भवसागर से पार चले गए, जो अतरणीय भवसिन्धु में गिर पड़े थे। हे नाथ! उसी कृपा का मैंने भी सहारा लिया है जो बहुत बड़ा पापी हूँ। अतएव असमर्थ होकर भयंकर मल में फँसा हुआ रो रहा हूँ। हे प्रभो! परम बर्बर (अन्त्यन्त नीच), खल, पापियों में चूडामणि अर्थात् श्रेष्ठ पापी, असहाय होकर काँपते हुए विकृत स्वर में क्रन्दन कर रहा हूँ। मेरी आशाएँ मर चुकी हैं फिर भी सन्तों के मुख से आपश्री की शुभकीर्ति सुनकर पुनः आशान्वित होकर अपने प्राणों को धारण कर रहा हूँ कि कभी न कभी आपकी मुझ पर कृपा होगी ही। मैं कहाँ जाऊँ? अपनी वेदना किससे कहूँ? क्योंकि मैंने दुर्भर कलिकाल में जन्म लिया है, मुझे ज्ञान का बहुत गर्व है और मेरे मन में बहुत बड़ा मत्सर भी है। दुष्ट बुद्धि वाला मैं ऊसर में बीज बो रहा हूँ जो कभी नहीं अंकुरित होगा। हे प्रभो! मैं अत्यन्त निष्किञ्चन साधनहीन एक जीव हूँ। आप ही बताएँ मैं इस घोर भवसागर से

कैसे पार होऊँ? अन्त में मैं यही कह सकता हूँ कि हे प्रणतों के पालक, सीतापते राजाधिराज श्रीराम! मुझ पामर **गिरिधर** कवि पर ऐसी कृपा की जाय जिससे मैं भवसागर तर जाऊँ।

## गीत संख्या १५

**राम शीघ्रं मयीषत्कृपा क्रियताम्।**
**मनः षड्भिर्विकारैर्न विक्रियताम्।।**
**त्यक्त्वा रागरोषौ सकलजीवशोषौ**
**भवत्पादपद्मं हृदा व्रियताम्।।१।।**
**यावन्तोऽप्यभीष्टाः शरीरसम्बन्धा**
**भवत्येव सर्वैः समाहूयताम्।।२।।**
**अनन्येन मनसा विगतभूरिरभसा**
**भवद्व्यतिरिक्तं निराक्रियताम्।।३।।**
**सत्सङ्गकीर्तनभजनखिन्नसेवा**
**भवत्प्रीत्यर्थं समनुश्रियताम्।।४।।**
**कलिमलविजनितं निखिलदोषराशिम्**
**मारं मारं मनसा निराद्रियताम्।।५।।**
**भवद्भक्तिबाधकसकलदोषजातम्**
**चेतसो बलेन तद् बहिः क्रियताम्।।६।।**
**मनोव्योम्नि भगवन् मनोज्ञमुखचन्द्रमा-**
**श्चक्षुश्चकोरकेण सत्क्रियताम्।।७।।**
**प्राकृतःप्रवञ्चको मलीमयूरव्यंसकः**
**परितः प्रपञ्चोऽपि परिह्रियताम्।।८।।**
**करसरोजयुगलं युगलकृपालसितम्**
**रामभद्र गिरिधरशिरसि ध्रियताम्।।९।।**

**भौमी-** हे श्रीराम! मुझ पर थोड़ी कृपा की जाय जिससे मेरा मन छहों विकारों से विकृत न हो। संपूर्ण जीवों को सुखाने वाले राग और रोष को छोड़कर मेरे हृदय द्वारा आपके श्रीचरणों का वरण किया जाय। जितने भी इस शरीर के मनभाए संबंध हैं वे आपश्री में ही समाहित हो जायें। सम्पूर्ण उद्वेग से रहित मेरे अनन्यमन द्वारा आपसे अतिरिक्त सभी सम्बन्धियों को दूर कर दिया जाय। आपश्री के सन्तोष के लिए ही सत्संग, कीर्तन, भजन और विकलांग जनों की सेवा की जाय। कलिमल से उत्पन्न हुई सम्पूर्ण दोषराशियों को बार-बार नष्ट करके मेरे मन द्वारा उनका निरादर किया जाय। आपके भजन के बाधक सम्पूर्ण दोषों को बलपूर्वक चित्त से बाहर किया जाय। मेरे मन के आकाश में विराजमान आपश्री के सुन्दर मुखचन्द्र का मेरा मानसिक नेत्रचकोर समादर करता रहे। यह प्रकृति के सम्बन्धों से युक्त जीवात्मा को ठगने वाला, मलिन, मयूर के समान धूर्त

संसार का प्रपञ्च भी मेरे द्वारा छोड़ दिया जाय। हे रामभद्र! आप दोनों श्रीसीताराम जी की कृपा से सुशोभित आपका करकमल युगल मुझ कवि **गिरिधर** के शिर पर रख दिया जाय।

## सन्दर्भश्लोकः

**स्वर्नीता कृपया यया च गणिका मुक्ता गजाद्या यया**
**मध्येवारिधि शैलसेतुरवितो वन्या यया पालिताः।**
**मद्वारे च विलम्बसे रघुपते तामेव कुर्वन् कृपां**
**मद्दुर्दैवदवाग्निनैव च कृपा कादम्बिनी शोषिता।।१।।**

हे प्रभु श्रीराम! आपकी जिस कृपा ने रूपजीवा गणिका वेश्या को भी स्वर्ग दे दिया, जिस कृपा ने गज, गृद्ध आदि को मुक्त कर दिया, आपकी जिस कृपा ने सागर के बीच में पत्थरों का सेतु बँधा दिया , जिस कृपा ने असभ्य वानरों और भालुओं का भी पालन किया हे रघुपते! आप उसी कृपा को करने में मेरी बारी आने पर विलंब कर रहे हैं। लगता है कि मेरे दुर्भाग्यरूप दावाग्नि ने भी आपकी कृपा मेघमाला को भी सुखा दिया है।

## गीत संख्या १६

**कथय किम् कृपा विस्मृता राम।**
**उत्तरकोसलपते दिशोत्तरमभिनवजलधरश्याम।।१।।**
**स्तम्भात्प्रकटीभूय नृहरिवपुषा प्रह्लादस्त्रातः।**
**वैदिकधर्मं द्विषन्विनिहतोऽसुरस्तदीयस्तातः।।२।।**
**प्रणतपाल हे तथा पाल्यतां मम कल्पिता प्रतिज्ञा।**
**भवेदन्यथा जगति श्रिता जगदीश्वर ते दुर्भिज्ञा।।३।।**
**निजरिपुबन्धुःकिल विभीषणो भवता त्रातो भृत्यः।**
**सम्प्रति कलिनाप्यहं ताडितः शिरसि विकल्पितनृत्यः।।४।।**
**विपटा सदसि भवन्ती द्रुपदसुता भवता सन्त्राता।**
**सम्प्रति मम वृत्तिर्हे भगवन् किल पाञ्चाली जाता।।५।।**
**धावसि दण्डकवने प्रसभमनुगच्छन्कपटकुरङ्गम्।**
**मम राघव सम्प्रति नियच्छ चञ्चलमथमनस्तुरङ्गम्।।६।।**
**रासि राम भरताय पादुकां चित्रकूटगिरिचारिन्।**
**देहि तथावलम्बनं मह्यं सीतामनोविहारिन्।।७।।**
**हंसि मैथिलीमपाजिहीर्षुं रघुवर दनुजविराधम्।**
**हर्तुकाममथमतिं कलिं क्षमसे किं लसदपराधम्।।८।।**
**हे अदभ्रकरुणासागर नटनागर दूषणदूषण।**
**शरणागतं पाहि गिरिधरमपि रामभद्र नृपभूषण।।९।।**

**भौमी-** हे श्रीराम! आप बताएँ आपने अपनी कृपा को क्यों भुला दिया है? हे उत्तर कोसल के स्वामी नवीन बादल के समान श्यामल प्रभु श्रीराम उत्तर दीजिए। आपने नृसिंह रूप धारण करके, खम्भे से प्रगट होकर प्रह्लाद की रक्षा की। वैदिक धर्मद्रोही उस असुर हिरण्यकशिपु का वध किया जो भक्त प्रह्लाद का पिता था। हे प्रणतपाल! उसी प्रकार मेरी प्रतिज्ञा का पालन कीजिए नहीं तो हे जगदीश्वर! इस संसार में आपका अपयश फैल जाएगा। आपने अपने शत्रु रावण के भाई भक्त विभीषण की रक्षा की। इस समय अनेक प्रकार से नाचता हुआ मैं भी कलिकाल द्वारा शिर पर ताडित हुआ हूँ। अर्थात् रावण ने विभीषण की छाती पर प्रहार किया था तब आपने उसकी रक्षा की थी; जबकि कलिकाल ने मेरे शिर पर प्रहार किया है फिर भी मेरी रक्षा नहीं कर रहे हैं। आपने कृष्णावतार में राजसभा में निर्वस्त्र होती हुई द्रौपदी की रक्षा की तो हे भगवन्! इस समय मेरी वृत्ति भी पाञ्चाली हो गई है अर्थात् बहुत लोगों पर निष्ठा करने लगी है। अतः इसकी रक्षा करके इसे एकनिष्ठ बनाइए। हे श्रीराघव! आपश्री दण्डकवन में कपटमृग के पीछे दौड़ते हैं और उसका वध करते हैं। इस समय मेरे मनरूप चञ्चल अश्व को नियंत्रित कर लीजिए। हे श्रीराम! आप श्रीचित्रकूट में विराजमान श्रीभरत को पादुका प्रदान करते हैं, हे सीता जी के मन में विहार करने वाले प्रभु, उसी प्रकार मुझे भी कोई न कोई अवलम्ब दीजिए। हे रघुवर! आप श्रीसीता जी के हरण की इच्छा कर रहे विराध नामक राक्षस का वध करते हैं तो फिर मेरी बुद्धि के हरण की कामना कर रहे अपराधी कलिकाल को क्यों क्षमा कर रहे हैं। हे असीम करुणा के सागर, चतुर लीलानट, दूषण के भी शत्रु, राजाओं के अलंकार श्रीरामभद्र, शरण में आए हुए मुझ कवि **गिरिधर** की भी रक्षा कर लीजिए।

## गीत संख्या १७

**जय राम सगुण करुणानिधान**
**जय विधिहरिहरकृतचरितगान।।१।।**
**जय तनुरुचिविगणितकोटिकाम**
**जय रामराम नयनाभिराम।।२।।**
**जय दशरथसुकृतपयोधिचंद्र**
**शोभासमुद्र जय रामचन्द्र।।३।।**
**जय अजगवखण्डन जानकीश**
**जय जनकसुखद कोसलाधीश।।४।।**
**जय पितृनिदेशकृतविपिनगमन**
**जय चित्रकूटभयकूटशमन।।५।।**
**जय सुरपतिसुतमदहरणबिशिख**
**जय दनुजगहनवनदहनत्रिशिख।।६।।**
**जय दण्डकपावनकरणचरण**
**जय कपटहरिणकृतशमनुसरण।।७।।**
**जय प्रणतपाल मारुतिकृपाल**
**जय दशमुखवंशकरालकाल।।८।।**

**जय कोसलनृप राजीवनयन**
**जय कृतगिरिधरहृदरण्यशयन।।९।।**

**भौमी–** अब महाकवि श्रीराम का जय-जयकार कर रहे हैं– हे सगुणसाकार, ब्रह्म, करुणानिधान श्रीराम आपकी जय हो। ब्रह्मा, विष्णु और शिव द्वारा जिनके चरित्र का गान किया गया है ऐसे प्रभु श्रीराम आपकी जय हो। अपनी शरीरशोभा से करोड़ों कामों की निंदा करने वाले, परशुराम के भी नेत्रों को आनन्द देने वाले प्रभु राम आपकी जय हो। हे दशरथ जी के पुण्यक्षीरसागर के चन्द्रमा आपकी जय हो। हे शोभा के सागर श्रीरामचन्द्र आपकी जय हो। हे शिवधनुष तोड़ने वाले सीतापति, जनक को सुख देने वाले, अयोध्यापति श्रीराम आपकी जय हो, जय हो। पिता की आज्ञा पालन करते हुए वनगमन करने वाले प्रभु आपकी जय हो, चित्रकूट के भयसमूहों को नष्ट करने वाले प्रभु आपकी जय हो। इन्द्रपुत्र जयन्त के अहङ्कार नाशक बाणधारी प्रभु आपकी जय हो और राक्षसवन को भस्म करने के लिए अग्निस्वरूप प्रभु आपकी जय हो। दण्डकवन को पवित्र करने वाले श्रीचरण कमल, कपटमृग का अनुसरण करने वाले प्रभु श्रीराम आपकी जय हो, जय हो। हे प्रणतों के पालक, श्रीहनुमान् जी पर कृपा करने वाले प्रभु आपकी जय हो। हे रावणवंश के भयानक काल आपकी जय हो। हे अयोध्याधिपति, हे राजीवनयन, हे कवि **गिरिधर** के हृदयरूप वन में शयन करने वाले प्रभु श्रीराम आपकी जय हो, जय हो।

## गीत संख्या १८

**वरदीय मदीयमनो नियच्छ**
**निजपादपद्मभक्तिं प्रयच्छ।।१।।**
**हे शङ्करमानसराजहंस**
**हे हंसवंशहंसावतंस।।२।।**
**हे सीताननचन्दिरचकोर**
**जनचित्तचोर हतदनुजघोर।।३।।**
**हे रघुकुलकैरवकमनचन्द्र**
**सुमनोऽभिरमय मम रामचन्द्र।।४।।**
**मदमान महां ममतां जहातु**
**संकल्पशून्यमथ भवति भातु।।५।।**
**न कथञ्चन मां विकरोतु राम**
**भजनं करोतु वितनोतु धाम।।६।।**
**चञ्चलकपिमिव निगृहाण प्रभो**
**चरणे बधान न पुषाण विभो।।७।।**
**अतिनीचमिदं पतितं पुनीहि**
**मम पापवनं लवतत लुनीहि।।८।।**

**हे भरतभद्र भवभाव भाहि**
**गिरिधरं धनुर्धर पाहि पाहि।।९।।**

**भौमी–** हे वरदान देने वाली सीता जी के पति श्रीराम मेरे मन को नियंत्रित कीजिए। मुझे अपने श्रीचरणकमल की भक्ति दीजिए। हे श्रीशंकर के मनमानस सरोवर के राजहंस, हे सूर्यवंश के सूर्य, श्रीदशरथ के भी आभूषण, हे सीता जी के मुखचन्द्र के चकोर, हे भक्तों के चित्त को चुराने वाले, हे घोर राक्षसों का वध करने वाले, हे रघुकुलरूप कुमुदवन को विकसित करने वाले चन्द्रमा, हे श्रीरामचन्द्र मेरे सुन्दर मन को रमा दीजिए। मेरा यह मन मदमान और संसार की बहुत बड़ी ममता को छोड़ दे तथा सभी संकल्पों से शून्य होकर आपके समीप ही सुशोभित हो। हे श्रीराम! यह मन किसी भी प्रकार मुझे विकृत न करे, आपका भजन करे और दिव्य तेज का विस्तार करे। हे प्रभो! चञ्चल बंदर के समान दुष्ट इस मेरे मन को निगृहीत कीजिए। हे सर्वव्यापक! इसे अपने चरणों में बाँध लीजिए, इसका पोषण मत कीजिए। हे लव के पिताश्री! इस अत्यन्त नीच पतित मन को पवित्र कीजिए और मेरे पाप के वन को काट डालिए। हे श्रीभरत का कल्याण करने वाले, हे श्रीशंकर द्वारा पूजित प्रभु श्रीराम! आप प्रकाशित होइए। हे धनुर्धर! मुझ कवि **गिरिधर** की रक्षा कीजिए, रक्षा कीजिए।

## गीत संख्या १९

**श्रृणु हे राजीवनयन राम रावणारे।**
**भ्रमति भवभवाटवीमभीक्ष्णमक्षियुगलहते।।**
**मयि द्रव दयानिधे प्ररूढषड्विकारे।।१।।**
**कोऽपि नो सहायकः पिता न माता स्वामी सखा।**
**बन्धुरो निमज्जति भवाम्बुधावपारे।।२।।**
**निराधारे निराचारे निरासारे निराकारे।**
**विषीदामि भगवन्निलीनघोरकारे।।३।।**
**कं ब्रजामि कं भजामि कं वदामि कं श्रयामि।**
**दूरचुल्लुकोऽस्मि जातो भ्राम्यन् द्वारे द्वारे।।४।।**
**श्रुत्वा तुलसिदासमुखात् सुस्वभावं दाशरथेः।**
**कथं कथञ्चिदागतोऽहं महाराजद्वारे।।५।।**
**कामक्रोधलोभनक्रमहामत्स्यसङ्कुले ।**
**भयाकुले विभेमि भीषभीमपारावारे।।६।।**
**झटिति सम्प्रसार्यतामाजानुबाहुर्महाबाहो।**
**देहि मे करावलम्बनं प्रभो खरारे।।७।।**
**खलु विलम्ब्य महाराज राजराज दीनबन्धो।**
**पाहि पाहि मां निमग्नं वारिधावसारे।।८।।**
**शोषणेभ्यो वैभवविकारपूगपोषणेभ्यो।**
**गिरिधरं गिरीश रक्ष रक्ष राक्षसारे।।९।।**

**भौमी-** अब महाकवि अपने आराध्य के प्रति दैन्य प्रकट करते हुए कहते हैं– हे राजीवलोचन! रावण के शत्रु सुनिए– दोनों नेत्रों से हीन संसार के वन में भटकते हुए छहों विकारों से युक्त मुझ साधक पर आप द्रवित हो जाइए; क्योंकि आप दयानिधि हैं। इस अपार सागर में डूबते हुए मेरे विषय में पिता–माता, स्वामी, मित्र, भाई आदि कोई भी सहायक नहीं है। भगवन्! घोर बन्दीगृह से युक्त, आधाररहित, आचरणरहित, श्रेष्ठ आकारों से रहित, और तत्त्वहीन इस संसार में मैं बहुत कष्ट पा रहा हूँ। प्रभो! किसके पास जाऊँ? किसका भजन करूँ? किससे कहूँ? किसका आश्रय लूँ? द्वार–द्वार पर भटकता हुआ मैं, एक चुल्लू जल भी नहीं पा रहा हूँ। गोस्वामी तुलसीदास जी के मुख से आपश्री दशरथनंदन का सुन्दर स्वभाव सुनकर मैं आप महाराज के द्वार पर किसी प्रकार आ गया हूँ। हे भयों के भी ईश्वर प्रभु श्रीराम! काम, क्रोध, लोभरूप घड़ियाल और महामत्स्यों से युक्त भयाकुल भयंकर इस संसारसागर में मैं बहुत डर रहा हूँ। हे महाबाहो! हे खर के शत्रु! सर्वसमर्थ प्रभु श्रीराम! अपने आजानुबाहु शीघ्र बढाइए और मुझे अपने श्रीहस्त का अवलम्बन दीजिए। हे महाराज! हे राजाओं के राजा! हे दीनबन्धु श्रीराम! अब विलंब मत कीजिए। असार संसारसागर में डूबे हुए मुझ दास की रक्षा कीजिए, रक्षा कीजिए। हे वाणी के ईश्वर! हे राक्षसों के शत्रु भगवान् श्रीराम! संसार के विकार समूहों के पोषक यह चकाचौंध केवल शोषण ही कर रहे हैं। इसलिए मुझ **गिरिधर** की इनसे रक्षा कीजिए, रक्षा कीजिए।

## गीत संख्या २०

**जय जय राम सीताराम।**
**भवमहाम्बुधि मथनमन्दर सहजसुन्दरश्याम।।१।।**
**तनुविभाजितनवलजलधरकोटिशितशतकाम।**
**वामभागविराजमानधरित्रिसुताभिराम।।२।।**
**कटिनिषङ्गशिलीमुखावलिकलितकरशरचाप।**
**दिनकरान्वयदीप दिनकरकोटिकोटिप्रताप।।३।।**
**शिशुदिवाकरचारुचपलाबल्गुबल्कलवस्त्र।**
**प्रणतजनरक्षणनिपुणचण कलितसद्गुणशस्त्र।।४।।**
**शिरसि मृदुलप्रसूनमण्डितजटामुकुटमनोज्ञ।**
**विमलबोध विशुद्धविग्रह महितकाननभोग्य।।५।।**
**सततसीतालक्ष्मणार्चित सुभगचरणसरोज।**
**विजितरतिऋतुराजसहचरकोटिकोटिमनोज।।६।।**
**पतितपावनचरितचर्चित वन्दनीयचरित्र।**
**सुकविमानसहंसमङ्गल विश्ववार्धिवहित्र।।७।।**
**मैथिलीमञ्जुलमनोहरवदनचन्द्रचकोर।**
**प्रणतजनसंकटनिकरहर कोसलेन्द्रकिशोर।।८।।**
**ब्रह्म परमेश्वर नरेश्वर नलिनसुमसुकुमार।**
**विहर गिरिधरमनसि चिन्मय चित्रकूटविहार।।९।।**

**भौमी-** अब रूपक ताल में निबद्ध गीत गाते हुए महाकवि अपने आराध्य श्रीसीताराम जी की जय–जयकार करते हैं। भवसागर को मथने के लिए मन्दरस्वरूप, स्वभाव से सुन्दर, श्याम शरीर हे श्रीराम! हे श्रीसीताराम! आपकी जय हो, जय हो। अपने शरीर की कांति से नवीन बादल एवं अगणित कामदेवों को जीतने वाले, वामभाग में विराजमान पृथ्वीपुत्री जानकी जी को आनंद देने वाले प्रभु आपकी जय हो। कटितट पर बाणों से भरे हुए दो तरकश धारण करने वाले, श्रीहस्त में धनुषबाण धारण किए हुए, सूर्यकुल के दीपक एवं कोटि–कोटि सूर्यों के समान प्रताप वाले प्रभु, आपकी जय हो। करोड़ों बालसूर्यों एवं बिजली के समान शोभा से संपन्न पीतवल्कलवस्त्र धारण किए हुए एवं प्रणतजनों के रक्षण की कुशलता से युक्त, श्रेष्ठ सद्‌गुण एवं शस्त्रों को धारण करने वाले प्रभु, आपकी जय हो। शिर पर कोमल पुष्पों से युक्त सुन्दर जटामुकुट धारण किए हुए, निर्मलज्ञानसम्पन्न, तीनों गुणों से अतीत विशुद्ध शरीर एवं वनभोग्य विषयों को भी सम्मानित करने वाले प्रभु, आपकी जय हो। श्रीसीतालक्ष्मण जी से निरन्तर पूजित सुन्दर श्रीचरणकमल अपनी इस मूर्तिजयी शोभा से रति, वसन्त एवं कामदेव को जीतने वाले प्रभु श्रीराम आपकी जय हो। पतितपावन जैसे सुयश से सुशोभित वन्दनीय चरित्रवाले श्रेष्ठ कवियों के मनरूप मानससरोवर के हंस, भवसागर के लिए जलपोत स्वरूप मंगलमूर्ति श्रीराम आपकी जय हो। श्रीसीता जी के मधुर एवं मनोहर मुखचन्द्र के चकोर भक्तों के संकट समूह को नष्ट करने वाले दशरथ राजकिशोर आपकी जय हो–जय हो। हे परब्रह्म परमेश्वर, हे राजाधिराज, हे कमल से भी सुकुमार शरीर, हे चिन्मय चित्रकूट में विहार करने वाले प्रभु श्रीराम मुझ **गिरिधर** के मन में विहार कीजिए।

## गीत संख्या २१

**कं ब्रवीमि वेदनां विना भवन्तमीश्वरम्।**
**कः शृणोति सङ्कटं सतामृते श्रियोवरम्।।१।।**
**एक एव वैभवान्प्रपन्नपालनव्रतः।**
**सत्यसन्ध एक एव दीनरक्षणे रतः।।२।।**
**त्वां विहाय कस्य हृद्यशेषशेषसंस्थितिः।**
**कस्य हृद्यहो प्रपन्नपालविरुदसंस्मृतिः।।३।।**
**कोऽभवत्प्रतिश्रुतिं ह्यवन्मनुष्यकेसरी।**
**केन निर्विशेष चिन्तनेऽप्यरक्षि वै करी।।४।।**
**कोऽपुनात्स्वपादधूलितः शिलामघायुषम्।**
**सञ्चकार कः सुतो यथा जडं जटायुषम्।।५।।**
**कश्चखाद सम्प्रसस्य भिल्लभामिनीफलम्।**
**कस्य नाम मारुतेरभूत् समग्रसम्बलम्।।६।।**
**केन बन्धुताडितः कपिस्सखेव पालितः।**
**केन वैरिबन्धुरप्यमोघवैर्लालितः।।७।।**
**प्रस्तराश्च केन लीलयाम्बुधौ हि तारिताः।**
**केन नाम जापिनां ग्रहा अपि प्रतारिताः।।८।।**

**षड्विकारिशेखरं कुबोधभारभृत्खरम्।**
**को गिरा गृणाति गिरिधरं विना धनुर्धरम्।।९।।**

**भौमी–** आपश्री सर्वसमर्थ प्रभु श्रीराम के बिना मैं अपनी वेदना किससे कहूँ। सीतापति आप श्री के बिना सन्तों का संकट कौन सुनता है? इस त्रिलोकी में शरणागतों के पालन का व्रत लेने वाले एकमात्र आप ही हैं। एकमात्र आप ही दीनों की रक्षा में तत्पर और सत्यप्रतिज्ञ हैं। भला आपको छोड़कर कौन संपूर्ण भक्तों के पास उपस्थित रहता है? अरे! आपको छोड़कर किसके हृदय में शरणागत विरुद का स्मरण रहता है। भला आपको छोड़कर भक्त की प्रतिज्ञा की रक्षा करने के लिए कौन नरसिंह बना? बिना किसी के नाम चिन्तन करने पर भी आपके अतिरिक्त किसने गजराज की रक्षा की। आपके अतिरिक्त पापिनी शिला को अपनी चरणधूलि से किसने पवित्र किया? और आपके अतिरिक्त अधम गृद्ध जटायु का किसने पुत्र की भाँति दाह संस्कार किया? आपके अतिरिक्त भील्लिनी के फल किसने खाये, आपके अतिरिक्त किसका नाम श्रीहनुमान् जी का संबल बना। आपके अतिरिक्त अपने भाई से प्रताड़ित वानर सुग्रीव को किसने पाला? आप के अतिरिक्त शत्रु के भाई विभीषण को अमोघ वर देकर किसने सम्मानित किया? आपके अतिरिक्त किसने समुद्र में पत्थरों को तैराया और किसने अपने नामजापकों के सभी ग्रहों को दूर किया? आप ही बताइए, आपश्री धनुर्धारी राघवेन्द्र राम के बिना छहों विकारों से युक्त, पापियों के मुकुटमणि अज्ञानभार को ढोते गधे के समान मुझ **गिरिधर** को अपनी वाणी से बुलाकर किसने सम्मानित किया? केवल आपने और किसी ने नहीं।

## गीत संख्या २२

**रामभद्र रोदिमि पतन् भवसागरमध्ये।**
**उपवसामि धनदालयेऽपीन्धनं न विन्ध्ये।।१।।**
**त्वादृक् सुपतितपावनो नो श्रुतो न दृष्टः।**
**मादृक् पतितशिरोमर्णिन विधात्रा सृष्टः।।२।।**
**अनन्वयं ह्युभयत्र वै पश्याब्जविलोचन।**
**त्वमिव त्वमहमिवाहकं भवभीतिविमोचन।।३।।**
**मया त्वादृशे स्वामिने दत्तं निजपृष्ठम्।**
**दण्डयसे न तथापि किं मां पापवरिष्ठम्।।४।।**
**सति सर्वज्ञशिरोमणौ नाथे च समर्थे।**
**पतितस्सीदति सेवकः संकटे निरर्थे।।५।।**
**स्वातिघने सतिवारिदे चातकोऽपि म्रियते।**
**सति सिंहे तस्यार्भको जम्बुकेन हृयते।।६।।**
**भवति कामरिपुवन्दिते किल नृत्यति कामः।**
**किं प्रभवति दिवसेश्वरे रजनीपरिणामः।।७।।**
**शीघ्रमेहि करुणानिधे कौतुकं विलोचय।**
**तर्जय कालमिमं कलिं शोकञ्च विमोचय।।८।।**

गिरिधरमानसमन्दिरे प्रतितिष्ठ खरारे।
विहर दिवानिशि सञ्चरन्नघनाशमघारे।।९।।

**भौमी–** हे रामभद्र! मैं भवसागर में गिरता हुआ रो रहा हूँ। मैं कुबेर के भी भवन में उपवास कर रहा हूँ और मुझे विन्ध्याचल में भी जलाने के लिए लकड़ी भी नहीं मिल रही है। हे प्रभो, आपके समान पतितपावन न सुना गया न देखा गया और मेरे समान भी पतित शिरोमणि विधाता के द्वारा रचा ही नहीं गया। हे कमललोचन! आप दोनों ओर अनन्वय देखिए अर्थात् यदि आपके समान कोई पतितपावन नहीं है तो मेरे समान कोई पतित भी नहीं है। हे भवभयहारी श्रीहरि आपके समान आप ही हैं तो मेरे समान मैं ही हूँ। मैंने आप जैसे स्वामी को पीठ दी है फिर भी आप मुझ सबसे बड़े पापी को क्यों नहीं दंडित करते हैं। आश्चर्य है आप जैसे सर्वज्ञशिरोमणि समर्थ स्वामी के रहते हुए भी यह सेवक निरर्थक संकट में पड़कर कष्ट पा रहा है। अरे, स्वाति के मेघ जैसे जलदाता के रहने पर भी चातक पानी के विना मर रहा है। सिंह के उपस्थित होते हुए भी उसका बच्चा गीदड़ के द्वारा चुराया जा रहा है। शङ्कर द्वारा पूजित आपश्री के उपस्थित रहने पर भी मेरे आगे काम नर्तन कर रहा है। सूर्य के उपस्थित होने पर भी रात्रि का परिणाम (अन्धकार) क्यों समर्थ हो रहा है? क्या यह उचित है? हे करुणानिधान श्रीराम शीघ्र आइए और यह कौतुक देखिए। इस कलिकाल को तर्जना दीजिए और मेरा शोक दूर कर दीजिए। हे खरदूषण के शत्रु श्रीराम! मुझ कवि **गिरिधर** के मानस मन्दिर में प्रतिष्ठित होइए और पापहारी हरि मेरे पापों को नष्ट करते हुए मेरे मनमन्दिर में दिवानिशि विहार कीजिए।

## गीत संख्या २३

रघुनन्दन राघव राम हरे
जय राम हरे सीताराम हरे।।
जय तनुजितशतशतकाम हरे
जय नीलसरोरुहश्याम हरे।
जय भवभयविषदविराम हरे
जय राम हरे सीताराम हरे।।१।।
जय कोमलश्यामशरीर हरे
रघुवीर हरे रणधीर हरे।
जय नरपतिललितललाम हरे
जय राम हरे सीताराम हरे।।२।।
जय रघुकुलकैरवचन्द्र हरे
जय शोभासुगुणसमुद्र हरे।
जय जनलोचनाभिराम हरे
जय राम हरे सीताराम हरे।।३।।
जय रविकरनिन्दकवस्त्र हरे
जय खलगणनाशकशस्त्र हरे।

जय सुन्दरसुभगनिकाम हरे
जय राम हरे सीताराम हरे।।४।।
जय शङ्करमानसहंस हरे
जय दिनकरकुलावतंस हरे।
जय सीतावर सुखधाम हरे
जय राम हरे सीताराम हरे।।५।।
जय दशरथराजकुमार हरे
जय शिरिषकुसुमसुकुमार हरे।
जय राघव पुण्यप्रणाम हरे
जय राम हरे सीताराम हरे।।६।।
जय दशमुखकालकराल हरे
जय सेवकसज्जनपाल हरे।
जय शीलसकलगुणधाम हरे
जय राम हरे सीताराम हरे।।७।।
जय कोसलमञ्जुलभूप हरे
जय भग्नविनतभवकूप हरे।
जय पूरितनिजजनकाम हरे
जय राम हरे सीताराम हरे।।८।।
जय कटितटलसितनिषङ्ग हरे
जय चरणसरोरुहरङ्ग हरे।
जय गिरिधरदृग्विश्राम हरे
जय राम हरे सीताराम हरे।।९।।

**भौमी-** हे रघुनन्दन, हे राघव, हे श्रीराम, हे सीताराम, श्रीहरि आपकी जय हो। अपनी शोभा से करोड़ों कामों को जीतने वाले, नील कमल के समान श्यामल और संसार की विपत्तियों के विरामस्थल हे श्रीराम! आपकी जय हो। हे कोमलश्यामशरीर, हे रघुवीर, हे रणधीर हे राजाओं में सुन्दर रत्न श्रीराम, आपकी जय हो। हे रघुकुलकुमुद के चन्द्रमा! हे शोभा और सद्‌गुणों के महासमुद्र! हे भक्तों के नेत्रों को आनंद देनेवाले श्रीराम! आपकी जय हो। हे सूर्यकिरणों के निन्दक पीताम्बरधारी, हे खलों को नष्ट करने वाले दिव्यशस्त्रों से संपन्न हे सुन्दरों में भी सुन्दर, काम के निषेधक प्रभु श्रीराम आपकी जय हो। हे शिव जी के मन मानस के सरोवर के हंस, हे सूर्यकुल के आभूषण, हे संसार की इच्छाओं से रहित, हे सीतापति श्रीराम आपकी जय हो। हे दशरथ जी के ज्येष्ठ राजकुमार, शिरीष पुष्प के समान सुकुमार पवित्र प्रणाम श्रीराम, आपकी जय हो। हे रावण के कराल काल, हे सेवकसज्जनों के पालक, शील आदि श्रेष्ठ गुणों के भवन श्रीराम आपकी जय हो, जय हो। हे श्री अयोध्या के श्रेष्ठ राजा, हे भक्तों के भवकूपों के नाशक, निजजनों की कामनाओं के पूर्ण करने वाले प्रभु

राम आपकी जय हो। हे कटितट पर तरकस सुशोभित करने वाले, अपने श्रीचरणों में भक्तों को आनंद देने वाले और **गिरिधर** कवि के नेत्रों में विश्राम करने वाले श्रीराम आपकी जय हो, जय हो।

## गीत संख्या २४

**गीयतां रघुपति हि श्रीरामः सीतालोचनमनोऽभिरामः।।१।।**
**शङ्करमानसमञ्जुलहंसः हंसवंशवनरुहकलहंसः।।२।।**
**धृतकरतलशायकवरचापः कोटिकोटिरविसदृशप्रतापः।।३।।**
**मुनिगणगीतसुमङ्गललीलः वेदपुराणविदितगुणशीलः।।४।।**
**वर्धितकौसल्यासुखसिन्धुः भरतशत्रुहरलक्ष्मणबन्धुः।।५।।**
**श्यामसरोरुहजलदशरीरः परमहंसदयितो रघुवीरः।।६।।**
**मारुतिमानसमञ्जुमरालः श्रीराघवः प्रणतकुलपालः।।७।।**
**दशमुखकदनप्रबलभुजदण्डः कालकरालसदृशकोदण्डः।।८।।**
**ब्राह्मणधेनुसुजनहितकारी गिरिधरमानसभवनविहारी।।९।।**

**भौमी-** उन रघुपति श्रीराम का गुणगान करना चाहिए जो सीता जी के नेत्र और मन के आनंददाता हैं जो शिव जी के मन-मानस सरोवर के सुन्दर हंस तथा सूर्यवंश रूप कमल को विकसित करने के लिए स्वयं बालसूर्य स्वरूप हैं। जिन्होंने करकमल में धनुष-बाण धारण किए हैं, जिनका प्रताप करोड़ों-करोड़ों सूर्यों के समान है, जिनकी मंगलमयी लीलाओं का मुनिगण गान करते हैं, जिनके गुण और स्वभाव वेदों और पुराणों में प्रसिद्ध है, जिन्होंने कौसल्या जी के सुख महासागर को तरङ्गित किया है और जो भरत, लक्ष्मण, शत्रुघ्न के बड़े भैया हैं जिनका शरीर नीले कमल और बादल के समान सुन्दर है, जो परमहंसों को प्रिय और परमहंस महात्मा जिन्हें प्रिय हैं जो त्यागवीरता, दया वीरता, विद्या वीरता, पराक्रम वीरता तथा धर्म वीरता से उपलक्षित होकर रघुकुल के एकमात्र वीर हैं जो श्रीहनुमान के मनमानस के राजहंस तथा शरणागतों के पालक हैं। जिनकी भुजाएँ रावण के दशों शिरों को काटने में समर्थ हैं और भयंकर काल ही जिनका धनुष है और जो ब्राह्मण, गौ और सन्तों के हितकारी तथा **गिरिधर** कवि के मानस भवन में निरन्तर विहार करते रहते हैं, ऐसे प्रभु श्रीराम का गुणगान करते रहना चाहिए।

## गीत संख्या २५

**मङ्गलानि तव हे रघुनन्दन**
**करुणाकर सज्जनकुलचन्दन।।१।।**
**कटिनिषङ्गकरकार्मुकशायक**
**भाग्यविधायक जनसुखदायक।।२।।**
**तरुणतमालजलदसमविग्रह**
**कृपानिधान विहितखलनिग्रह।।३।।**
**शिवसर्वस्व चरित्रमनोहर**
**रणकौशलचकितीकृतहरिहर ।।४।।**

शरणागतपालक भवभञ्जन
कृपानिधान सुजनकुलरञ्जन।।५।।
मर्यादापुरुषोत्तम राघव
सदाभक्तभवसागरवाडव ।।६।।
श्रीसीतावर दीनदयालो
लक्ष्मणवन्दित परं कृपालो।।७।।
मारुतिसेवितचरणसरोरुह
मधुपविनिन्दकसुभगशिरोरुह ।।८।।
परमीश्वर सुखमङ्गलकारिन्
गिरिधरमानसविपिनविहारिन् ।।९।।

**भौमी-** हे रघुनन्दन, हे करुणा की खान, हे सज्जन कुल को आनन्द देने वाले, हे कटि में तरकस तथा श्रीहस्त में धनुष बाण धारण करने वाले, हे भाग्य विधाता, हे भक्तों के सुखदाता, हे नवीनतमाल तथा बादल के समान श्रीविग्रह, करुणा के कोश एवं दुष्टों के दंडदाता, हे शिव जी के सर्वस्व रूप मनोहर चरित्रों से संपन्न तथा अपनी युद्धकुशलता से विष्णु और शिव को चकित करने वाले, शरणागतों के पालक, संसार भार को नष्ट करने वाले, कृपा के खजाना, तुम सज्जन समूह को आनंद देने वाले, मर्यादा पुरुषोत्तम रघुवंशियों में श्रेष्ठ, सदैव भक्त के भवसागर को सुखाने हेतु वाडवाग्निस्वरूप, सीतापति, दीनों पर दया करने वाले, लक्ष्मण जी के द्वारा वन्दित, हे परमकृपालु, हे प्रभो, हे हनुमान जी द्वारा सेवित श्रीचरणकमल, भ्रमरों को भी निंदित करने वाले, काले घुँघराले केशों से युक्त, हे परमेश्वर, हे सुखों और मंगलों को करने वाले, **गिरिधर** कवि के मनरूपवन में विहार करने वाले, भगवान् श्रीराम, आपका मंगल हो, मंगल हो।

## गीत संख्या २६

ध्यायतां जलदसुन्दरश्यामः
तनुसुषमाजितशतशतकामः ।।१।।
दशरथसुकृतपयोनिधिचन्द्रः
परमानन्दसुधासुखसान्द्रः ।।२।।
शरणागतपालनशुभशीलः
शिवसनकादिकथितनवलीलः ।।३।।
श्रीसीतामुखचन्द्रचकोरः
कुशलः कोसलराजकिशोरः ।।४।।
कारुणिकः श्रुतिसम्मतकर्मा
वैदिकधर्ममहितवरवर्मा ।।५।।
कलित दिव्यमङ्गलसुखसिन्धुः
जनवत्सलो दीनकुलबन्धुः।।६।।

**निशितविशिखमण्डितकोदण्डः**
**कामहस्तिकरसमभुजदण्डः ।।७।।**
**भारतभाग्यनवाम्बरभानुः**
**दनुजमहावनदहनकृशानुः ।।८।।**
**भवभयसङ्कटशोकविरामः**
**कृतगिरिधरमानसविश्रामः ।।९।।**

**भौमी-** अपनी शरीर की शोभा से अनेक कामों को निंदित करने वाले महाराज दशरथ के पुण्यरूप क्षीरसागर के चन्द्रमा, परमानंद रूप अमृत एवं अनुकूल वेदनीय सुख के घनीभूत विग्रह, शरणागतों का पालन ही जिनका कल्याणमय स्वभाव है, जिनकी नवीन लीलाओं का शुकाचार्य और सनकादि गान करते हैं। जो परम कारुणिक हैं, जो वेद सम्मत कर्म करने में ही विश्वास करते हैं, वैदिक धर्म ही जिनका सुन्दर कवच है, जो दिव्य मंगल और सुख के महासागर हैं, जो भक्तवत्सल तथा दीनजनों के एकमात्र बन्धु हैं, जिनका धनुष नुकीले बाण से सुशोभित है, जिनकी भुजाएँ कामदेव के हाथी की सूँड के समान हैं, जो भारतभाग्यरूप नवीन आकाश के सूर्य हैं, जो राक्षसकुल रूप महावन को भस्म करने के लिए अग्नि स्वरूप हैं, जो संसार के भयसंकट और शोक के अभाव के स्थान हैं, जो **गिरिधर** कवि के मन में विश्राम करते हैं ऐसे नवीन बादल के समान श्याम भगवान श्रीराम का ध्यान करना चाहिए। राम का गुणगान कीजिए, राम का ही ध्यान कीजिए।

## गीत संख्या २७

**सपदि किल रमय मनो मम राम**
**नीचनिरङ्कुशनिकृतनिरादृतमिदं दमय श्रीराम।।१।।**
**हे हरहृदयसरोजमधुपवर**
**रघुवर करुणासिन्धो।।२।।**
**शीघ्रं मनोगजं नियच्छ**
**चरणाङ्कुशतो जनबन्धो।।३।।**
**क्षणमपि नो तिष्ठति भवत-**
**श्चरणे बहुमलं तनोति।।४।।**
**वारं वारं सुस्मृतवारं**
**जीवमिदं विकरोति।।५।।**
**व्रणयति हृदयं गतभयमदयम्**
**नहि शिक्षणं शृणोति।।६।।**
**भुक्तोज्झिता न हो विषयान्**
**श्वेवेदं सदा विवृणोति।।७।।**
**हे हनुमत्सारङ्गपयोधर**
**मैथिलिहृदयललाम ।।८।।**

**शरणागतं गिरिधरं पायाः**
**प्रणतहृदयविश्राम ।।९।।**

**भौमी–** हे श्रीराम! मेरे मन को शीघ्र ही रमा दीजिए। इस नीच, अपमानित, अनुशासन के अंकुश से रहित, संसार से ठुकराए हुए मन का दमन कीजिए। हे शंकर जी के हृदयकमल के भ्रमरश्रेष्ठ, करुणा के महासागर, सज्जनों के बन्धु रघुवर श्रीराम इस मन मतंग को अपने चरण के अंकुश से शीघ्र ही नियन्त्रित कीजिए। हे प्रभो! यह एक भी क्षण आपके श्रीचरण में स्थिर नहीं रहता, निम्नकोटि के मल का विस्तार करता रहता है। बारम्बार वासनारूप वारांगना का स्मरण करके इस जीवात्मा को भी विकृत करता है। हे प्रभो! यह निर्दय मेरा मन निर्भीक होकर मेरे हृदय को घायल करता रहता है। किसी की शिक्षा भी नहीं सुनता। अहो! कुत्ते की भाँति भोगकर छोड़े हुए विषयों का ही वरण करता है। हे हनुमान्‌रूप चातक के स्वातिघन श्रीराम, हे सीताजी के हृदय के श्रीरत्न, प्रणतों के हृदय में विश्राम करने वाले प्रभु! शरण में आए हुए मुझ **गिरिधर** की रक्षा कीजिए।

## सन्दर्भश्लोकः

**सीतारामौ तदनुभरतो लक्ष्मणो वायुसूनुः**
**श्रीवाल्मीकिस्तदनुतुलसीदासनामा कवीन्द्रः।**
**वन्द्यायोध्या रघुपतिपदैरङ्कितैश्चित्रकूटो**
**लोके शेते नवसुकृतिनो रामभक्त्यै जयन्ति।।१।।**

**भौमी–** श्रीसीताजी, भगवान श्रीराम अनन्तर श्रीभरत, लक्ष्मण, श्रीहनुमान्, महर्षि वाल्मीकि, गोस्वामी तुलसीदास, वन्दनीया श्रीअयोध्या, श्रीराम के श्रीचरण से अंकित श्रीचित्रकूट ये नौ (९) सुकृज्जन तीनों लोकों में श्रीराम भक्ति के लिए उत्कृष्ट उपकरण के रूप में विराजमान हैं।

## गीत संख्या २८

**जयति राघवप्रिया सीता महितजनकसमेतसीता।**
**लसदवधसाकेतसीता जयति राघवप्रिया सीता।।१।।**
**आदिशक्ती रामभक्तिः रामपदपरमानुरक्तिः।**
**ब्रह्ममयमायाभिव्यक्तिः विश्ववन्द्यसती पुनीता जयति राघवप्रिया सीता।।२।।**
**गोसुरगवीगव्यदेहा विहितरघुवरपदस्नेहा हरधनुर्मदखण्डनेहा।**
**चक्रवर्तिवधू विनीता जयति राघवप्रिया सीता।।३।।**
**चतुरमिथिलाधिपकिशोरी राममुखचन्दिरचकोरी।**
**रुचिविजितरतिरमागौरी मूर्तिरिवकृपा प्रणीता जयति राघवप्रिया सीता।।४।।**
**राघवेण समं विहर्तुम् भूभरं किल समाहर्तुम्।**
**वनजुषां भवभयं हर्तुम् वनमिता वनिताऽवनीता जयति राघवप्रिया सीता।।५।।**

चित्रकूटविहारदक्षा प्रणतजनरक्षैकदीक्षा।
कृतपुरन्दरपुत्ररक्षा आर्यनारीगुणपरीता जयति राघवप्रिया सीता।।६।।
कृतहुताशनमध्यवासा क्षपितसेवकमनस्त्रासा।
विहतलंकापतिदुराशा वरदवल्लभमनसिनीता जयति राघवप्रिया सीता।।७।।
पवनसुतसौमित्रिमाता राममहिषी जगत्ख्याता।
सिद्धिरिव रघुराजिराता भगवती भगवत्प्रतीता जयति राघवप्रिया सीता।।८।।
विशदवेदपुराणगीता संहितागमकाव्यगीता।
आदिकवितुलसीसुगीता सततगिरिधरगिरा गीता जयति राघवप्रिया सीता।।९।।

**भौमी-** जनक के सहित हल की रेखा को सम्मानित करने वाली, श्रीअवध एवं साकेत को सुशोभित करने वाली, श्रीराघव की धर्मपत्नी श्रीसीताजी की जय हो। आदिशक्ति श्रीरामभक्तिस्वरूपिणी, श्रीराम की परम अनुरक्तिस्वरूपा, स्वयं परब्रह्मस्वरूपिणी, भगवान श्रीराम की साक्षात् कृपामय प्रस्तुति, समस्त संसार में वन्दनीय पवित्र सती सीता जी की जय हो। पृथ्वीरूप कामधेनु का गव्यरूप जिनका शरीर है अर्थात् जो पृथ्वी से प्रकट हुई हैं, जिन्होंने श्रीराम के चरणकमल में स्नेह किया है, जिनकी चेष्टा से शिव जी के धनुष का मद खण्डित हुआ ऐसी विनम्र चक्रवर्ती दशरथ जी की बड़ी पुत्रवधू सीता जी की जय हो। चतुर महाराज जनक की राजकिशोरी श्रीराम के मुखचन्द्र की चकोरी, अपनी शोभा से रति, लक्ष्मी और गौरी को भी जीतने वाली मूर्तिमयी श्रीराम की कृपा सीता जी की जय हो। श्रीराम के साथ विहार करने के लिए भूभार को समेटने के लिए, वनवासियों का भवभय हरने के लिए, युवती होकर भी पृथ्वी पर पधारकर वनवास स्वीकार करने वाली श्रीसीता जी की जय हो। चित्रकूट के विहार में कुशल, प्रणतजनों की रक्षा को ही अपनी दीक्षा मानने वाली, इन्द्रपुत्र जयन्त की प्राणरक्षा करने वाली, भारतीय नारी के सम्पूर्ण गुणों से युक्त सीताजी की जय हो। अग्नि के मध्य निवास करने वाली भक्तों के मन का त्रास नष्ट करने वाली लंकापतिरावण के दुराशा को नष्ट करने वाली, वरदान देने वाले अपने प्राण वल्लभ श्रीराम के मनोमंदिर में विराजमान श्रीसीता जी की जय हो। पवनपुत्र और लक्ष्मण जी की माँ जगत् विख्यात श्रीराम की पत्नी, रघुकुल के राजा श्रीराम को जनक जी द्वारा सिद्ध के समान ही प्रदान की हुई भगवान श्रीराम की एकमात्र विश्वासपात्र रूपा भगवती सीता जी की जय हो। वेद–पुराणों द्वारा संहिता और काव्यों द्वारा जिन्हें निरन्तर गाया गया, जिनको आदिकवि वाल्मीकि और तुलसीदास जी ने गाया, ऐसी मुझ कवि **गिरिधर** की वाणी के गान का विषय बनी भगवती सीता जी की जय हो।

## गीत संख्या २९

जयति रघुकुलतिलकरामः।
आप्तकामः पूर्णकामः छविविनिन्दितकोटिकामः।।१।।
जानकीहृदयाभिरामः निटिलनयनमनोभिरामः।
प्रणतजननयनाभिरामः निखिलराजकुलाभिरामः।।२।।
अमलमरकतमणिश्यामः सजलमञ्जुलघनश्यामः।
विमलयामुनजलश्यामः नवलदूर्वादलश्यामः।।३।।

अमृतकरकरनिकरहासः मैथिलीहृदयाधिवासः।
विहितमुनिसरसिजविकासः श्रीकरः श्रीहृल्ललामः।।४।।
शिशुमिहिरकरपीतपटधर पापशरकरकटिशराकर।
सततनिजजनभीतिघनहर हरहरात्मजकृतप्रणामः।।५।।
मुनिवधूदुरितापहारी गिरिशकार्मुकभङ्गकारी।
परशुराममदापहारी दशरथार्तिहरोऽविकामः।।६।।
चित्रकूटविहारभावन विहितदण्डकविपिनपावन।
कृतकनकहरिणानुधावन खगशवरिकाभयविरामः।।७।।
महितमारुततनयपृष्ठः कपिसखो रिपुबन्धुनिष्ठः।
रणरतो विदुषां वरिष्ठः दशमुखान्तकरोऽविरामः।।८।।
कोसलापतिरीड्यचरितः पदपयोरुहप्रकटसरितः।
गिरिधरेण गिरामुखरितः गीयते सीताभिरामः।।९।।

**भौमी–** समस्त कामनाओं को प्राप्त किये हुए एवं भक्तों की सभी इच्छाओं को पूर्ण करने वाले, अपनी शोभा से कोटि–कोटि कामों की निन्दित करने वाले रघुकुल तिलक श्रीराम की जय हो। श्रीसीता जी के हृदय को आनन्द देने वाले, जिनके मस्तक पर नेत्र हैं ऐसे शिव के मन को रमाने वाले, प्रणतजनों के नेत्रों को आनन्द देने वाले, सम्पूर्ण राजवंशों के आनन्ददाता श्रीराम की जय हो। नवीन मरकतमणि के समान श्यामल, सुन्दर वर्षाकालीन बादल के समान श्यामल, शरदकालीन यमुना जल के समान श्यामल, कोमल दूर्वादल के समान श्यामल श्रीराम की जय हो। अमृतस्रावी चन्द्रमा के किरणों के समान हासवाले, सीताजी के हृदय में निवास करने वाले, मुनिजनरूप कमल के विकासक दिव्य शोभा को प्रस्तुत करने वाले, सीता जी के हृदय रत्न श्रीराम की जय हो। बालसूर्य के समान पीतवस्त्र धारण करने वाले, हाथ में धनुष बाण एवं कटि में तरकस से सुशोभित, अपने भक्तों के सघन भय को हरने वाले, शिव एवं शिवजी के पुत्र कार्तिकेय और गणपति के भी प्रणम्य श्रीराम की जय हो। अहल्या के पाप को हरने वाले, शिवजी का धनुर्भङ्ग करने वाले, परशुराम के मद को भङ्ग करने वाले, श्रीदशरथ के आर्तिनाशक, विकृत कामनाओं से रहित श्रीराम की जय हो। श्री चित्रकूट में विहार से प्रसन्न, दण्डक वन को पवित्र करने वाले, कपटमृगमारीचि के पीछे–पीछे दौड़ने वाले, जटायु और शबरी के भय के अवसान स्थान श्रीराम की जय हो। श्री हनुमान् की पीठ को सम्मान देने वाले, सुग्रीव के मित्र शत्रुबन्धु विभीषण में भी विश्वास और निष्ठा रखने वाले, संग्राम में कुशल, विद्वानों में श्रेष्ठ, रावण के विनाशकारी, स्वयं अन्त से रहित श्रीराम की जय हो। अयोध्यापति पवित्र चरित्र से सम्पन्न, वामनरूप में अपने श्रीचरण से गङ्गा जी को प्रकट करने वाले, श्रीसीताभिराम भगवान् राम का कवि **गिरिधर** द्वारा भी संस्कृत भाषा में मुखरित होकर गुणगान किया जा रहा है, जय श्री सीताराम।

## गीत संख्या ३०

जयति रघुपतिभक्तभरतः।
रामप्रेमप्रयागभरतः रामनामसुयागभरतः।।१।।

रामप्रेममयावतारः रामसेवाधर्महारः।
रामभक्तिसुधैकसारः रामपदपाथोजनिरतः।।२।।
खड्गधाराव्रतमहीपः दिनकरान्वयरत्नदीपः।
सततकृतराघवसमीपः विषमतमविषविषयविरतः।।३।।
अवधसुखवैभवविरागी रामचन्द्रपदानुरागी।
विरहसिंहासनसुरागी प्रभुवियोगविदग्धसुरतः।।४।।
नग्नपदगतचित्रकूटः भगवदीयसुभावकूटः।
शिरसिकल्पितजटाजूटः रामसीताभक्तिभरितः।।५।।
नदन्नन्दिग्रामवासी दर्भशयनगुहानिवासी।
राम राम रटन्नुदासी नयननिर्गलदश्रुसरितः।।६।।
पादुकानृपसचिववर्यः सततनिन्दितजननिकार्यः।
निशिदिवार्चितलक्ष्मणार्यः राघवं प्रणिधाय पुरतः।।७।।
विहितताम्रदृगश्रुजातः परिरुदन्शत्रुघ्नताातः।
नामजापकपारिजातः राममेव विभाव्य परितः।।८।।
भ्रातृभावसुभक्तिसीमा भरतनामा रामप्रेमा।
गिरिधरं सुखयेत्सभूमा माण्डवीपतिरीड्यचरितः।।९।।

**भौमी-** श्रीराम प्रेम के प्रयागरूप, श्रीराम नाम महायज्ञ, श्रीराम भक्त भरत जी की जय हो। जो श्रीराम प्रेम के ही अवतार हैं, श्रीराम सेवा ही जिनके हृदय का हार है, श्रीराम भक्तिरूप अमृत ही जिनका सार-सर्वस्व है ऐसे श्रीराम चरणकमल में निरत भरत जी की जय हो। खड्गधाराव्रतियों के महाराज, सूर्यवंश के रत्नमय दीपक निरन्तर श्रीराघव की समीपता करने वाले, अत्यन्त भयङ्कर विषयरूप विष से विरक्त भैया भरत की जय हो। श्री अवध के सुख-वैभवों से विरक्त, श्रीरामचन्द्र के चरणकमल में अनुरक्त एवं विरह के सिंहासन में आसक्त तथा भगवान् श्रीराम के वियोगाग्नि में संसार के भोग को भष्म करने देने वाले भरत जी की जय हो। नग्न चरणों से चित्रकूट प्रस्थान करने वाले, भगवदीय भावों के शिखरस्वरूप शिर पर जटाजूट धारण किये हुये, श्रीराम-सीता की भक्ति से भरे हुए भरतजी की जय हो। नन्दिग्राम में वास करके, श्रीराम विरह में क्रन्दन करते हुये भूमि में खोदकर बनाई हुई गुफा में कुश बिछाकर शयन करने वाले, विषयों से उदासीन रहकर श्रीराम राम रटते हुये अपने आँखों से आँसुओं की नदी बहाने वाले भरत जी की जय हो। अपने समक्ष श्रीराघव को उपस्थित करके पादुका महाराज के श्रेष्ठ मन्त्री की भूमिका निभाने वाले, माँ कैकेयी के कुकृत्यों की सदैव निन्दा करने वाले एवं रातदिन लक्ष्मण जी के बड़े भैया श्रीराम की पूजा करने वाले भरत जी की जय हो। शत्रुघ्न के बड़े भ्राता, श्रीराम नाम जापकों के लिये कल्पवृक्ष स्वरूप, सर्वत्र श्रीराम की ही भावना करके निरन्तर अपने लाल आँखों से आँसू बहाकर फूट-फूट कर रो रहे भरत जी की जय हो। माण्डवी के पति, स्तुति करने योग्य चरित्र वाले, भ्रातृत्व और भक्ति की सीमा, भरत नामक श्रीरामप्रेम, प्रभु श्रीराम के अत्यन्त निकटतम परिकर भावसे भरत मुझ **गिरिधर** को सुखी कर दें।

## गीत संख्या ३१

जयति वै लक्ष्मण उदारः।
रामलक्ष्यमनः प्रसारः प्रथितलक्ष्मणनामसारः।।१।।
शेषिहरिशेषावतारः तनुविनिन्दितकर्णिकारः।
धृतरजितसमभुवनभारः सुमित्रादशरथकुमारः।।२।।
पीतचम्पककमलवर्णः रुचिविजितहिमगिरिसुवर्णः।
रामचन्द्रचरित्रकर्णः भवमहाम्बुधिकर्णधारः।।३।।
तूणशायकचापधारी कुणपकुलदर्पप्रहारी।
जनकसंशयशोकहारी नामरामानुजप्रचारः।।४।।
रामसेवारससुयोगः त्यक्तकोसलराज्यभोगः।
हतसुजनभवभीमरोगः सकलवैष्णवहृदयहारः।।५।।
रामसेवासुखविहारः जानकीवत्सलाधारः।
चित्रकूटहृदेकहारः दनुजसूदनसूत्रधारः।।६।।
उर्मिलापतिरतिविसङ्गः जानकीपदपद्मभृङ्गः।
रामसेवामात्ररङ्गः प्रभाव्रीडितकोटिमारः।।७।।
रामरणनिधिबाहुसेतुः दशमुखान्वयधूमकेतुः।
विबुधसुजनानन्दहेतुः शक्रजित्सरसिजतुषारः।।८।।
जीवजगदाचार्यवर्यः बलकदर्थीकृतकदर्यः।
सततसेवितराघवार्यो भवतु हृतगिरिधरविकारः।।९।।

**भौमी–** श्रीरामरूप लक्ष्य में जिनका मन प्रसरित रहता है, जिन्होंने लक्ष्मण नाम के सारतत्त्व को प्रकट किया ऐसे उदार लक्ष्मण की जय हो। जो शेषी श्रीराम के शेष अर्थात् सेवकरूप अवतार हैं, जिन्होंने अपनी शोभा से कर्णिकार पुष्प को जीत लिया है, जिन्होंने धूलि कण के समान पृथ्वी के भार को धारण किया है, ऐसे महारानी सुमित्रा और महाराज दशरथ के सुपुत्र श्रीलक्ष्मणकुमार की जय हो। पीली चम्पा और पीले कमल के समान सुन्दर, अपनी शोभा से स्वर्ण को भी जीतने वाले तथा श्रीरामचन्द्र के चरित्र को ही अपने कानों का विषय बनाने वाले, संसारसागर के कर्णधारस्वरूप लक्ष्मण जी की जय हो। तरकस–धनुष–बाण धारण करने वाले, राक्षस कुल के अहङ्कार को नष्ट करने वाले, महाराज जनक के संशय और शोक को मिटा देने वाले, जगत् में रामानुज नाम से विख्यात श्रीलक्ष्मण की जय हो। श्रीराम सेवा का रस ही जिनका सुन्दर सुयोग है, जिन्होंने श्रीराम सेवा के लिये ही श्रीअवध का राज्यभोग छोड़ दिया है और जिनके द्वारा भक्तजनों के भयङ्कर सांसारिक रोग नष्ट कर दिये गये हैं, ऐसे सभी वैष्णव जनों के हृदयहारस्वरूप लक्ष्मण जी की जय हो। श्रीरामसेवा में ही जो अपना सुखविहार मानते हैं, जो सीता जी के वत्सल रस के आश्रयालम्बन हैं, ऐसे श्री चित्रकूट के हृदयहारस्वरूप, राक्षसों के विनाश के सूत्रधार लक्ष्मण जी की जय हो। उर्मिला के पति संसार के रति से अत्यन्त अनासक्त, श्री सीताजी के चरण कमल के भ्रमर, श्रीरामसेवा में ही आनन्द की अनुभूति करने वाले, अपनी कान्ति से करोड़ों कामदेवों को लज्जित करने वाले लक्ष्मण जी की जय हो। श्री राम के युद्ध

सागर में जिनकी भुजा ही सेतु बनी, ऐसे रावणवंशरूप वंशवन के लिये अग्नि, देवता और सज्जनों के आनन्द के एकमात्र कारण तथा इन्द्रजित् मेघनादरूप कमल के लिये साक्षात् ओला श्रीलक्ष्मण की जय हो। जीवजगत् के श्रेष्ठ आचार्य, अपने बल से दुष्टों को समाप्त करने वाले, निरन्तर अपने बड़े भ्राता श्रीराघव जी की सेवा करने वाले, कुमार श्रीलक्ष्मण मुझ कवि **गिरिधर** के विकारों को समाप्त कर दें।

## गीत संख्या ३२

**जयति हनुमानाञ्जनेयः।**
**योगिधेयः ज्ञानिगेयः भवविभावितभागधेयः।।१।।**
**परममङ्गलभजनकीर्तनसकलकलिमलकुलनिकृन्तन।**
**पतितपावनहृदयचन्दन पवननन्दन नामधेयः।।२।।**
**जातरूपगिरीन्द्ररूपित विपुलदिनकरकुलसरुपित।**
**नेति नेति निगमनिरूपित खलविरुपितरूपधेयः।।३।।**
**परमधीरः महावीरः बज्रवरवानरशरीरः।**
**हृदयधृतरघुवंशवीरः समरधीरो विधिविधेयः।।४।।**
**रामभक्तशिवावतारः सकलगुणमङ्गलागारः।**
**मैथिलीवात्सल्यसारः विपुलवीर्यबलोऽप्रमेयः।।५।।**
**शैलधारी ब्रह्मचारी रामलक्ष्मणमोदकारी।**
**जानकीसन्तापहारी दलितनिशिचरचयोऽजेयः।।६।।**
**गोष्पदितजलनिधिरशङ्कः दनुजकाननकृतातङ्कः।**
**होलिकाकृतकनकलङ्क रोषपावकसमाधेयः।।७।।**
**दशवदनकुलकदनशीलः वेदविश्रुतविशदलीलः।**
**रामदूतवरः सुशीलः समरजीवितमागधेयः।।८।।**
**परंवैष्णवचक्रवर्ती रामभक्तजनानुवर्ती ।**
**रामभक्तिरसप्रवर्ती सदा गिरिधरगिरा गेयः।।९।।**

**भौमी-** योगियों के ध्येय और ज्ञानियों के ज्ञेय तथा शिव जी भी जिनके भाग्य की प्रशंसा करते हैं ऐसे अञ्जनानन्दवर्धन हनुमान् जी की जय हो। जिनका भजन और कीर्तन परम मङ्गलमय है, जो संपूर्ण कलिमलों को नष्ट करने वाले हैं, ऐसे पतितपावन श्रीराम के हृदय को शीतल करने वाले पवन पुत्र हनुमान् की जय हो। जिनका स्वरूप स्वर्ण पर्वत के समान तथा जो अनेक सूर्यों के समान प्रकाशमान हैं, नेति–नेति कहकर वेदों ने जिनका निरूपण किया है, ऐसे खलों को विकृत करने वाले भीमरूप संपन्न हनुमान् जी की जय हो। ऐसे परमवीर वज्र के समान वानरशरीर, अपने हृदय में रघुवीर श्रीरामजी को विराजमान कराने वाले, युद्ध में स्थिर, ब्रह्मा जी के भी गुरु हनुमान् जी की जय हो। श्रीरामभक्त शङ्कर जी के अवतार, संपूर्ण गुण और मङ्गल के भवन, सीताजी के वात्सल्य के आलम्बन, अनन्तबल और पराक्रम से संपन्न, प्रमाणों से भी परे हनुमान् जी की जय हो। हाथ में पर्वत लिये हुए बालब्रह्मचारी श्रीरामलक्ष्मण को आनन्दित करने वाले, सीताजी के संताप को

हरने वाले, राक्षसों के संहारकर्ता अजेय हनुमान् जी की जय हो। जिन्होंने सागर को गाय का खुर जैसा बना दिया और जिन्होंने राक्षसवन में आतंक फैलाया तथा जिन्होंने स्वर्ण की लङ्का की होली जलाई, ऐसे श्रीसीताजी के क्रोधाग्नि के समाधानकर्ता हनुमान् जी की जय हो। जिनका स्वभाव ही रावण के कुल का विनाशक बना, जिनकी लीलाएं वेदों में प्रसिद्ध हैं ऐसे युद्ध में मेघनाद की वीरघातिनी शक्ति से मूर्च्छित सुमित्रानन्दन लक्ष्मण जी को जीवित करने वाले सुशील रामदूत हनुमान् जी की जय हो। ऐसे वैष्णव श्रेष्ठों के चक्रवर्ती श्रीरामभक्तों का अनुगमन करने वाले, श्रीरामभक्तिरस के प्रवर्तक और **गिरिधर** कवि की वाणी से सदैव ही गेय श्रीहनुमान् जी की निरन्तर जय हो।

## गीत संख्या ३३

**जयति वाल्मीकिः कवीन्द्रः।**
**भार्गवो वै भूसुरेन्द्रः चरणपङ्कजनतसुरेन्द्रः।।१।।**
**व्याधसङ्गात् कुस्वभावः सप्तऋषिदर्शनप्रभावः।**
**रामनामजपानुभावः पुनर्ब्रह्म महामुनीन्द्रः।।२।।**
**प्रथमकविताजन्मदाता आदिकविरथकाव्यधाता।**
**कविवराणां पिता माता पण्डयार्चितपण्डितेन्द्रः।।३।।**
**प्रथमरामायणस्त्रष्टा रामलीलामन्त्रद्रष्टा।**
**रामनामसुयागयष्टा कलपदैस्तोषितकपीन्द्रः।।४।।**
**मूलरामायणं गायन् रामकीर्तिं पिबन् कायन् ।**
**सदा सीतापदं ध्यायन् स्वरमधुरताजितपिकेन्द्रः।।५।।**
**लसदनुष्टुब्बहुलवृत्तैः विशदसीतारामवृत्तैः।**
**हनुमदादिकभक्तिकृत्यैः सञ्जगौ सारस्वतेन्द्रः।।६।।**
**अवनिपुत्र्यनुरागसर्गैः भरतलक्ष्मणकृतविसर्गैः।**
**रामचरितरसालवर्गैः रससमावर्जितशुकेन्द्रः।।७।।**
**अलङ्काररसाभिधाने काव्यगुणगौरवविधाने।**
**मनुजमर्यादाविताने रामभक्तिलसद्रसेन्द्रः।।८।।**
**रम्यरामायणप्रसङ्गैः विहतकलिकुलसमलसङ्गैः।**
**विजितशुचिगङ्गातरङ्गैः गिरिधरं समवतु ऋषीन्द्रः।।९।।**

**भौमी-** भृगुवंश में उत्पन्न, ब्राह्मण श्रेष्ठ, अपने चरण कमल में इन्द्र को भी झुका देने वाले, कवीन्द्र वाल्मीकि की जय हो। पूर्व में व्याधों के सङ्गसे कुत्सित स्वभाव वाले, पुनः सप्तर्षियों के दर्शन प्रभाव से और श्रीराम नाम जप की कृपा से फिर ब्रह्मर्षि पद पर प्रतिष्ठित हुए वाल्मीकि जी की जय हो। प्रथम कविता के जन्मदाता, आदिकवि, काव्यजगत के ब्रह्मा, कविकुल के पिता–माता और अपनी सदसत् विवेकिनी बुद्धि से श्रेष्ठ पण्डितों को सम्मानित करने वाले, महर्षि वाल्मीकि की जय हो। प्रथम रामायण के रचयिता, श्रीरामलीला के रहस्य मंत्रद्रष्टा, रामनाम यज्ञ के यज्वा, अपने श्रेष्ठ पदों से कवियों को सन्तुष्ट करने वाले महाकवि वाल्मीकि

जी की जय हो। मूल रामायण को गाते हुये, श्रीरामकीर्ति रस को पी-पी कर कहते हुये सदैव श्रीसीता पद का ध्यान करते हुये, अपने स्वर की मधुरता से श्रेष्ठ कोकिल को जीतने वाले, महर्षि वाल्मीकि जी की जय हो। जिन सारस्वतेन्द्र अर्थात् कविश्रेष्ठ वाल्मीकि जी ने पवित्र सीतारामजी के चरित्रों से युक्त हनुमानजी आदि वैष्णवों के भक्तिकृत्यों से सुशोभित अनुष्टुप बहुत सुन्दर छन्दों में शतकोटि रामायण का गान किया, ऐसे महर्षि वाल्मीकि जी की जय हो। भूमिपुत्री सीताजी के अनुराग और निश्चयों से पूर्ण, श्रीभरत और लक्ष्मण जी के त्याग से संपन्न, श्रीरामचरितरूप बहुरंगे आम्र फलों के द्वारा श्रीराम रस से शुकाचार्य जैसे परमहंस को भी अपनी ओर आकर्षित करने वाले महर्षि वाल्मीकि जी की जय हो। मनुष्य की मर्यादा के वितानों से युक्त, अलंकार और रसों के कथन से पूर्ण, काव्यगुणों के गौरव की रचना में जिन्होंने रसराज शृंगार को भी श्रीरामभक्तिरस से सुशोभित कर दिया, ऐसे महर्षि वाल्मीकि जी की जय हो। कलिकाल के मलसमूहों को नष्ट करने वाले, अपनी पवित्रता से गंगाजी के तरंगों को भी जीतने वाले ऐसे श्रेष्ठ श्रीरामायण के प्रसंगों द्वारा ऋषिश्रेष्ठ वाल्मीकि मुझ कवि **गिरिधर** की रक्षा कर लें।

## गीत संख्या ३४

**जयति कविगुरुतुलसिदासः।**
**रामलक्ष्मणचरणदासः सुभगसीतास्मरणदासः।।१।।**
**सबाल्मीकिशुभावतारः भणितिभामिन्यलंकारः।**
**रामनामजपैकसारः रामभक्तमनोनिवासः।।२।।**
**ग्रामराजापुरविहारी तरणितनयापुलिनचारी।**
**सततसेवितधनुर्धारी जननिहुलसीमुखोल्लासः।।३।।**
**चन्द्रनृपजलधामचन्द्रः विरतिरात्र्यभिरामचन्द्रः।**
**गीतसीतारामचन्द्रः सन्तकुलकैरवविकासः।।४।।**
**लब्धनरहरिदासदीक्षः श्रितसनातनधर्मशिक्षः।**
**रामपद्मपदप्रतीक्षः क्षपितवैष्णवमनस्त्रासः।।५।।**
**रामतिलकविभातभालः रामघट्टसुकीर्तिभालः।**
**चित्रकूटतपोरसालः विहतखलकलिकुटिलरासः।।६।।**
**विश्वविश्रुतविभुविभूतिः विश्वनाथकृपाविभूतिः।**
**भारतीयसुखानुभूतिः सुसाहित्यविभाविभासः।।७।।**
**श्लोकदोहासोरठालसछन्दचौपाईसुधारस-**
**रचितरामचरित्रमानससुकवितावनिताविलासः ।।८।।**
**रामकथावरेण्यगाता रामभक्तजनैकधाता।**
**गिरिधरं भवभयात् त्राता जयति रघुवरहृदयवासः।।९।।**

**भौमी-** श्रीराम-लक्ष्मण-सीता जी के चरण के वास एवं सुन्दर सीताजी के स्मरण के दास कविकुल के गुरु गोस्वामी तुलसीदास जी की जय हो। महर्षि वाल्मीकि के मंगलमय अवतार, कविता-वनिता के आभूषण,

श्रीराम नाम जप को ही एकमात्र तत्व मानने वाले उन गोस्वामी तुलसीदास जी की जय हो। राजापुर ग्राम में विहार करने वाले, यमुना तट पर भ्रमण करने वाले, निरन्तर धनुर्धारी श्रीराम की सेवा करने वाले, माता हुलसी के मुखोल्लास रूप (प्रसन्नता) तुलसीदास जी की जय हो। चन्द्रमा ही जिनके राजा हैं ऐसे ब्राह्मण कुलरूप क्षीरसागर के चन्द्रमा वैराग्यभावनारूप रात्रि के आनन्ददायक चन्द्र स्वरूप, श्री सीताराम चन्द्र को गाने वाले, सन्तरूप कुमुदवन के विकास कर्ता, गोस्वामी तुलसीदास जी की जय हो। श्री नरहरिदास जी से विरक्त वैष्णवी दीक्षा प्राप्त करके, सनातन धर्म की शिक्षा का आश्रय लेकर, जिन्होंने श्रीराम के चरणकमल की प्रतीक्षा की और वैष्णव जन के मन का त्रास नष्ट किया, ऐसे तुलसीदास जी की जय हो। जिनका श्रीमस्तक श्रीराम के द्वारा किये हुये तिलक से सुशोभित हुआ, जिनकी कीर्तिमाला चित्रकूट के रामघाट पर विराजी, जिन्हें चित्रकूट में तपस्या करके श्रीराम रस की अनुभूति हुई तथा जिन्होंने कलियुग का कुटिल रास नष्ट किया, ऐसे तुलसीदास जी की जय हो। परमात्मा श्रीराम के विश्व प्रसिद्ध विभूति स्वरूप, श्रीविश्वनाथ जी की कृपा रूप विभूति से युक्त, भारतीय दर्शन में सुख की अनुभूति करने वाले, सुन्दर साहित्य की कान्ति से प्रकाशित तुलसीदास जी महाराज की जय हो। जिन्होंने श्लोक-दोहा-सोरठा-छन्द और चौपाई जैसे मुख्य वृत्तों में श्रीरामचरितमानस की रचना करके कविता वनिता को बड़भागिनी बना दिया ऐसे गोस्वामी तुलसीदास जी की जय हो। श्रीरामकथा के श्रेष्ठ गायक, श्रीरामभक्त जनों के ब्रह्मा, अपने रामचरितमानस से मुझ कवि **गिरिधर** को भी भवभय से छुड़ाने वाले, भगवान श्रीसीताराम को अपने हृदय में बसाने वाले गोस्वामी तुलसीदास जी की जय हो।

## गीत संख्या ३५

**जयति रघुपति पुर्ययोध्या।**
**मनुविनिर्मितपुर्ययोध्या दशरथश्रिति पुर्ययोध्या।।१।।**
**आयतारवियोजनान्तं त्रीणि विस्तीर्णा दिगन्तम् ।**
**दीपयन्ती दीप्यमाना धाम विलसति पुर्ययोध्या।।२।।**
**अयोभिर्हरिविधिगिरीशैः शेषमुनिनारदगणेशैः।**
**सदाऽयोवद्ध्यायमाना ध्यानपरिणतिपुर्य्ययोध्या।।३।।**
**सरससरयूनीरशोभा सुकवियोगिमुनीन्द्रलोभा।**
**परमहंसैर्ज्ञायमाना ज्ञानगुरुगतिपुर्य्ययोध्या।।४।।**
**आदिकविना विविधसर्गैस्तुलसिदासगिराप्रवर्गैः।**
**सुकविवर्गैर्गीयमाना गानगुणधृतिपुर्य्ययोध्या।।५।।**
**दक्षिणे सरितो विमानं प्रथितत्रिशतधनुष्प्रमाणम्।**
**रामजन्मस्थलममाना लसति दधती पुर्ययोध्या।।६।।**
**यत्र खेलति रजसि रामः सानुजो नयनाभिरामः।**
**तेन भक्त्या भज्यमाना भाति भगवती पुर्ययोध्या।।७।।**
**यत्र विहरति मुदा सीता राघवेण समं प्रतीता।**
**हनुमता संसेव्यमाना भक्तिसंस्थितिपुर्ययोध्या।।८।।**

श्रुतिसहस्त्रैः श्रूयमाणा रामभक्तैः श्रीयमाणा।
गिरिधराय प्रीयमाणा प्रेमपरिमिति पुर्ययोध्या।।९।।

**भौमी–** श्रीराम की पुरी अयोध्या की जय हो, वैवश्वत मनु ने जिसकी सीमा का निर्धारण किया और जो महाराज दशरथ की निवास राजधानी बनी, उस अयोध्या की जय हो। जो बारह योजन आयत और तीन योजन विस्तीर्ण है, वह संपूर्ण दिगन्तों को प्रकाशित करती हुई और स्वयं भी प्रकाशमान होती हुई, परमधाम रूप में विराजमान है। जो अयोभिः अर्थात् विष्णु, ब्रह्मा और शिवजी द्वारा एवं शेष देवर्षि नारद एवं गणपति द्वारा लौह के समान स्थिर होकर ध्यान का विषय बनायी जाती हुई ध्यान की सीमा बन चुकी है। जहाँ दिव्य सलिला सरयू शोभा पा रही हैं, जिस पर श्रेष्ठ कवि योगीन्द्र और मुनीन्द्र लुब्ध हो रहे हैं, जो परमहंसों के भी ज्ञान का विषय बनकर ज्ञान के गुरुओं का गन्तव्य स्थान बन गयी है। आदिकवि महर्षि वाल्मीकि के अनेक सर्गों तथा गोस्वामी तुलसीदास के अनेक वाणी–विभागों द्वारा कहीं कवितावली की कविताओं में, कहीं गीतावली के गीतों में और अन्य कवियों द्वारा भी गायी जाती हुई गीत परंपरा की धारणा शक्ति बन गयी है। सरयू माँ से दक्षिण की ओर तीन सौ धनुष की दूरी पर विशिष्ट सम्मान युक्त श्रीराम जन्मस्थल को धारण करती हुयी श्री अयोध्या सुशोभित हो रही है। जिस श्री अयोध्या में श्रीभरत, लक्ष्मण, शत्रुघ्न के साथ भगवान बालरूप राम खेलते हुये भक्तों के नेत्रों को आनन्द देते रहते हैं, उनके द्वारा भी भक्ति से भजी जाती हुई भगवती अर्थात् षडैश्वर्य संपन्न अयोध्या सुशोभित हो रही है। जिस श्री अयोध्या में भगवान श्रीराम के साथ विश्वस्त भाव से श्रीसीताजी विहार करती रहती हैं, ऐसी हनुमान जी द्वारा सेवित होती हुई भक्ति के निवास स्थान अयोध्या जी विराजमान हो रही है। अनेक श्रुतियों द्वारा श्रवण का विषय बनायी जाती हुई श्री रामभक्तों द्वारा आश्रय की जाती हुई और कवि **गिरिधर** के ऊपर प्रसन्न होती हुई यह अयोध्या पुरी श्रीराम प्रेम की सीमा बन गयी है, श्रीअवधधाम की जय हो जय हो।

## गीत संख्या ३६

जयति चिन्मयचित्रकूटः।
रजतवर्णसुचित्रकूटः शुचिसुवर्णविचित्रकूटः।।१।।
शुभविवेकक्षेत्रकूटः विरतिवैभववेत्रकूटः।
ज्ञानयोगत्रिनेत्रकूटः रामभक्तिसवित्रकूटः।।२।।
महितमन्दाकिनितरङ्गः विहितकलिमलकलुषभङ्गः।
ललितसीतारामरङ्गः कलितकामदमित्रकूटः।।३।।
अत्रिरनसूयावदातः गुप्तगोदावरिविभातः।
स्फटिकशिलाप्रभाप्रभातः जडजयन्तजवित्रकूटः।।४।।
प्रथितरघुपतिपर्णशालः ललितलक्ष्मणरतिरसालः।
जानकीचरणाङ्कमालः प्रभुपदाङ्कपवित्रकूटः।।५।।
अतुलतुलसीपीठशोभः पवनसुतपदहतक्षोभः।
सुखदसाधनसुधनलोभः विषयविपिनलवित्रकूटः।।६।।

**कलिततुलसीदासकूटः रामपैथिलिरासकूटः।**
**सुजनवृन्दविलासकूटः भरतचारुचरित्रकूटः।।७।।**
**द्रुहिणहरिहरजन्मभूमिः रामलक्ष्मणकर्मभूमिः।**
**भजनसाधनमर्मभूमिः प्रणतदोषसहित्रकूटः।।८।।**
**रामरत्नं समाहर्तुं साधनासंसदि विहर्तुम् ।**
**घोरभवसागरं तर्तुं गिरिधराय बहित्रकूटः।।९।।**

**भौमी-** चाँदी के वर्ण वाले आश्चर्यमय शिखरों से युक्त तथा स्वर्ण शिखरों से विचित्र परमचेतन चित्रकूट की जय हो। जो सुन्दर विवेक का क्षेत्र तथा वैराग्य वैभव की वेत्रलता से युक्त शिखरों वाला और ज्ञानयोगरूप महादेव से युक्त एवं श्रीरामभक्ति के जन्मदाता शिखरों से सनाथित है। जो मन्दाकिनी के तरंगों से पूजित तथा कलियुग के मल और पापों को नष्ट करने वाला, श्रीसीताराम जी की विहारस्थली बना हुआ कामद पर्वत के सूर्य जैसे शिखरों से सुशोभित हो रहा है। जो तीनों सत्व-रजस्-तमस् नामक प्राकृत गुणों से रहित है, जो अनसूया जी के तप से स्वच्छ गुप्त गोदावरी से सुशोभित एवं स्फटिक शिला की प्रभा से प्रकाशित तथा मूर्ख जयन्त के प्राणान्तकारी भयवेग का रक्षा स्थान है। जहाँ श्रीराम की पवित्र पर्णशाला है, जो श्री लक्ष्मण की भक्ति से रसीला हो चुका है, जहाँ श्रीसीता के श्रीचरणकमल के चिन्ह माला की भाँति विराज रहे हैं, जिसके शिखर भगवान श्रीराम के चरण चिन्हों से पवित्र हो चुके हैं। जहाँ अतुलनीय है तुलसीपीठ की शोभा और हनुमान जी के श्री चरणों ने जिसका क्षोभ नष्ट कर दिया है, जहाँ सुखद भजन साधन का लोभ है और जिसके शिखर विषय वन को काटने के लिये लवित्र अर्थात् हँसिया (खेती काटने वाला एक हथियार) बन गये हैं। जहाँ के शिखर तुलसीदास जी को सुख देते हैं, जिसके शिखरों पर श्रीसीताराम जी के महारास होते हैं और जिसके शिखरों पर वैष्णव-वृन्द भजन सुख के विलास का अनुभव करते हैं और जिसके शिखरों पर श्रीभरत के दिव्य चरित्र प्रकट हुये। जो ब्रह्मा, विष्णु तथा शिवजी की जन्मभूमि, श्रीरामलक्ष्मण की कर्मभूमि एवं साधन भजन के मर्मभूमि, और प्रणतजनों के दोषों को सहन करने वाले शिखरों से युक्त हैं। जिसके शिखर श्रीरामरत्न प्राप्त करने के लिये, साधना के संसद में विहार करने के लिये, अगम भवसागर को पार करने के लिये **गिरिधर** कवि के हेतु विशाल जलयान बन गये हैं, ऐसी चित्रकूट की जय हो।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये बालकाण्डे गीतस्तुतसीतारामचन्द्रो नाम प्रथमः सर्गः।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के बालकाण्ड में गीतस्तुतसीतारामचन्द्र नामक प्रथम सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये
# बालकाण्डे

## गीतराघवाविर्भावो नाम

## द्वितीयः सर्गः

### सन्दर्भश्लोकः

**श्रीमत्साकेतलोके परमसुभगया संस्थया वामभागे**
**सीतादेव्या विभातो विजितचपलया स्वर्णसिंहासनस्थः।**
**रामो रामाभिरामो नवजलदरुची राजमानो महिम्ना**
**सानन्दं स्तूयमानः सुरकुलऋषिणा गीतसीताभिरामः।।१।।**

**भौमीः-** श्री साकेतलोक में अपनी शोभा से बिजली को जीतने वाले अत्यन्त सुन्दर वामभाग में विराजमान श्रीसीता देवी के साथ, स्वर्णसिंहासन पर स्थित स्वाभाविक सौन्दर्य से सुशोभित हो रहे भक्तजनों के आनन्ददाता भगवती सीता जी के सुखद एवं अपनी महिमा से देदीप्यमान नवीन बादल के समान कांति वाले भगवान श्रीराम आनंद के साथ देवर्षि नारद जी के द्वारा स्तुति के विषय बन गए हैं। अर्थात् अपने वामभाग में स्थित श्रीसीता जी के साथ स्वर्णसिंहासन पर विराजित साकेतविहारी श्रीराम की श्रीनारद स्तुति कर रहे हैं।

### गीत संख्या १

**जयति निर्मलरामचरितम्।**
**मधुरमधुरं रुचिररुचिरं कलितकविताललितसरितम्।।१।।**
**ज्ञानभक्तिसुधानिधानम् निचितराघवकीर्तिगानम् ।**
**आदिकविकलकण्ठपानम् तुलसिदासगिरा मुखरितम्।।२।।**
**प्रथितरघुवरविपिनवासं मैथिलीलक्ष्मणविलासम्।**
**कथितदशमुखवंशनाशं भरतभावविशुद्धभरितम्।।३।।**
**रामराज्यमहार्घशीलं निचितरघुपतिललितलीलम्।**
**सततनिहिततमालनीलं भवतु गिरिधरहृदि विचरितम्।।४।।**

**भौमी-** अत्यन्त मधुर, अत्यन्त सुन्दर एवं ललितकलित कविताओं की नदी से युक्त निर्मल श्रीरामचरित

की जय हो। ज्ञान भक्तिरूप अमृत के कोश श्रीराघव की कीर्तिगाथा से युक्त, आदिकवि महर्षि वाल्मीकि के कोकिल कण्ठ का पेय, गोस्वामी तुलसीदास जी की वाणी से मुखरित श्रीरामचरित की जय हो। जिसमें श्रीराघव की वनवासगाथा प्रसिद्ध है। जिसमें श्रीसीता एवं लक्ष्मण जी की निःस्वार्थ सेवा का आनन्द वर्णित है। जहाँ रावण वध की लीला का कथन किया गया है ऐसे पवित्र भरतजी के भावों से ओत-प्रोत श्रीरामचरित की जय हो। श्रीरामराज्य के बहुमूल्य चरित्रों से युक्त श्रीराम की ललित लीलाओं से भरपूर एवं तमाल के समान नीलवर्ण प्रभु श्रीराम का निवास स्थान रूप यह श्रीरामचरित मुझ कवि **गिरिधर** के हृदय में सदैव विराजता रहे।

## सन्दर्भश्लोकः

**पौलस्त्यावग्रहार्तैर्हतनिजविभवैर्देवदन्तिप्रकाण्डै-**
**र्धावद्भिर्भीतभीतैः सरमिव ससरः प्राणरक्षैकचित्तैः।**
**ब्रह्माद्यैः प्राञ्जलीड्यैः सहहरहरिभिः प्रोल्लसन्नेत्रबाष्पैः**
**सिञ्चद्भिः पादपद्मं प्रणतभयहरो गद्गदं राम ऊचे।।१।।**

**भौमी-** पुलस्त्य के पौत्र रावण रूप दुष्कार्य से आर्त्त अत्यन्त भयभीत, पानी से भरे हुए तालाब की ओर दौड़ते हुए, शिव एवं विष्णु के साथ हाथ जोड़े हुए देवता रूप जंगली हाथियों द्वारा अपने प्राणों की रक्षा में तन्मय होकर अपने नेत्रों के आँसुओं से प्रभु की चरण कमल को सींचते हुए, प्रणतभयहारी, श्रीराम से गद्गद स्वर में निवेदन किया गया है। अर्थात् जैसे निदाघकाल में प्यासा हाथी तालाब की ओर दौड़ता है, उसी प्रकार देवता साकेतबिहारी श्रीराम के पास आये और अपनी प्रार्थना प्रस्तुत की।

**विशेष-** इस छन्द में प्रयुक्त सरयू शब्द 'अजन्त' होकर तालाब का वाची है। ''**सर्वे सान्ताः अजन्ताः**'' इस नियम से यह अव्याकृत नहीं है।

## गीत संख्या २

**जगदीश जगदुद्धर प्रभो अवतर प्रभो अवतर प्रभो।**
**जगते मनुजमुपहर प्रभो अवतर प्रभो अवतर प्रभो।।**
**रोदित्यनाथा गौरियं सीदति विनाथा द्यौरियम्।**
**गवि दिवि शुभानि वितर प्रभो अवतर प्रभो अवतर प्रभो।।१।।**
**क्रन्दते धर्मो भीभरो नन्दत्यधर्मो विज्वरः।**
**साध्वसं सम्प्रति हर प्रभो अवतर प्रभो अवतर प्रभो।।२।।**
**श्रुतिसेतुरेवोच्छिद्यते सज्जनसमाजः खिद्यते।**
**निजभारतं परिचर प्रभो अवतर प्रभो अवतर प्रभो।।३।।**
**आतङ्कवादमहाग्रहो रावयति राष्ट्रमसद्ग्रहो।**
**जनरावणं संहर प्रभो अवतर प्रभो अवतर प्रभो।।४।।**
**आयाहि अयोध्यां राम हे पालय निजान् सुखधाम हे।**
**गिरिधरदुरितमपहर प्रभो अवतर प्रभो अवतर प्रभो।।५।।**

**भौमी–** देवता प्रार्थना के स्वर में साकेतबिहारी श्रीराम से निवेदन करते हैं, हे जगदीश्वर प्रभो! इस जगत् का उद्धार कीजिए। अवतार लीजिए, अवतार लीजिए। हे प्रभो! जगत् को मनुष्य का उपहार दीजिए। अर्थात् जब आप मनुष्य बनकर आएँगे। तो जगत् को मनुष्यता का उपहार मिल जाएगा। परमात्मन् अनाथ हुई यह पृथ्वी चिल्ला रही है और इसके साथ असहाय गौएँ भी चिल्ला रही हैं, स्वर्ग भी सहायकों से शून्य होकर दुःखी हो रहा है। आप पृथ्वी और स्वर्ग में कल्याण का वितरण कीजिए और अवतार लीजिए। प्रभो, भयभीत हुआ सनातनधर्म चिल्ला रहा है और अधर्म निश्चिंत होकर प्रसन्न हो रहा है, इस समय हम सबका भय दूर कीजिए। परमात्मन् अवतार लीजिए, अवतार लीजिए। हे परमेश्वर! इस वैदिक धर्म का सेतु टूट रहा है और सज्जनों का समाज दुःखी हो रहा है। हे भगवन् आप अपने भारत की परिचर्या अर्थात् सेवा कीजिए। अर्थात् अवतार लीजिए, अवतार लीजिए। हे दीनबन्धो! असद् विचारों का आग्रही यह आतंकवाद रूप महाग्रह आपके राष्ट्र को रुला रहा है। इस आतंकवाद रूप लोकरावण का संहार कीजिए। भगवन् अवतार लीजिए। हे श्रीराम! आप श्रीअवध में पधारिये। हे सुख के भवन प्रभो! आप अपने भक्तों का पालन कीजिए और कवि **गिरिधर** के पाप-समूह को नष्ट कीजिए। हे साकेताधिपति श्रीराम आप अवतार लीजिए।

### सन्दर्भश्लोकः

**श्रुत्वा वाणीं रावणव्यार्दितानाम्**
**गीर्वाणानां पादकञ्जं गतानाम्।**
**उत्फुल्लाक्षो निर्भयान्संविधास्यन्**
**दैव्यां वाण्यां राममेघो जगर्ज।।१।।**

**भौमी–** इस प्रकार अपने श्रीचरण कमल में प्रपन्न रावण के द्वारा प्रताड़ित देवताओं की वाणी सुनकर उन्हें निर्भय करने के लिए प्रसन्न कमल नेत्र श्रीराम मेघ ने देववाणी में स्पष्ट बोलते हुए गर्जना की।

### गीतसंख्या ३

**भारतेऽयोध्यायां मया दशरथगृहेऽवतरिष्यते।**
**श्रीरामलक्ष्मणभरतशत्रुघ्नाख्ययानुचरिष्यते ।।**
**देवता मा भैषीष्ट भो धैर्यञ्च मा क्षयिषीष्ट भो।**
**शीघ्रं मया युष्मत्कृते नरवेष एष धरिष्यते।।१।।**
**अंशैस्त्रिभिर्हरिभिर्मया ननु सीतया सुविनीतया।**
**सुफलय्य कौसल्यामनोरथवल्लरीं विचरिष्यते।।२।।**
**विसखण्डभञ्जं वृषपतेश्चापं विभज्य च जानकीम्।**
**स्वीकृत्य वनवासच्छलाद्भूतलभरोऽपहरिष्यते।।३।।**
**युधि रावणं हत्वा मया जगदपभयं कृत्वा मया।**
**निजभक्तिमङ्गलसम्पदा ननु गिरिधरे वितरिष्यते।।४।।**

**भौमी-** साकेतबिहारी श्रीराम देवताओं से बोले– मैं भारतवर्ष में श्रीअयोध्या में महाराज दशरथ के घर में अवतार लूँगा। राम, लक्ष्मण, भरत, शत्रुघ्न नाम से प्रकट होकर मानवता की सेवा करूँगा। हे देवताओं! भयभीत मत हो, अपना धैर्य मत खोओ, तुम लोगों के लिये ही मैं शीघ्र ही यहीं भारत में नरवेश धारण करूँगा, जो तुम साकेत में देख रहे हो। अपने तीनों अंशों अर्थात् बैकुण्ठाधिपति, क्षीरसागरशायी, श्वेतद्वीपाधिपति तीनों विष्णुओं के साथ और साकेतलोक की महारानी अपनी नित्य सहचारिणी आह्लादिनी शक्ति अति विनम्र भगवती सीताजी के साथ अवतार लेकर माता कौसल्या जी की मनोरथ कल्पलता को सुफल बनाकर मैं श्री अवध में विचरण करूँगा। तात्पर्यतः मैं साकेतबिहारी राम ही श्रीअवध में रामरूप से प्रकट होऊँगा। साकेत की महारानी श्रीसीता जी श्रीअवध में भी मुझ राम की धर्मपत्नी बनकर प्रस्तुत होंगी। बैकुण्ठाधिपति विष्णु भरत बनकर, क्षीरसागरशायी विष्णु लक्ष्मण बनकर, श्वेतद्वीपाधिपति विष्णु शत्रुघ्न बनकर मेरी सेवा में उपस्थित होंगे। कमलदंड के समान शिवधनुष तोड़कर स्वयंवर में जानकी जी को प्राप्त करके, वनवास के बहाने मैं पृथ्वी का भार हरण कर लूँगा। इसी प्रकार युद्ध में रावण को मारकर, संसार को निर्भय बनाकर मैं कवि **गिरिधर** को भी अपनी मंगलमयी भक्ति सम्पदा का वितरण करूँगा।

**विशेष-**

**वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः**
**श्वेतद्वीपेशशत्रुघ्नो रामसेवार्थमागताः।।**

## सन्दर्भश्लोकौ

**श्रुत्वा वाक्यं रघुकुलपतेः सन्निवृत्ताश्च देवाः**
**भूयो जाता जगति कपयो रामकैङ्कर्यकामाः।**
**शम्भुश्चायं ननु पवनतोऽप्यञ्जनायां प्रजज्ञे**
**प्रातः स्वात्यां कनकवपुषा मङ्गले मङ्गलाढ्यः।।१।।**
**तस्मिञ्जाते महाभागे रामपादपरायणे।**
**सुराश्च ववृषुः पुष्पं गन्धर्वाश्च कलं जगुः।।२।।**

**भौमी-** इस प्रकार श्रीराम की वाणी सुनकर साकेत से देवतागण लौट आए और भगवान श्रीराम की सेवा के लिए मर्त्यलोक में वानररूप में जन्म लिये। भगवान् शिव श्रीपवन के संकल्प से माता अंजना के गर्भ में आकर प्रातःकाल स्वाति नक्षत्र में कार्तिक कृष्ण चतुर्दशी, प्रातःकाल मंगल के दिन स्वर्ण के समान शरीर धारण करके श्रीहनुमान् के रूप में प्रकट हुए। इस प्रकार श्रीरामभक्त हनुमान के प्रकट होने पर देवताओं ने पुष्पवर्षा की और गन्धर्व गीत गाने लगे।

## गीत संख्या ४

**अञ्जने जीव्याच्चिरं तव पुत्रः।।**
**राघवचरणसरोजमधुकरो वीर्यपयोधिनिमज्जितमित्रः।।१।।**
**रामार्थं धृतवानरदेहं तव गेहे विचकास्ति त्रिनेत्रः।।२।।**
**ब्रह्मचर्यनिष्ठः सुवरिष्ठः कोटिवज्रवरविग्रहगात्रः।।३।।**

**वेगविनतविनतावरसूनुः कल्पितसागरगोष्पदमात्रः।।४।।**
**वर्धापनं गिरिधरो गायति जयतु सदा खलखलकुलदात्रः।।५।।**

**भौमी-** अब महाकवि बधाई लोकधुन के स्वर में गन्धर्वों के मुख से गीत गवाते हैं-हे अञ्जना माता! आपके आयुष्मान-पुत्र श्रीहनुमान जी चिरंजीवी हों, चिरंजीवी हों, ये श्रीराम के चरणकमल के भ्रमर बनेंगे और अपने पराक्रम के महासागर में सूर्य को डुबो देंगे। अर्थात् शीघ्र ही सूर्यनारायण को निगल जाएँगे। भगवान श्रीराम की सेवा के लिए वानर का शरीर धारण करके स्वयं त्रिनेत्र शंकर ही आपके भवन में सुशोभित हो रहे हैं। ये अपने वेग से वनितापुत्र गरुड़ को भी झुका देंगे और समुद्र को भी गौ के खुर के समान छोटा करके लाँघ जाएँगे। इसके साथ-साथ कवि **गिरिधर** भी बधाई गा रहे हैं। राक्षस रूप खलिहान को काटने के लिये हसिया शस्त्र स्वरूप श्रीहनुमान् जी आपकी जय हो।

## सन्दर्भश्लोकौ

**रामच्छ्रीशतरूपया वरमसौ लब्ध्वा तपस्तोषितात्**
**कौसल्याप्रिययाऽन्वितो दशरथः स्वायम्भुवोऽभून्मनुः।**
**कालं षष्टिसहस्रवर्षमसुतो विघ्नोऽध्ययोध्यं नयन्**
**पुत्रापूर्वपयोमुचं मखमथो ईजे वसिष्ठानुगः।।१।।**
**प्रादुर्भूतो जुह्वतो जातवेदाः विभ्रत्पात्रीं पायसे नाभिपूर्णाम् ।**
**मन्ये साक्षात् सद्गुरुर्ब्रह्मविद्यां दित्सुः प्रायाद्ब्रह्मणा वृंहिताभाम्।।२।।**

**भौमी-** तपस्या से प्रसन्न श्रीराम से वरदान पाकर शतरुपा ही कौसल्या जी के रूप में परिणत हुई और स्वयं स्वायं भुवमनु ही महाराज दशरथ के रूप में अवतीर्ण हुए। साठ हजार वर्ष पर्यन्त अयोध्यापुरी में पुत्रहीन रहकर उद्विग्न मन से समय की प्रतीक्षा करते हुए, महाराज ने वसिष्ठ जी के निर्देशकत्व में पुत्ररूप अपूर्व जल की वर्षा करने वाले मेघकल्प पुत्रेष्टि-याग का अनुष्ठान किया। इस प्रकार पुत्रेष्टि-याग में आहुति देते हुए महाराज दशरथ के समक्ष पायस अर्थात् खीर से भरी बटुलोई हाथ में लिये हुए स्वयं अग्निदेव प्रकट हो गये। मुझे ऐसा लगता है मानो ब्रह्म के द्वारा प्रकाशित होती हुई ब्रह्मविद्या को प्रदान करने की इच्छा से साक्षात् सद्गुरुदेव ही प्रकट हो गये हैं। अब अग्निदेव गीत गा रहे हैं।

## गीत संख्या ५

**वह्निर्गायति**

**शृणु शृणु चक्रवर्तिनरेश।**
**गुरुवसिष्ठाशिषा दिष्ट्या वर्धसे मनुजेश।।१।।**
**अद्य धन्यशिरोमणिस्त्वं जगति कोसलराज।**
**प्राप्तपरमानन्द इव नरराजराजविराज।।२।।**
**गृह्यतामिदमथ हविष्यं ब्रह्ममयमवनीश।**
**यथायोग्यं विभज पत्नीत्रयेऽत्रैव गवीश।।३।।**

**लप्स्यसे चतुरः सुपुत्रान् फलानीव महान्ति।**
**ब्रह्मजिज्ञासुर्महावाक्यानि यथा विभान्ति।।४।।**
**स्वमथ राघववदनचन्द्रचकोरकं प्रविधाय।**
**गाय गिरिधरप्रभुं प्रमुदितमनसि नित्यं ध्याय।।५।।**

**भौमी–** अग्निदेव बोले– हे चक्रवर्ती महाराज सुनिए सुनिए, सौभाग्य से श्रीगुरुदेव वसिष्ठ के आशीर्वाद से आपका अभ्युदय हो रहा है। हे कौशलेश्वर! आज आप संसार के धन्यों में भी शिरोमणि बन गये हैं। हे मनुष्येश्वर! परमानन्द को प्राप्त किये हुए मुक्तात्मा की भाँति अब आप सुशोभित हों। हे पृथ्वीपते! यह ब्रह्ममय हविष्य ग्रहण कीजिए। हे इन्द्रियों के नियन्त्रक महाराज! इसी यज्ञशाला में बुलाकर अपनी तीनों सवर्णा पत्नियों–कौसल्या, कैकेयी, सुमित्रा में इस हव्य को योग्यतानुसार बाँट दीजिए। अर्थात् इसका अर्धांश कौसल्या को प्रदान कीजिए, चतुर्थांश कैकयी को और चतुर्थांश में दो भाग करके कौसल्या कैकेयी के हाथों से दोनों अष्टमांशों को सुमित्रा जी को वितरित कीजिए। इससे आप मोक्ष, काम, धर्म, अर्थ जैसे महाफलों के समान चार पुत्र प्राप्त करेंगे, जिस प्रकार ब्रह्म जिज्ञासु चार महावाक्यों को प्राप्त कर लेता है। अब आप स्वयं को श्रीराघव के मुखचन्द्र का चकोर बनाकर, प्रसन्न मन में उन्हीं का निरन्तर ध्यान करते हुए **गिरिधर** कवि के प्रभु श्रीराम को निरन्तर गाते रहें।

**विशेष–** महावाक्य चार कहे गए हैं– प्रज्ञानम् ब्रह्म, अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि।

## सन्दर्भश्लोकाः

**कौसल्या ननु कैकयी मगधजा लब्ध्वा चरुं भूपते**
**र्हस्ताद्धस्तिवधूसमानगतयो गर्भान् सदर्भान् दधुः।**
**तूर्यं चेश्वरमेव तैजसमथो विश्वं मुहुर्भूतये**
**स्वाध्यायाभ्यसनादिवाप्तमतिकास्तिस्त्रः श्रुतीनां विधाः।।१।।**
**प्राप्ते द्वादशमासि मङ्गलदिने चैत्रे नवम्यां सिते**
**पक्षे चाभिजिते पुनर्वसुमये माध्यन्दिने भास्करे।**
**कर्कं लग्नमिते गुरौ शशिभृता पञ्चग्रहे सोच्चके**
**कौसल्यापुरतोऽभवत्प्रकटितो रामः षडात्मा हरिः।।२।।**
**मेषस्य भानौ मकरस्य मङ्गले तुलाशनौ कर्कवृहस्पतौ तथा।**
**मीनस्य शुक्रे किल वेदसागरे आविर्बभौ राघव ईड्यगौरवः।।३।।**

**भौमी–** अब कवि तीन सन्दर्भ श्लोकों द्वारा इस कथावस्तु को क्रमबद्ध करते हुए सन्दर्भशुद्धि के माध्यम से श्रीराम के जन्म का गान कर रहे हैं। जिस प्रकार स्वाध्याय के अभ्यास से श्रुतियों की तीनों विधाएँ– ज्ञान, उपासना, क्रिया जिस प्रकार तुरीय, प्राज्ञ (ईश्वर) तैजस् और विश्वविभु को धारण करती हैं उसी प्रकार जगत के कल्याण के लिए गजगामिनी कौसल्या, कैकेयी, सुमित्रा ने महाराज दशरथ के हाथ से चरु प्राप्त करके सन्त ही जिनके बालक हैं ऐसे चार उत्तम गर्भों को धारण किया। अर्थात् कौसल्या जी ने श्रीराम को गर्भ में धारण किया जैसे आन्वीक्षिकी की श्रुति तुरीय चेतना को धारण करती है। कैकेयी जी ने श्रीभरत को धारण

**विशेष-** यह गीत साकेतवासी श्रीखाकी बाबा सरकार के द्वारा रचित एक भोजपुरी के आंचलिक लोकगीत के ढाल पर निबद्ध है, जिसके बोल निम्नलिखित हैं–

**रतन जड़ावल के कील लागल हे।**
**पहिरी चलत दुलहा राम हे मनभावन दुलहा मनमोहन दुलहा हे।**

## गीत संख्या २५

**जनक कुमारी पुत्रीभावेन पाल्या हे मिथिलाधिप राजन्।**
**जगज्जननीं जानकीं जानीहि हे मिथिलाधिप राजन्।।१।।**
**जीवनसुमूलीरेषा प्राण इव पाल्या हे मिथिलाधिप राजन्।**
**दुरोदरदुर्दरं दृणीहि हे मिथिलाधिप राजन्।।२।।**
**सति भक्तिभावपूर्णशारदसुधांशौ हे मिथिलाधिप राजन्।**
**ज्ञानसौवीरकं मा क्रीणीहि हे मिथिलाधिप राजन्।।३।।**
**कोटिकोटिजन्मपुण्यफलप्रेमरत्नं हे मिथिलाधिप राजन्।**
**मा योगग्राहिणे विपरिक्रीणीहि हे मिथिलाधिप राजन्।।४।।**
**संशयकुठारात् क्रूरतर्कतीव्रधारात् हे मिथिलाधिप राजन्।**
**रससुरतरुं मा लुनीहि हे मिथिलाधिप राजन्।।५।।**
**गिरिधरप्रभुः परमात्मा पतिरस्या हे मिथिलाधिप राजन्।**
**तेन प्रत्यगात्मानं पुनीहि हे मिथिलाधिप राजन्।।६।।**

**भौमी–**याज्ञवल्क्य फिर मिथिला के लोकधुन में गीत गा रहे हैं। हे जनक! कुमारी सीता जी का पुत्रीभाव से लालन करो। जानकी जी को जगत् की जननी समझो। ये साक्षात् जीवन की मूलिका हैं। इनका प्राण के समान पालन करो और भयंकर परिणाम वाले भय को समाप्त कर दो। भक्तिभावमय शरदकालीन अमृत किरण वाले चन्द्रमा के उपस्थित रहने पर तुम ज्ञान रूप खट्टी जावन का क्रय मत करो। करोड़ों-करोड़ों जन्मों के पुण्यफलरूप इस प्रेमरत्न को योगियों के हाथ मत बेच दो। हे मिथिलाधिपते! क्रूर तीखे तर्करूपधारा वाले इस संशय के कुल्हाड़े से रस रूप कल्पवृक्ष को मत काटो। हे महाराज! **गिरिधर** कवि के स्वामी परमात्मा श्रीराम ही इनके पति हैं। उनकी कृपा से और उनके सानिध्य से अपनी जीवात्मा को पवित्र कर लीजिए।

**विशेष-** इस गीत का मैथिल गीत ढाल इस प्रकार है–अपनी किशोरी जी के चरण मन इबै हे हम मिथिलै रहबै। मिथिला में बाटै चारो धाम हे हम मिथिलै रहबै।

## गीत संख्या २६

**भूप सीता सुता भज्यतां भज्यताम्।**
**सर्वशङ्काटवी भज्यतां भज्यताम्।।१।।**
**पश्य भित्वाऽवनीं प्रादुरासीदियं कोटिसज्जन्मनां पुण्यराशिः स्वयम्।**
**भावनास्त्रङ्मुदा सृज्यतां सृज्यताम्।। २।।**

**देवमायामयी रूपशीला सती शाश्वती भगवदीया तथा भगवती।**
**भवो भजनानले भर्ज्यतां भर्ज्यताम्।।३।।**
**गायतैतां मुदा लब्धसत्सम्पदा भक्तिभावितहृदा मोदता सर्वदा।**
**गिरिधरेणाप्यघं त्यज्यतां त्यज्यताम्।।४।।**

**भौमी**–याज्ञवल्क्य आगे कहते हैं कि हे महाराज जनक! आप पुत्री सीता का निरन्तर भजन कीजिए और अपने मन में आने वाले सन्देह वन को काट डालिए। देखिये–करोड़ों करोड़ों श्रेष्ठ जन्म लेने वाले संतों की पुण्य–राशि रूपा सीताजी पृथ्वी को फोड़कर स्वयं प्रकट हुई हैं। इनके लिये तो प्रसन्नतापूर्वक आप अपनी भावना की माला बनाइये। ये पवित्र स्वभाव वाली साध्वी, निरन्तर विद्यमान रहने वाली, भगवान की आह्लादिनी शक्ति छहों ऐश्वर्यों से युक्त साक्षात् परमेश्वर श्रीराम की कृपा ही हैं। इनके भजन की अग्नि में इस संसारभाव को भून डालिये। श्रेष्ठ भगवद्भाव की सम्पत्ति प्राप्त करके भक्तिपूर्ण हृदय से प्रसन्नतापूर्वक सदैव इन्हीं सीता जी का यशोगान करते हुये **गिरिधर** कवि द्वारा भी अपना पाप छोड़ दिया जाय अर्थात् श्रीसीताराम के अतिरिक्त किसी भी देवी–देवता का चिन्तन न किया जाय।

## गीत संख्या २७

**श्रृणु श्रृणु भूपते वचनं मदीयं गूढं रहस्यं कथयामि ते।।**
**आदिशक्तिरेषा सीता भगवत्स्वरूपा।**
**प्रथामेतां सत्यां प्रथयामि ते।।१।।**
**पुरा सङ्कल्पितां तव मनोरथसुरलतां साम्प्रतमहह फलयामि ते।**
**सीताभविष्यत्कथां कथयन् महीपते समलितं मनश्छालयामि ते।।२।।**
**स्वयम्बरव्याजाद्रामो मिथिलापुरं ह्यागन्ता तं जामातारं कलयामि ते।**
**गिरिधरस्वामिने समर्प्य निजतनयां धन्यतामव कलयामि ते।।३।।**

**भौमी**–पुनः याज्ञवल्क्य मिथिला के लोकधुन में कहते हैं कि हे महाराज! मेरा वचन सुनिये– मैं आपको गूढ़ रहस्य बता रहा हूँ। सीता जी आदिशक्ति और भगवद्स्वरूपिणी हैं इस तथ्य को मैं सत्य के प्रतिज्ञान से कह रहा हूँ। पूर्व संकल्पित तुम्हारी ही समक्ष फलवती देख रहा हूँ। तुम्हारे ही सामने सीता जी के सम्बन्ध में कथा कहता हुआ मैं व्यर्थ निर्मूलवादी पक्षों से मलिन हुये तुम्हारे मन को आज मैं क्षालित कर रहा हूँ। स्वयंवर के बहाने श्रीराम आपके मिथिलापुर में आयेंगे, उन्हीं को मैं आपका जामाता निश्चित कर रहा हूँ। **गिरिधर** कवि के स्वामी श्रीराम को अपनी पुत्री सीता को समर्पित करके आप धन्य हो जायेंगे, ऐसा मेरा मानना है।

## गीत संख्या २८

**स्वगतम्–**

**सीते त्वां कथं करवाणि प्रशंसाम्।**
**निरुपमरूपशीलगुणशोभां ललनाजगदवतंसाम्।।१।।**

यदि चम्पकं तवोपमानमनुचितं तदपि जगदम्ब।
तन्निशि संकुचितं तव स्मितं सततमेकरसमम्ब।।२।।
कनकेनोपमीयसे चेन्महती अनौचिती जाता।
तत् कठोरमथ जडं चिन्मयी त्वं मृदुला विख्याता।।३।।
चरणौ तव वनरूहोपमातुं मनसाऽहं जिह्रेमि।
तन्निशि सम्पुटितं स्फुटाविमौ समन्वयंश्च विभेमि।।४।।
भवप्लवौ तव करौ वदन् पल्लवमिव किल सीदामि।
कलितकलङ्कचन्द्रमिव वदनं ब्रुवन् न प्रसीदामि।।५।।
वधिकवश्यखञ्जनमिवनयनं कथय कथं कथयानि।
अभयप्रदान्रदान् चपला इव प्रथय कथं प्रथयानि।।६।।
अमृतस्त्रावि कुन्तलान् विषधरभुजगैः किमु समयेयम्।
क्षणभङ्गां चपलामिव मूर्तिं कथयन् कं नमयेयम्।।७।।
अर्धदेहविषवन्धुमौखरीवरविश्लेषयुताभिः।
तुलये किं त्वां गिरिजावारिधिभवागिराकसुताभिः।।८।।
ज्ञात्वा सदा निरुपमामनघां निरवधिगुणां विनीताम्।
कविगिरिधरस्वामिनीं भगवतीं वन्द्यां वन्दे सीताम्।।९।।

**भौमी**–याज्ञवल्क्य अनन्वय अलंकार की भंगिमा से हवेली पद्धति में सीता जी का सौन्दर्य गान कर रहे हैं–हे सीते! आपका रूप, शील एवं आपकी शोभा ये सभी अवधि से रहित हैं। आप नारी जगत की अलंकार स्वरूपा हैं। आपकी मैं किस प्रकार प्रशंसा करूँ। हे जगत की माँ! यदि मैं चम्पा को आपका उपमान कहूँ तो बहुत अनुचित हो जायेगा। हे माँ! चम्पा रात्रि में संकुचित हो जाती है और आप रात-दिन मुस्कुराती रहती हैं। यदि मैं स्वर्ण से आपकी उपमा दूँ तो मुझसे बहुत बड़ा अनुचित हो जायेगा क्योंकि सोना तो कठोर और जड़ है, जबकि आप चिन्मयी (चेतना स्वरूपिणी) और अत्यन्त मृदुल प्रसिद्ध हैं। आपके चरणों को कमल से उपमित करते समय मैं मन से बहुत लज्जित होता हूँ। क्योंकि कमल रात्रि में सिकुड़ जाता है और आपके श्रीचरण सदैव विकसित रहते हैं अर्थात् रात्रि में भी खुलकर चलते हैं। अतः इनका समन्वय करते हुये मैं डरता हूँ। संसार-सागर के लिये जहाज के समान आपके श्रीहस्तों को पल्लव के समान कहता हुआ मैं बहुत दुःखी हो रहा हूँ क्योंकि पल्लव थोड़ा-सा भी भार नहीं उठा सकता, टूट जाता है जबकि आपके श्रीहस्त असंख्य लोगों को अपने पर चढ़ाकर संसार-सागर से पार हो जाते हैं। इसी प्रकार आपके श्रीमुख को कलंकी चन्द्रमा के समान कहता हुआ मैं प्रसन्न नहीं हो रहा हूँ। आप ही बताइये कि आपके श्री नेत्रों को मैं बहेलिये के वश में आने वाले खंजन पक्षी की भाँति कैसे कहूँ? तनिक बोलिये तो! संसार को अभय प्रदान करने वाले आपके सुन्दर दाँतों को मैं बिजली के समान कैसे प्रस्तुत करूँ? अमृत की वर्षा करने वाले आपके सुन्दर केशों को मैं विषैले साँपों से कैसे समानता प्रदान करूँ? आपकी अविनाशिनी मूर्ति को क्षणभंगुर बिजली के समान कहता हुआ मैं क्या काव्य-जगत की ब्रह्मा, महर्षि वाल्मीकि को अपने इस कुकृत्य से लज्जित करके झुका

दूँ? भगवती! आप ही बताएँ जो पार्वती अर्ध-देहा हैं तथा जिनका शरीर ही पूर्ण नहीं है, जिन लक्ष्मी का भाई विष है, जो सरस्वती बहुत बोलती हैं और जो कसुता अर्थात् ब्रह्मा की पुत्री रति अपने पति के वियोग से दु:खी रहती हैं इनसे मैं आपकी कैसे तुलना करूँ? क्योंकि आप पार्वती की भाँति अर्धदेह नहीं हैं। आप सर्वांगपूर्ण और सुन्दरी हैं। लक्ष्मी जैसे आपका भाई विष नहीं प्रत्युत् मंगलकारी मंगल-ग्रह है। सरस्वति की भाँति आप मुखर नहीं हैं और रति की भाँति आप पति से वियुक्त भी नहीं हैं। रति के पति को शिव जी ने जलाया जबकि आपके पति श्रीराम को शंकर जी ने हृदय में बसाया है। वस्तुत: मैं याज्ञवल्क्य आपश्री को सदैव उपमा रहित, निष्पाप, नि:सीम गुणों वाली, विनम्र, कवि **गिरिधर** की स्वामिनी, छहों ऐश्वर्यों से युक्त, प्राणिमात्र की वन्दनीय, साकेतविहारिणी सीता ही जानकर इस अवतार में भी आपका नित्य वन्दन करता हूँ।

## सन्दर्भश्लोक:

**अथो रहो दाडिमबीजराजिभि: प्रतर्पयन्ती जनकेन्द्रकन्यका।**
**स्वसारिकां हाटकपञ्जरस्थितां प्रगापकं गापयति स्म जानकी।।१।।**

**भौमी**–कवि सन्दर्भश्लोक द्वारा अगली कथा को क्रमबद्ध कर रहे हैं–याज्ञवल्क्य जी के प्रस्थान करने के पश्चात् जनककुल में प्रकट सीरध्वज की राजपुत्री जानकी सीता जी एकान्त में सोने के पिंजरे में स्थित अपनी लाडली मैना को अनार के दानों से संतुष्ट करती हुई उससे एक सुन्दर गीत गवानें लगीं।

## गीत संख्या २९

**सारिकां पाठयते सीता शुभे वद सदा रामसीता।।**
**दाडिमीफलान्याशयन्ती पञ्जरे शुकीं शासयन्ती।**
**पाठयामास सुखं प्रीता शुभे वद सदा रामसीता।।१।।**
**रहसि सप्रेम राटयन्ती कुसंशयवनं पाटयन्ती।**
**श्लोकयामास भावनीता शुभे वद मुदा रामसीता।।२।।**
**सखीं सारिकां मानयन्ती फलं मधुरं समानयन्ती।**
**भोजयामास प्रीतिक्रीता शुभे वद सदा रामसीता।।३।।**
**प्रभुं गिरिधरं बोधयन्ती पुरातनमघं शोधयन्ती।**
**वाचयामास वचस्फीता शुभे वद सदा रामसीता।।४।।**

**भौमी**–सीता जी मैना को पढ़ा रही हैं– हे कल्याणी! प्रसन्नता से रामसीता-रामसीता बोलो। मैना को अनार के दाने खिलाती हुई और उसकी प्रतिस्पर्धिनी पिंजरे में स्थित तोती को चुप कराती हुई सीताजी अपनी मित्र मैना को प्रसन्नता से पढ़ानें लगीं। रामसीता रामसीता बोल। एकान्त में मैना को रामसीता रामसीता रटाती हुई कुत्सित संशयों के वन को काटती हुई प्रेमपूर्वक भाव-विभोर हुई सीताजी श्रीराम यश को श्लोक बद्ध करने लगीं। मैना की प्रीति से क्रय की हुई-सी सीताजी सखी मैना का सम्मान करती हुई मधुर फल मँगवाकर उसे खिलाने लगीं और रामसीता रामसीता पढ़ानें लगीं। इसी बहाने **गिरिधर** कवि को भी प्रभु श्रीराम का बोध कराती हुई और साधक कवि के पूर्वकृत पापों को समाप्त करती हुई सुन्दर वाणी से युक्त सीताजी मैना से भी रामसीता रामसीता बुलवाने लगीं।

## सन्दर्भश्लोकः

लीलाशुकमवेक्ष्याथ बुधं छात्रचरं सती।
हैमपञ्जर आसीनं जानकी समपीपठत्।।१।।

**भौमी–**एक बार साध्वी सती सीताजी अपने पूर्वविद्यार्थी लीलाशुक अर्थात् शुक वेषधारी शुकाचार्य जी को सोने के पिंजरे में बैठे हुये देखकर उन्हें भी एक सुन्दर पाठ पढ़ाने लगीं।

## गीत संख्या ३०

पठ शुक सदा सीताराम।
छविविनिन्दितचारूचपलानीलनीरदश्याम ।।१।।
पीतनलिनीकोशकल्पितमुखरमधुकरदाम ।
कनकसुरललिकानुजुष्टतमालगुणाभिराम।।२।।
नवलनीलनिचोलसीलितपीतपटसुखधाम ।
सुकविगिरिधरमधुरमानसकृतयुगलविश्राम।।३।।

**भौमी–** अब रूपक ताल में श्रीसीताराम जी की समवेत् युगल शोभा का वर्णन प्रस्तुत कर रहे हैं। सीताजी प्रत्येक चरण में युगल झाँकी का सम्बोधनात्मक पद प्रयुक्त करती हुई शुक को पढ़ा रही हैं। हे शुक! सदैव सीता–राम सीता–राम पढ़ो। हे युगल सरकार! आपने अपने सम्मिलित छवि से सुन्दर बिजली और नीले बादल को भी निंदित किया है। आप दोनों उसी प्रकार लग रहे हैं, जैसे–पीली कमलिनी के कोश में गुंजायमान भ्रमर बँध गया हो और जैसे स्वर्ण की कल्पलता से आलिंगित गुणों से युक्त तमाल हो। आप दोनों अर्थात् सीता जी नवीन नीली कंचुकी धारण की हुई और आप श्रीराघव पीला वस्त्र धारण किये हुये इस प्रकार समवेत् श्रीसीताराम युगलस्वरूप आप दोनों सुकवि **गिरिधर** के मधुर मन में विश्राम करें। इस प्रकार पढ़ो।

## सन्दर्भश्लोकः

स्वप्ने दृष्ट्वा रघुकुलमणिं नीलपाथोदकान्तं
स्वान्तं शान्तं यतितमनसं प्राविविक्षन्तमारात्।
सीता प्रीता पुलकित तनुर्बोधयन्ती च वेगात्
प्रत्यग्रं तत् स्खलितवचना मातरं प्राह साध्वी।।१।।

**भौमी–**एक बार भगवती सीताजी ने नीले बादल के समान सुन्दर संयत मन वाले, अपने शान्त मन में प्रवेश करते हुए रघुकुलमणि श्रीराम को स्वप्न में देखकर अपनी माँ सुनयना को जगाती हुई, प्रसन्नतापूर्वक रोमांचित होती हुई, गद्गद्–वाणी में सुनयना जी से इस प्रकार कहा।

## गीत संख्या ३१

मातर्मया स्वप्ने दृष्टः किशोरः कोऽपि हृदयं प्रविष्टः।।
नखशिखशुभाङ्गः कोटिकामकमनीयो नैदृग्विधो नरो धात्रा सृष्टः।।१।।

ऊनद्वादशाब्दो विभाव्रीडितनवाब्दो नम्रनलिननयनोऽनुशिष्टः।।२।।
कुमुदबन्धुकरहासः पार्वणेन्दुवदनो दाडिमकुन्ददशनो न्यायशिष्टः।।३।।
प्रातः प्रभाकरकराभवरवसनः इन्दीवरवरणो विशिष्टः।।४।।
पीतोपवीतो धनुर्बाणधृग् विनीतः प्रथमाश्रमो यथा निदिष्टः।।५।।
अर्वाची सुभगा भव सीते मन्त्रमिमं पठन् विनिर्दिष्टः।।६।।
गिरिधरप्रभुः विधुर्मनोनभस्युदितः पुरा नेत्रमृगरथोपविष्टः।।७।।

**भौमी–**हे माँ! आज मैंने स्वप्न में एक किशोर को देखा, जो मेरे हृदय में प्रवेश कर रहा था। वह नख से शिखा–पर्यंत सुन्दर, कोटि–कोटि कामदेवों के भी इच्छा का विषय बन रहा था, इस प्रकार का पुरुष विधाता के द्वारा नहीं बनाया गया। वह किशोर बारह वर्ष की अवस्था का था, उसने अपनी कान्ति से नवीन बादल को लज्जित कर रखा था, उसके नेत्र कमल के समान थे तथा झुके हुए थे और वह पूर्णरूपेण अनुशासित था। उस किशोर की मुस्कान चन्द्रमा की किरण के समान थी, मुख पूर्णचन्द्र जैसा ही था, उसके दाँत–अनार और कुन्द के समान थे, वह न्यायमार्ग का अनुसरण करने वाला शिष्ट था। उस किशोर ने प्रातःकालीन सूर्य के समान तेजोमय वस्त्र धारण किए थे, वह नीले कमल के समान श्यामल, और विशिष्ट था। उसके कन्धे पर पीत–यज्ञोपवीत विराज रहा था, वह धनुर्बाणधारी किशोर इतना विनम्र था, मानों ब्रह्मचर्याश्रम ही उसके शरीर में प्रवेश कर गया हो। और किसी अज्ञात प्रेरणा से निर्दिष्ट होकर वह किशोर ''अर्वाची सुभगा भव सीते'' यह मंत्र पढ़ रहा था। **गिरिधर** कवि का स्वामी वह किशोरचन्द्र जो पहले मेरे नेत्रमृग रथ पर आरूढ़ हुआ था, इस समय मेरे मन आकाश में उदित हो गया है।

**सुनयना प्राह–**

### सन्दर्भश्लोकः

**स्वप्ने यत् यत् त्वया दृष्टं तच्चित्रय मनोरमम्।**
**तदाहं कल्पयिष्यामि शुभाशुभफलं सुते।।१।।**

**भौमी–**अनन्तर सुनयना ने कहा–बेटी! आपने जो स्वप्न में देखा, उसी किशोर को चित्र में बनाकर दिखाइये, फिर मैं शुभाशुभ फल का विचार करूँगी।

### गीत संख्या ३२

श्रीराघवं चित्रयति सीता।
मात्रा निर्दिष्टा संदिष्टा विधिना विवुधविधानविनीता।।१।।
परमप्रेमफलके रतिमस्याः सीता रविकुलरविं चित्रयति।
मित्रवंशसरसीरुहमित्रं निजमित्रं शाश्वतं मित्रयति।।२।।
नवलनलिनचरणौ पदाङ्गुलीः परमरम्यरेखाचतुष्टयम्।
कदलिजानुकेशरिकटिभागं उदरचारुलेखानिरामयम्।।३।।

**कामकलभभुजदण्डयुगलमथ वक्षःस्थलविशालमतिरम्यम्।**
**कम्बुविनिन्दककम्रकण्डमतिपरमहंसमुनिवृन्दप्रणम्यम्।।४।।**
**उन्नतमसृणकपोलमहितझषकेतुकुण्डलं नीरजनयनम्।**
**मन्मथकार्मुकभृकुटिभालतिलकं समस्तशोभासुखचयनम्।।५।।**
**मदनमधुपनिन्दककुञ्चितकचकरसरसिजधृतवरशरचापम्।**
**परमधीरधन्वीशधुरन्धरकोटिकोटिरविसदृशप्रतापम्।।६।।**
**परममनोहरमूर्तिमधुरमथ श्रीवत्साङ्कमनङ्कमङ्कयति।**
**निजसौभाग्यमहिम्ना सीता कोटिकोटिशतरती रङ्कयति।।७।।**
**चित्रं परिनिर्माय वीक्षते वदनं हरिमुखचन्द्रचकोरी।**
**गिरिधरप्रभुपदपङ्कजभ्रमरी बभौ भूमिजा जनककिशोरी।।८।।**

**भौमी-** अब हवेली पद्धति में गीत प्रस्तुत करते हैं–माँ के निर्देश पर और ब्रह्माजी के विशेष आग्रह पर अनेक विधानों में प्रशिक्षित सीताजी श्रीराघव का चित्र बना रही हैं। अपनी मधुर रतिरूप स्याही से परम प्रेम के चित्र फलक पर सीताजी सूर्यकुल के सूर्य श्रीराम को चित्र के माध्यम से अपना नित्य विश्वासपात्र बना रही हैं। चित्र में सीताजी श्रीराम के नवीनकमल जैसे चरणों को सुन्दर प्यारी अंगुलियों को, चरणों में कमल–ध्वज–अंकुश और वज्र जैसी चार रेखाओं को कदली जैसे पिदुरियों, सिंह जैसे कटितट और उदर पर तीन रेखाएँ भी चित्रित कर रही हैं। कामदेव के हाथी के शावक के शुँड जैसी भुजाएँ और विशाल वक्षस्थल, परमहंसों और मुनिवृन्दों के लिए प्रणम्य, शंख को लज्जित करने वाला गला चित्रित किया। सीताजी ने चित्र में प्रभु का उभरा हुआ कपोल, मकराकृत कुण्डल,कमल जैसा नेत्र और सभी शोभाओं का संग्रहालय मस्तक पर तिलक चित्रित किया। कामदेव के भ्रमरों को लजाने वाले घुँघराले काले बाल, हाथ में धनुष–बाण धारण किए हुए, अत्यन्त धीर प्रकृति, धनुर्धारियों में सर्वश्रेष्ठ, कोटि–कोटि सूर्यों के समान प्रतापी किशोर को चित्रित किया। आज सीताजी चित्र में प्रभु की परम मनोहर मूर्ति और निष्कलंक श्रीवत्सलांछन को भी अंकित कर रही हैं और साथ ही साथ अपने सौभाग्य की महिमा से करोड़ों–करोड़ों रतियों को भी दरिद्र बना रही हैं। इस प्रकार **गिरिधर** कवि के स्वामी श्रीराम के चरण कमल के भ्रमरी भूमिनन्दिनी जनकराज पुत्री सीताजी श्रीराम के मुखचन्द्र की चकोरी बनी हुई प्रभु का चित्र बनाकर उन्हीं के मुखचन्द्र को निहार रही हैं।

## गीत संख्या ३३

**सुनयना प्राह-**

**इदं चित्रं शृणु वत्से महाराजदशरथचक्रवर्तिसूनो रामस्यास्ति हे।**
**यत्र नित्यं सच्चिदानन्दः सुखस्यापि महासिन्धुः दुःखस्य लेषो यत्र नास्ति हे।।१।।**
**अस्तहेयप्रत्यनीका सकला कल्याणगुणा व्योम्नि यथा भानि यत्र भान्ति हे।**
**लोकसंग्रहोपयुक्ता मर्यादादिश्रेष्ठगुणा यत्र निरवद्या प्रतिभान्ति हे।।२।।**
**यदि ते वरेण्यः पुत्रि रामचन्द्रो वरो भूयान्निमिवंशः कृतार्थतां यातु हे।**
**गायं गायमिदं गीतं तवैव विवाहस्य गिरिधरभारती विभातु हे।।३।।**

**भौमी-** अब सुनयना जी कहने लगीं- हे बेटी! सुनिए, यह चित्र तो चक्रवर्ती महाराज दशरथजी के ज्येष्ठपुत्र श्रीराम का है। जहाँ निरन्तर सच्चिदानन्द है, जहाँ सुख का महासागर है और दुःख का लेश भी नहीं है। बेटी! जिस प्रकार आकाश में नक्षत्र मंडल विराजते हैं, उसी प्रकार हेयगुणों से दूर सभी कल्याण गुणगण जहाँ विराजमान हैं और जहाँ लोकसंग्रहोपयोगी मर्यादा आदि श्रेष्ठगुण पापरहित होकर प्रतिविम्बित हो रहे हैं। हे बेटी! यदि इस प्रकार श्रेष्ठ श्रीराम जी तुम्हारे वर बन जायँ, तो निमिवंश कृतार्थ हो जाय और तुम्हारे विवाह का यह गीत गा-गाकर **गिरिधर** कवि की सरस्वती भी सुशोभित हो उठे।

**सुनयना प्राह-**

## गीत संख्या ३४

**परन्त्वेकमसमञ्जसं चित्तं स्पृशति पुत्रि सुकोमलो दशरथकुमारो हे।**
**कथङ्कारं धनुर्भङ्गं करोत्वेष बालकः कार्मुकः कठोरो वज्रसारो हे।।१।।**
**नित्यं परिपूजय भवानीं सीते ध्यानपरा! कमलाविमलयोर्नित्यं स्नाहि हे।**
**मंगलागौरीनाम व्रतं कुरु कल्याणि हे! द्विजेभ्यो वसनमन्नं राहि हे।।२।।**
**इतः पश्चिमायां दिशि अयोध्या सुनगरी हे, मनुना विनिर्मिता चकास्ति हे।**
**आयता रवियोजनं त्रीणि चापि विस्तृता सा द्वितीयामरावती विभाति हे।।३।।**
**तत्र श्वसुरालयस्ते स्वप्नफले निश्चितो हे सीते अयोध्यां शीघ्रं याहि हे।**
**भूत्वा गिरिधरप्रभुगेहिनी विदेहकन्ये वैष्णवान् सदैव परिपाहि हे।।४।।**

**भौमी-**महारानी सुनयना कहने लगीं-सब कुछ ठीक है पर एक ही असामंजस्य मेरे चित्त को झकझोर रहा है। बेटी दशरथ राजकुमार बहुत कोमल हैं। बालक श्रीराम धनुर्भंग कैसे कर सकेंगे? यह शिवधनुष तो वज्र के समान कठोर है। सीते बेटी! आप ध्यान-परायण होकर पार्वती जी की नित्य पूजा करें, कमला-विमला नामक नदियों में स्नान करें, मंगला गौरी नामक व्रत करें और ब्राह्मणों को वस्त्र-अन्न दान करें। यहाँ से पश्चिम दिशा में अयोध्या नाम की नगरी है, जिसकी सीमा वैवस्वत मनु ने बनवाई है। वह बारह योजन आयत और तीन योजन विस्तृत है। वह दूसरी अमरावती जैसी लगती है। इस स्वप्नफल के अनुसार अयोध्या में ही आपकी ससुराल निश्चित है। आप शीघ्र ही श्रीअवध पधारें। **गिरिधर** कवि के स्वमी श्रीराम की धर्मपत्नी बनकर आप सभी वैष्णवों की रक्षा करेंगी।

**विशेष-** यह गीत मैथिल अँचल के एक विवाह लोकधुन की ढाल के आधार पर निबद्ध है। जिसका बोल निम्नवत् है-

**मड़ये में बैसल जोगी जनकराजा करइ छथ बेटी क दान हे।**

## सन्दर्भश्लोकः

**श्रुत्वा मातुर्गिरं सीता नरीनर्ति स्म भामिनी।**
**कादम्बिनीनिनादेन मयूरीव गतक्लमा।।१।।**

**भौमी-**इस प्रकार माँ सुनयना की वाणी सुनकर सीताजी उसी प्रकार नाचने लगीं जैसे मेघमाला के निनाद से प्रसन्न होकर मोरनी नाचने लगती है।

## गीत संख्या ३५

**विलसति जनककिशोरी सीता पुलकिततनुः स्वभावविनीता।।१।।**
**विन्ध्यमिवानघरघुपतिभावं सा जुगोप किल कोकिलरावम्।।२।।**
**हृदयावनिपालितसुरवल्ली अनुदिनमण्डितमञ्जुलमल्ली।।३।।**
**सा निनाय शरदं सुकिशोरी गिरिधरप्रभुमुखचन्द्रचकोरी।।४।।**

**भौमी–** अब कवि स्वयं तीन ताल में भगवती के सौन्दर्य का वर्णन कर रहे हैं। स्वभाव से विनम्र, रोमांच शरीर वाली जनकनंदिनी सीताजी सुशोभित हो रही हैं। कोकिलाओं को भी मुखरित करने वाले निष्पाप विंध्याचल जैसे श्रीराम के प्रति मधुर–भाव को सीताजी ने अपने हृदय में छिपा लिया। हृदयरूप पृथ्वी में उन्होंने भावनारूप कल्पलता का पालन किया और मिलन की आशारूप मल्लिका को निरन्तर सुशोभित किया। इस प्रकार **गिरिधर** कवि के स्वामी श्रीराममुखचंद्रचकोरी सीताजी ने वर्षों बिता दिये।

## गीत संख्या ३६

**सपदि मां कदा मिलिष्यसि नाथ।**
**प्रणतपाल निजभक्तमनोरथपारिजात रघुनाथ।।१।।**
**कदा शुष्कजलमल्लोचनपथपथिकस्त्वं भवितासि।**
**दिवानिशं त्वत्कृते रुदन्त्यां कदा प्रभो द्रवितासि।।२।।**
**कदा भवान् समेत्य मिथिलां मम पाणिग्रहं विधाता।**
**कदा विरहपावके दहन्तीं भविता वै मम त्राता।।३।।**
**हे करुणाकूपारकृपाकर सपदि भूमिजां पाहि।**
**मज्जन्तं भववारिनिधौ गिरिधरं कविं किल त्राहि।।४।।**

**भौमी–** अब सीता जी हवेली पद्धति का गीत गा रही हैं– हे प्रणतपाल! हे अपने भक्तों के मनोरथों के लिये कल्पवृक्ष स्वरूप, रघुकुल के नाथ मेरे नाथ! आप मुझे अति शीघ्र कब मिलेंगे? हे प्रभो! जिनके आँसू सूख गये हैं, ऐसे मेरे नेत्र, पथ के पथिक आप कब बनेंगे? दिन–रात आपके लिये रोती हुई मुझ सीता पर आप कब द्रवित होंगे? आप मिथिला में आकर मेरा पाणिग्रहण कब करेंगे और विरह की आग में जलती हुई मुझ सीता की आप कब रक्षा करेंगे? हे करुणा के सागर! कृपा की खान श्रीराम! मुझ सीता की शीघ्र रक्षा कीजिये और भवसागर में डूबते हुये **गिरिधर** कवि को भी बचा लीजिये।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये बालकाण्डे**
**गीतसीताविर्भावो नाम पञ्चमः सर्गः।।**

इस प्रकार श्री चित्रकूट तुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण गीतसीताभिराम संस्कृतगीतमहाकाव्य के बालकाण्ड में गीतसीताविर्भाव नामक पञ्चम सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये
# बालकाण्डे

## गीतयुगलकैशोरको नाम

## षष्ठः सर्गः

### सन्दर्भश्लोकः

स्वप्ने दृष्टं चिद्जगद्भ्यां विशिष्टं
रामं श्यामं सर्वलोकाभिरामम्।
ध्यायन्तीशा बाष्पपर्याकुलाक्षी
शं नो लेभे शान्तचित्ताऽपि सीता।।१।।

**भौमी-** अब कवि अगली कथा को क्रमबद्ध करते हुए श्लोक प्रस्तुत करते हैं—स्वप्न में दर्शन के विषय बने हुए चेतनजीव तथा जड़-जगत से विशिष्ट सम्पूर्ण लोकों को आनन्द देने वाले श्यामवर्णी भगवान श्रीराम को ध्यान में लाती हुई सीता जी शान्तचित्त होती हुई भी शान्ति नहीं पा रही थीं।

### गीत संख्या-१

वीता समस्ता रात्री रघुनाथो न दृष्टः।।
क्षणमपि न लभे निद्रां नेत्रे तनुतेऽकं तन्द्रा तनुवेत्रे।
ग्लपयति मां भयदात्री रघुनाथो न दृष्टः।।१।।
नये निशां तारा गणयन्ती नृपकुललज्जामवगणयन्ती।
खिद्येऽहं कृशगात्री रघुनाथो न दृष्टः।।२।।
रोचेते भोजनशयने प्रावृषायिते नितरां नयने।
विरहव्यथा तनुदात्री रघुनाथो न दृष्टः।।३।।
मिथिलातोऽप्यतिदूराऽयोध्या किं साक्षात्कार्या श्रुतिबोध्या।
मम सौभाग्यविधात्री रघुनाथो न दृष्टः।।४।।
वसति प्रियतमो दूरे देशे गिरिधरप्रभुरथ पितुर्निदेशे।
कथं प्रेष्यतां पत्री रघुनाथो न दृष्टः।।५।।

**भौमी-** अब सीता जी विरह के गीत गाती हुई कहती हैं–अहो! सम्पूर्ण रात्रि बीत गई पर रघुनाथ जी के दर्शन नहीं हुए। मैं एक क्षण भी नेत्रों में निद्रा नहीं प्राप्त कर रही हूँ और तन्द्रा मेरी बेंत लता जैसी शरीर में दुःख का विस्तार करती जा रही है। यह भय देने वाली जमुहाई मुझे दुर्बल बना रही है। मैं क्या करूँ? राजकुल की लज्जा की भी चिन्ता न करती हुई तारा गिन–गिनकर रात बिता रही हूँ। अभी तक रघुनाथ जी के दर्शन नहीं हुए अतः दुर्बलांगी मैं बहुत दुःखी हो रही हूँ। भोजन–शयन कुछ भी नहीं अच्छा लग रहा है। मेरी आँखें बरसाती हो चुकी हैं। विरह की व्यथा मेरे शरीर को काट डाल रही है। अभी तक रघुनाथ जी के दर्शन नहीं हुए। अहो! मेरे सौभाग्य की निर्मापिका श्रीअयोध्या मिथिला से बहुत दूर है। उस वेद के प्रतिपाद्या के दर्शन कैसे करूँ? अभी तक रघुनाथ जी के ही दर्शन नहीं हुए। **गिरिधर** कवि के स्वामी मेरे प्रियतम श्रीराघव बहुत दूर देश में निवास कर रहे हैं और वे अपने पिताश्री के निर्देश में ही रहते हैं। मैं पत्रिका कैसे भेजूँ?

## गीत संख्या–२

**कदा मिलिता मां श्रीरघुवीरः।।**
**तनुसुषमाजिततरुणतमालो जलधरसुन्दरश्यामशरीरः।।१।।**
**कोमलकोसलराजकिशोरः शतशतसागरसमगम्भीरः।।२।।**
**विजितनवाब्दोऽपि द्वादशाब्दः परं धर्मधीरो धन्वी धुरिधीरः।।३।।**
**शिशु रविवसनो दाडिमदसनो नाकिनमितपदसंयुगधीरः।।४।।**
**गिरिधरप्रभुः कदा मया रंस्यते श्रितसरयूतटकुञ्जकुटीरः।।५।।**

**भौमी-** अहो! अपने शरीर की शोभा से नवीन तमाल को जीतने वाले बादल के समान सुन्दर श्याम शरीर अत्यन्त कोमल चक्रवर्ती महाराज के किशोर, अनेक समुद्रों के समान गम्भीर नवीन बादल को जीतकर भी बारह वर्ष के किशोर, धर्म और धनुर्विद्या में धीर, बालसूर्य के समान वस्त्र धारण करने वाले, अनार के समान दन्त पंक्ति वाले, अपने चरणों में देवताओं को भी झुकाने वाले, युद्ध में स्थिर रहने वाले **गिरिधर** कवि के स्वामी श्रीराम –सरयू के तट पर स्थित कुंज–कुटीर में मेरे साथ कब रमण करेंगे?

## गीत संख्या–३

**राम राजीवलोचन मिलिष्यसि कदा।**
**भक्तभीतिमोचन तिलकधेनुरोचन लोचनपथे मे विचरिष्यसि कदा।।१।।**
**स्पर्शं स्पर्शं कपोलयोः कम्रकरकमलं विरहवारिशुचम्मे हरिष्यसि कदा।।२।।**
**प्रणयकोपमानिनीं च मानयन् रसज्ञः शिरसि पाणिपङ्कजं धरिष्यसि कदा।।३।।**
**गिरिधरमनोनिकुञ्जे मधुरभावपुष्पपुञ्जे मया समं राघव विहरिष्यसि कदा।।४।।**

**भौमी-** फिर दादरा ताल में सीताजी गा रही हैं– हे राजीवलोचन श्रीराम! आप मुझे कब मिलेंगे? हे भक्तों के भय को दूर करने वाले, गोरोचन तिलक करने वाले प्रभु श्रीराम आप मेरे नेत्र पथ पर कब विचरण करेंगे? मेरे कपोलों पर कोमल करकमल का स्पर्श कर–करके आप मेरे विरह श्रमबिन्दुओं को कब पोछेंगे? हे रसिक प्रभु! प्रणयकोप में रूठी हुई मुझ सीता को मनाते हुए मेरे सिर पर अपने करकमल कब रखेंगे? हे राघव! मधुर भावपुष्पों से सजे हुए **गिरिधर** कवि के मनरूप निकुंज में आप मेरे साथ कब विहार करेंगे?

## सन्दर्भश्लोकः

दृष्ट्वा निशीथेऽथ निशाधिनाथं
वक्त्रप्रभाहीननिशाकराभा ।
निनिन्द निन्दास्पदमेव मत्वा
दोषाकरं भूमिसुता च दोषा।।१।।

**भौमी–**अपने मुखप्रभा से चन्द्रप्रभा को लज्जित करने वाली भूमि कन्या जानकी जी अर्द्धरात्रि में चन्द्रमा को देखकर उस दोषाकर को दोषों का स्थान मानती हुई रात्रि में उसकी निन्दा करने लगीं।

## गीत संख्या-४

विलससि किमु निशि नभसि निशाकर।।
रोहिणिसहितो महमहितस्त्वं, किम् मां हससि शशाङ्ककलाधर।।१।।
गौरुदारिको नित्यलम्पटो मा साहसं कृथा दोषाकर।।२।।
पीतकलः सकलङ्को वक्रः सैंहिकेयहतवैभव सज्वर।।३।।
गिरिधरप्रभुनामोत्तरार्धबलतो भव भाले भासि विभास्वर।।४।।

**भौमी-** सीता जी हवेली पद्धति में गाती हुई कहती हैं–हे चन्द्रमा! तुम आकाश में कैसे सुशोभित हो रहे हो? अपनी अन्य पत्नियों का अपमान करके केवल रोहिणी के साथ रहकर उसके साहचर्य से उपस्थित महोत्सवों में मग्न होकर शशिचिन्ह से कलंकित कलाओं को धारण करने वाले चन्द्र! तुम मेरी हँसी क्यों उड़ा रहे हो? तुम गुरुपत्नीगामी तथा नित्यलम्पट हो। अतः हे दोषाकर अर्थात् दोषों की खान चन्द्रमा! निरर्थक साहस मत करो। हे राहु के द्वारा नष्ट वैभव, चिन्ताकुल चन्द्रमा! देवताओं ने तुम्हारी कलाएँ पी ली हैं। तुम कलंकी और टेढ़े हो। तुममें केवल एक ही विशेषता है कि **गिरिधर** के प्रभु के स्वामी श्रीराम का उत्तरार्ध चन्द्र ही तुम्हारा नाम है। इसी बल से तुम शंकर भगवान के मस्तक पर विराज रहे हो अर्थात् यदि रामचन्द्र शब्द का उत्तरार्ध चन्द्र शब्द तुम्हारा नाम न होता तो कदाचित् तुमको भगवान शंकर अपने मस्तक पर न स्वीकारते।

## गीत संख्या ५

शीघ्रमायाहि हे श्रीराम विरहिणी नितरां व्यथे।
हे शिवमानसराजहंस भवभीषणविपद्विराम।।१।।
त्वदृते युगायते खलु निमिषः कल्पायते त्वां विना दिवसः।
सर्वं जानासि पुण्यप्रणाम।।२।।
शून्यायते सकलसंसारः भोगो रोगो भूषणं भारः।
न मे रोचते मिथिलाधाम।।३।।
मा कृथा गिरिधरप्रभो विलम्बं देहि देव निजकरावलम्बम्।
पाहि सुकविगीतसीताभिराम।।४।।

**भौमी-** सीताजी पुनः अवध-मिथिला में प्रचलित लोकधुन की ढाल में गा रही हैं– हे श्रीराम! आप शीघ्र आ जाइये, विरहिणी मैं सीता बहुत व्यथित हो रही हूँ। हे शिवजी के मनमानस सरोवर के राजहंस! हे संसार की भयंकर विपत्ति नष्ट करने वाले प्रभु! आपके बिना एक क्षण युग समान लग रहा है और आपके अभाव में एक-एक दिन कल्प समान बीत रहा है। हे पुण्य-प्रणाम प्रभु! आप सब कुछ जानते हैं। मैं विरहिणी सीता आपके बिना बहुत व्याकुल हूँ। आपके बिना मुझे सारा संसार शून्य लग रहा है। मुझे भोग-रोग तथा आभूषण भार प्रतीत हो रहे हैं। मुझे मिथिलाधाम भी नहीं अच्छा लग रहा है। हे **गिरिधर** कवि के स्वामी श्रीरघुनाथ जी! अब विलंब मत कीजिए। हे देव! मुझे अपने करकमल का सहारा दीजिए और श्रेष्ठ कवियों के गीत का विषय बने हुए साकेत विहारी प्रभु अब मुझ मिथिलाविहारिणी सीता की रक्षा कीजिए।

**विशेष-** यह गीत एक आँचलिक लोकधुन पर निबद्ध है, जिसका बोल निम्नवत् है–

**आओ शबरी के घर श्रीराम, बलैंया लेती मैया तेरी।।**

## सन्दर्भश्लोकौ

**विभावयन्ती रघुवर्यमादरात्तदीयसंदर्शनसक्तमानसा।**
**निषेदुषी दुग्धमतीतटे सती समागतं नारदमाददर्श ह।।१।।**
**कृतप्रणामां स उवाच भूमिजां प्रहस्य वाचंयममौलिशेखरः।**
**खरोः खरारिः किमुतेप्सितो वरो ब्रवीतु चेद् गोप्यमिदं न मन्यते।।२।।**

**भौमी-**अब कवि दो सन्दर्भश्लोकों से कथा को क्रमबद्ध कर रहे हैं– सीताजी आदरपूर्वक श्रीराम का चिन्तन कर रही हैं क्योंकि श्रीराम के दर्शन में ही उनका मन आसक्त है। इस प्रकार श्रीराम में तन्मय हुई दूधमती के तट पर बैठी हुई सीताजी ने अपने पास आये हुये नारद जी को देखा। और उन्हें प्रणाम किया फिर अल्पभाषियों में मुकुटमणि नारद जी ने पृथ्वीपुत्री सीता जी से कहा–राजकुमारी! लगता है आप खर के शत्रु श्रीराम को ही क्या अपना ईप्सित वर स्वीकार करती हैं। यदि यह विषय बहुत गोपनीय न हो तो मुझे बतायें।

## गीत संख्या ६

**श्रीसीता गायति–**

**महर्षे श्रूयतां शान्तः नरो मे प्रार्थितः कान्तः।**
**सुरर्षे श्रूयतां शान्तः नरो मेऽभ्यर्थितः कान्तः।।१।।**
**तपस्वी सञ्जितक्रोधः अनासक्तः स्फुरद्बोधः।**
**महान् कृतकामसंरोधः नरो मे प्रार्थितः कान्तः।।२।।**
**दयावान् धार्मिकः श्रीमान् विमुक्तस्त्यागवान् धीमान्।**
**प्रवीरःकालजिद् ह्रीमान् नरो मे प्रार्थितः कान्तः।।३।।**
**चिरायुः शीलमाङ्गल्यः कलितकारुण्यकौशल्यः।**
**सुमङ्गल्यो विगतशल्यः नरो मे प्रार्थितः कान्तः।।४।।**
**गतव्यभिचारवैगुण्यः लसत्चारित्र्यनैपुण्यः।**
**गदितगिरिधरगिरापुण्यः नरो मे प्रार्थितः कान्तः।।५।।**

**भौमी-** अब सीता जी गा रही हैं–हे महर्षि! सुनिये! मैंने शान्तपुरुष को ही पति रूप में चाहा है। हे देवर्षि! सुनिए, मैंने इन्द्रियों के दमनकर्त्ता पुरुष को ही पति रूप में अभ्यर्थना का विषय बनाया है। मैंने उस पुरुष को पति रूप में चाहा है जो तपस्वी होते हुए भी क्रोध का विजेता हो और जो ज्ञानी होकर भी आसक्त न हो और जो महान होकर भी काम का विजेता हो। जो धार्मिक होकर भी दयालु हो, जो त्यागवान् होकर भी मुक्तिपथ का पथिक एवं बुद्धिमान हो। जो लज्जाशील वीर होकर भी काल का विजेता हो, वही वर मेरी इच्छा का विषय है। जो दीर्घायु होकर भी करुणा और कुशलता से युक्त होता हुआ शीलमांगल्य अर्थात् नारी को प्रसन्न करने की विधि जानता हो और जो सर्वमंगलमय तथा संसार की सभी पीड़ाओं से दूर हो, वैसा ही वर मेरी कामना का विषय है। जिसमें व्यभिचाररूप दुर्गुण न हो तथा जिसमें चरित्र रक्षा की निपुणता हो और **गिरिधर** कवि की वाणी से जिसके पुण्य का गान किया गया हो, ऐसा सकल कल्याण गुण-गण सम्पन्न पुरुषोत्तम ही मेरा पति हो सकता है।

## सन्दर्भश्लोकः

**भूमिजा भारतीभासा भासितस्वान्त ईश्वरः।**
**मुनीनां मानयन् मान्यां प्रजगौ तत्र नारदः।।१।।**

**भौमी-** इस प्रकार भूमिनन्दिनी सीताजी की सरस्वती की शोभा से सुशोभित अन्तःकरण मुनियों के स्वामी नारद जी सम्माननीय सीताजी का सम्मान करते हुये इस प्रकार गाने लगे।

## गीत संख्या ७

**सीते! एवंविधो नर एकः।**
**तमतिरिच्य नापरस्त्रिलोक्यां वच्मि चेति सविवेकः।।१।।**
**कारुणिको विनयी मृदुभाषी सच्चरित्रमयमूर्तिः।**
**सदाचारनिपुणो गुरुनिष्ठो विहितमनोरथपूर्तिः।।२।।**
**नीलेन्दीवरघनश्यामलो मधुरः करुणासिन्धुः।**
**निर्विकारविग्रहो धन्विधुर्यो निजसेवकबन्धुः।।३।।**
**ऐक्ष्वाकः कमलेक्षण ईशः बुधो नीरदश्यामः।**
**गिरिधरप्रभुः विभुर्विदितात्मा दाशरथिः श्रीरामः।।४।।**

**भौमी-**हे सीते! जिस प्रकार के वर की आपने इच्छा की है इस प्रकार का वर तो तीनों लोकों में एक ही है। यह बात मैं विवेक से कहा रहा हूँ कि मेरे द्वारा संकेतित वर के अतिरिक्त त्रिलोकी में कोई है ही नहीं, जो आपके अनुरूप हो जिसका मैं संकेत कर रहा हूँ वे करुणानिधान, विनम्र, मृदुभाषी, श्रेष्ठ चरित्रमय मूर्ति से युक्त हैं। वह सदाचार में निपुण गुरुजनों में निष्ठा रखने वाले और स्वजनों के मनोरथों की पूर्ति करने वाले हैं। वे नीले कमल के समान श्यामल-मधुर स्वभाव से सम्पन्न करुणा के सागर, सभी विकारों से रहित, अद्वितीय धनुर्धर और अपने सेवकों के बन्धु हैं। वे इक्ष्वाकु वंश में उत्पन्न सर्वसमर्थ, सर्वव्यापी, सबके मन को जानने वाले, सभी मूर्त-द्रव्यों के साथ रहने वाले **गिरिधर** कवि के स्वामी दशरथनन्दन श्रीराम ही आपकोवर रूप में प्राप्त होंगे।

## सन्दर्भश्लोकः

**श्रुत्वैव राघवगुणान्विबुधर्षिवक्त्रादानन्दवारिनिधिलीनमना महीजा।**
**प्रोद्बुद्धपूर्वपरिसेवितरामशोभा सुस्नेहगद्गद् गिरा निजगाद सीता।।१।।**

**भौमी–** इस प्रकार नारदजी के मुख से भगवान श्रीराम के गुणों को सुनकर पूर्व अनुभूति की हुई श्रीराम की सेवा का स्मरण करके आनन्द के महासागर में डूबी हुई भूमिनन्दिनी सीता जी ने विशुद्ध प्रेम से गद्गद्वाणी में इस प्रकार कहा।

## गीत संख्या ८

**महर्षे! प्रोच्यतां कृपया कदा रामो मिलिष्यति माम्।**
**सुरर्षे! भण्यतां दयया कदा श्यामो मिलिष्यति माम्।।१।।**
**कदा कोमलकमलपद्भ्यां जनकपुरमागतः श्रीमान्।**
**विरहविग्नां वनजदृग्भ्यां स्वयं साक्षात् करिष्यति माम्।।२।।**
**कदा भङ्क्त्वा धनुः शैवं मुहुः कृत्वा बलं दैवम्।**
**शिरसि धृतपाणिराजीवं स्वयं सः स्वीकरिष्यति माम्।।३।।**
**स्वयंवरराजकं जित्वा समेषां संशयं हृत्वा।**
**कदा गिरिधरप्रभुर्नीत्वा प्रियेति व्याहरिष्यति माम्।।४।।**

**भौमी–** भगवती सीता जी कहती हैं–हे महर्षि! आप कृपा करके बतायें कि श्रीराम मुझे कब मिलेंगे? हे देवर्षे! आप दयापूर्वक आज्ञा दें कि श्यामवर्ण श्रीराम मुझे कब मिलेंगे? हे महर्षे! अपूर्व शोभा सम्पन्न मेरे प्रभु कोमल चरणकमलों से मिथिला पधारकर मुझ विरह–विकल सीता को कमल नेत्रों से कब निहारेंगे? हे महर्षे! वह कब सुन्दर क्षण होगा जब श्रीराम शिव–धनुष तोड़कर सबको देवोचित–बल का दर्शन कराकर मेरे शिर पर अपने कमल कर का स्पर्श करके स्वयं मुझे स्वीकार करेंगे? स्वयंवर में आये हुये राजाओं को जीतकर सभी का संशय दूर करके **गिरिधर** कवि के स्वामी श्रीराम मुझे प्राप्त करके कब प्रिया जी कहकर मुझे बुलायेंगे?

## गीत संख्या ९

**अपि च–**

**रामं त्रिलोकाभिरामं कदा नु मुने साक्षात्करिष्ये।**
**मिथिलारङ्गमञ्चमभियातं नवलनयननिन्दितजलजातम्।**
**त्रिभुवनविपद्विरामं कदा नु मुने साक्षात्करिष्ये।।१।।**
**कुतुकभग्नभवभीषणचापं हृतनिजपदरतदारुणतापम्।**
**नरकुलललितललामं कदा नु मुने साक्षात्करिष्ये।।२।।**
**कारुणिकं विनयिनं सुशीलं मर्यादापुरुषोत्तमलीलम्।**
**तनुजितशतशतकामं कदा नु मुने साक्षात्करिष्ये।।३।।**

धृतनिषङ्गसायककोदण्डं मदनकलभकरसमभुजदण्डम्।
गिरिधरदृग्विश्रामं कदा नु मुने साक्षात्करिष्ये।।४।।

**भौमी-** सीता जी और भी नचारी की धुन में गा रही हैं–हे मुने! तीनों लोकों को आनन्द देने वाले श्रीराम का मैं कब साक्षात्कार करूँगी? हे महर्षे! मिथिला के रंगमंच पर पधारे हुये अपने नवीन नेत्रों से कमल की शोभा की भी निन्दा किये हुये तीनों लोकों की विपत्ति को दूर करने वाले रघुनाथ जी को मैं कब निहारूँगी? जिन्होंने खेल-खेल में शंकर जी का धनुष तोड़ दिया है और सेवकों के दारुण-ताप को हर लिया है, ऐसे मनुष्य-कुल के सुन्दररत्न का दर्शन मैं कब करूँगी? करुणानिधान, विनम्र, सुशील, मर्यादा पुरुषोत्तम की लीला से सम्पन्न अपनी शोभा से कोटि-कोटि कामों को जीतने वाले प्रभु को मैं कब देख पाऊँगी? धनुष-बाण-तरकस धारण किये हुये, काम हस्तिशावक के शुंड समान भुजदण्ड वाले, **गिरिधर** कवि के नेत्रों में विश्राम करने वाले प्रभु श्रीराम का मैं कब साक्षात्कार करूँगी?

## सन्दर्भश्लोकः

पुनः शांशयिकी बाला बालसारङ्गलोचना।
प्राह मानससारङ्गन्यस्तरामपदाम्बुजा।।१।।

**भौमी-** पुनः बाल-मृगनयनी अपने मन-भ्रमर को श्रीराम के चरणकमल में अर्पण की हुई सीता जी सन्देहपूर्ण अवस्था में बोलीं-

## गीत संख्या १०

योऽवतारी कथं सोऽवतारो भवेदेष प्रश्नो महर्षे समाधीयताम्।
निर्विकारः कथं सद्विकारं व्रजेदेष प्रश्नो महर्षे समाधीयताम्।।
व्यापकः प्राप्नुयात् किं प्रभो व्याप्यतां प्रापकः प्रातु किं प्रायशः प्राप्यताम्।
सर्वदेशी कथं चैकदेशी लसेदेष प्रश्नो महर्षे समाधीयताम्।१।।
किं महत्त्वेऽणुता किं गुरोर्लाघवं किं नु माया प्रपञ्चः स्पृशेन् माधवम्।
किं जगच्छासकः शिष्यतां संश्रयेदेष प्रश्नो महर्षे समाधीयताम्।२।।
योह्यजन्मा वृणीते कथं जन्म भो, न्यस्तकर्मा प्रकुर्वीत किं कर्म भो।
यः समेषां पिता किं सुतः संभवेदेष प्रश्नो महर्षे समाधीयताम्।।।३।।
भूमिजाभारतीमग्नवैशारदो भाति सहशारदो मूकितो नारदः।
जानकीजानिलालित्यलीलामृतं गिरिधरेणापि नक्तं दिवं पीयताम्।।४।।

**भौमी-**अब सीता जी प्रश्न की मुद्रा में गीत गा रही हैं–हे महर्षे! जो प्रभु अवतारी हैं, वे अवतार कैसे हो सकते हैं? कृपया मेरे इस प्रश्न का समाधान कीजिये। जो साकेतबिहारी श्रीराम सर्वथा निर्विकार हैं, वे विकारयुक्त इस संसार में कैसे आ सकते हैं? हे देवर्षे! मेरे इस प्रश्न का समाधान कीजिए। हे मुनिवर्य! व्यापक व्याप्य कैसे हो सकता है? प्रापक प्राप्यता को कैसे पूर्ण करेगा? जो सर्वदेशी है वह एकदेशी बनकर कौसल्या जी के आँचल में कैसे शोभा पा सकता है? आप इस प्रश्न का समाधान करें। क्या महत् तत्व में

अणुत्व आ सकता है? क्या गुरु लघु बन सकता है? क्या जगत का शासक किसी की शिष्यता स्वीकार कर सकता है? मेरे इस प्रश्न का समाधान किया जाय। जो अजन्मा है वह जन्म कैसे स्वीकार कर सकता है? जो सभी कर्मों से दूर है, वह कर्म में प्रवृत्त कैसे होगा? जो सभी का पिता है, वह पुत्र कैसे बन सकता है? मेरे इस प्रश्न का समाधान किया जाय। इस प्रकार भूमिनन्दिनी सीताजी की सरस्वती ने नारदजी की सारी चतुरता मटियामेट कर दी और शारदाजी के साथ नारदजी चुप हो गये। भगवान श्रीसीताराम का यह ललित–लीलामृत रात–दिन **गिरिधर** कवि के द्वारा भी पान किया जाय।

## गीत संख्या ११

**सकलविरुद्धधर्माश्रयतावच्छेदकत्वं भगवत्वं प्रोक्तं बुधैः शृणु सीते स्वामिनि।**
**स एवावतारी स एवावतारो निर्विकारः परिणामवादस्तु निश्चिनु सीते स्वामिनि।।१।।**
**अहोरात्र इव काले सर्वेऽपि विरुद्धाधर्मा राम एवं नित्यमेव चिनु सीते स्वामिनि।**
**भक्तभावनानुसारी सत्प्रपन्नभयहारी अवतारी हरिप्रेम तनु सीते स्वामिनि।।२।।**
**जगज्जन्मस्थितिलयहेतुस्त्रातश्रुतिसेतुर्भानुवंशकेतुर्ज्ञात्वा धिनु सीते स्वामिनि।**
**निःसंशये ब्रह्मणि विचारपरशुधाराद्वारा संशयविपिनमपि क्षिणु सीते स्वामिनि।।३।।**
**स निर्गुणो निराकारः सगुणः साकारो ब्रह्म रामस्तत्र स्वमनः प्राहिणु सीते स्वामिनि।**
**नैव निर्धर्मकः स तु धर्म एव वै शरीरी गिरिधरप्रभुं वरं वृणु सीते स्वामिनि।।४।।**

**भौमी–**अब नारद जी मिथिलाँचल की लोकधुन में उत्तर दे रहे हैं–हे स्वामिनि सीता जी सुनिये! विद्वानों ने भगवान का लक्षण करते हुए कहा है–'सकल विरुद्ध धर्माश्रयतावच्छेदकत्वं भगवत्वं' अर्थात् भगवान में सभी विरुद्ध–धर्म एक साथ रहा करते हैं। इसीलिए उनमें अवतारीत्व और अवतारत्व ये दोनों विरुद्ध धर्म एक साथ रहते हैं। अतः वे ही प्रभु श्रीराम साकेतलोक में अवतारी और श्रीअवध में अवतार भी हैं। स्वामिनी सीता जी! परमेश्वर का परिणामवाद निर्विकार है। आप इस प्रकार निश्चय कर लीजिए। यद्यपि आचार्य लोग ब्रह्म को परिणामी मानकर परिणामजनित विकार प्रकृति में मानकर समाधान करते हैं तथापि ब्रह्म अचिन्त्य–शक्ति के आधार पर परिणामी होकर भी निर्विकार रह सकता है। जैसे–एक दीपक अनेक दीपकों को उत्पन्न करके भी विकारवान नहीं होता। हे स्वामिनि सीता जी! जैसे एक ही समय में दिन–रात दोनों विरुद्धधर्मी रह लेते हैं उसी प्रकार सभी परस्पर विरुद्ध धर्म भगवान श्रीराम में निरन्तर विराजते हैं इस प्रकार आप मन के संकल्प का चयन कर लीजिए। भगवान श्रीराम अवतारी होकर भी भक्त की भावना का अनुसरण करते हुये शरणागत सन्तों का भय हरने के लिए अवतार भी ले लेते हैं। ऐसा जानकर उनमें प्रेम का विस्तार कीजिए। हे जनकनन्दिनीजू! सूर्यवंश के ध्वज के स्वरूप श्रीराम ही वैदिक धर्मसेतु के रक्षक और जगत के जन्म–स्थिति–प्रलय के कारण परब्रह्म ही हैं। ऐसा जानकर आप प्रसन्न हो जाइये। हे महारानी जू! संदेहरहित परब्रह्म में उत्पन्न हुये संशयरूप बन को विचाररूप कुल्हाड़े की धारा से काट डालिये। वही श्रीराम निर्गुण, निराकार और सगुण–साकार ब्रह्म भी हैं अर्थात् एक ही समय में हेय गुणों से रहित होने के कारण निर्गुण तथा उपादेय गुणों से युक्त होने के कारण सगुण! इसी प्रकार सांसारी आकारों से दूर होने से निराकार और भजन के लिए उपयोगी आकारों से युक्त होने के कारण साकार ब्रह्म श्रीराम ही हैं।आप अपना मन उन्हीं के चरणों में भेज दीजिए। हे महारानी जानकी जू! श्रीराम निर्धर्म ब्रह्म नहीं हैं, प्रत्युत् वे तो विग्रहवान धर्म ही हैं। अतः संदेह छोड़कर आप श्रीसीता जी **गिरिधर** कवि के प्रभु श्रीराम को ही वररूप में वरण कर लें।

**विशेष–** इस संस्कृत गीत का लोकधुन संबंधी ढाल इस प्रकार है–

''कवने नगर से पधारे दोऊ श्याम गौर
कहा तेरो पिताजी को नाम धनुधरिया
कवने पठाये केहिं हेतु तुम आये इतै
भरिवे को फूल दोना कहो धनुधरिया।।''

## गीत संख्या १२

अपि च

**सगुणनिर्गुणयोर्भेदो नास्ति।**
**यः सगुणः स तु प्रभुर्निर्गुणः भिदा न कापि चकास्ति।।**
**जलतुषारयोरिव तु तत्त्वतः द्वयोरेकता भाति।**
**न्यस्तहेयगुणतया निर्गुणः मायां विना विभाति।।१।।**
**स च कल्याणगुणगणैर्युक्तः सगुणो भवति हि नित्यम्।**
**नाना विधाऽवतारैः शं भक्तानां कुरुते नित्यम्।।२।।**
**निरुपमाश्च निःशेषा नित्या नियताकारास्तस्य।**
**आकारस्तम्भादेर्निरयात् निराकारताऽप्यस्य।।३।।**
**युगपन्निराकारसाकारः सगुणोऽप्यगुणो रामः।**
**अविकृतपरिणामी जगदीशः ख्यातः पुण्यप्रणामः।।४।।**
**अतो ज्ञानकर्कशतां त्यक्त्वा तं भावुका भजन्ति।**
**गिरिधरप्रभोर्लब्धबोधा अपि भक्तिं नैव त्यजन्ति।।५।।**

**भौमी–**नारद जी हवेली पद्धति में कहते हैं और भी सगुण और निर्गुण में कोई भेद नहीं है। जो प्रभु सगुण हैं वही निर्गुण भी हैं। दोनों में किसी प्रकार का भेद नहीं है। वस्तुतस्तु दोनों की एकता जल और बर्फ के समान है। भगवान को निर्गुण इसलिये कहा जाता है कि वे मायिक हेयगुणों से रहित हैं। वे ही प्रभु कल्याण गुणगणों से युक्त होकर निरन्तर सगुण हुये बने रहते हैं और वे अपने अनेक अवतारों से अपने भक्तों का कल्याण करते रहते हैं। भगवान के आकार निरुपम हैं इसलिए भी वे निराकार हैं। '**निरुपमाः आकाराःयस्य स निराकारः**' सभी आकार भगवान के ही हैं, इसीलिए वे निराकार हैं। '**निःशेषाः आकाराः यस्य सः निराकारः**' भगवान के आकार नियत हैं। इसलिए वे निराकार हैं। '**निरन्तरम् नियता आकाराः यस्य स निराकारः।**' इसी प्रकार खंभे को फाड़कर प्रभु प्रकट हुए। इसलिए उन्हें निराकार कहते हैं। **निष्क्रान्तः आकारात् इति निराकारः।** पवित्र परिणाम वाले भगवान श्रीराम एक ही साथ निराकार–साकार तथा निर्गुण–सगुण भी हैं। वे जगत के ईश्वर तथा जगत के परिणामी होकर भी निर्विकार हैं। अर्थात् जगत भगवान का विवर्त नहीं है, प्रत्युत् परिणाम है। अतएव ब्रह्मसूत्र में भी ''**परिणामात्**'' (ब्रह्मसूत्र १,४,२६) कहकर परिणामवाद ही सिद्ध किया गया है। इसीलिए भावुक भक्त–लोग ज्ञान की कर्कशता छोड़कर भगवान का भजन करते हैं। ज्ञान प्राप्त करके भी ज्ञानी जन **गिरिधर** कवि के प्रभु श्रीराम की भक्ति नहीं छोड़ते।

## गीत संख्या १३

भूमिजे भक्तिवशो भगवान्।
प्रणतपालको दीनहितैषी करुणाब्धिः श्रीमान्।।१।।
त्वं साक्षाद् भगवतो भक्तिरथ स च निरुपमगुणवान्।
रामो भगवान् परमात्मा परमेश्वर इति भूमान्।।२।।
स्वरूपसम्बन्धेन समस्तैर्गुणैर्युतः श्रुतिमान्।
अतो नैव व्यभिचरति तदीयं ब्राह्मं स च धृतिमान्।।३।।
भक्तिरेनमथ नयति निगमयति भक्त्यधीनतावान्।
गिरिधर भज रामं भगवन्तं प्रभुर्भक्तिगुणवान्।।४।।

**भौमी–**नारद जी पुनः हवेली पद्धति में ही गा रहे हैं–हे पृथ्वीनंदिनी सीते। भगवान श्रीराम शरणागतों के पालक दीनों के हितैषी, करुणा के महासागर, नित्य श्रीसम्पन्न होते हुए भी भक्ति के ही वश में रहते हैं। आप साक्षात् भगवान की भक्ति ही हैं और श्रीराम निरुपम गुणों से युक्त परमात्मा, परमेश्वर, नित्यसत्ता सम्पन्न भगवान हैं। यही आप और प्रभु का विवेचन है। धैर्य सम्पन्न वे श्रीराम वेदमय होकर भी स्वरूप सम्बन्ध से गुणों से युक्त रहते हैं। इसीलिए उनके ब्रह्मत्व में व्यभिचार नहीं आता। भगवान को भक्ति ही भक्त के पास ले जाती है। भक्ति ही उनका बोध कराती है। भगवान श्रीराम भक्त के अधीन हैं। हे कवि **गिरिधर**! तुम भी भगवान राम का ही भजन करो क्योंकि वे सर्वसमर्थ होकर भी भक्ति की रस्सी से बँधे रहते हैं।

## गीत संख्या १४

यस्य श्रुत्वा गुणान् चित्तमुत्कण्ठतां तं विजानीहि प्राप्तं वरं भूमिजे।
यस्य ध्यात्वा वपुः स्वान्तमुत्कण्ठतां तं विजानीहि प्राप्तं वरं भूमिजे।।
यत्कथाकर्णपीयूषपायं शुभे यन्मधुरगीतगायं सुशम्पाविभे।
सन्ततं ते रसज्ञा समुत्कण्ठतां तं विजानीहि प्राप्तं वरं भूमिजे।।१।।
कोटिझषकेतुनिन्दकनवाम्बुदरुचौ यत्र कल्याणगुणगणविबर्धितशुचौ।
त्वन्मनोनीलकण्ठो नरीनृत्यतां तं विजानीहि प्राप्तं वरं भूमिजे।।२।।
यस्य सौन्दर्यसागरलसच्छविसुधाश्रावमावर्धतां तावकी दृक्क्षुधा।
यो वरेण्यो वरत्वे वरीवृत्यतां तं विजानीहि प्राप्तं वरं भूमिजे।।३।।
पुष्पवाट्यां सरवीतो निशम्यच्छविं त्वं दिदृक्क्षस्व यं भक्तपञ्जरविम्।
गिरिधरेशो दृशा ते दरीदृश्यतां तं विजानीहि प्राप्तं वरं भूमिजे।।४।।

**भौमी–**हे भूमिनंदिनी सीते! जिसके गुणों को सुनकर और जिसके स्वरूप का ध्यान करके उससे मिलने की आपके चित्त और मन में उत्कण्ठा जग जाय, उसी को आप अपना प्राप्त वर समझ लीजिएगा। हे सीते! जिनके कथामृत का पान करके, जिनके सम्बन्धी मधुरगीत गा करके भी आपकी जिह्वा को प्रभु का गुणानुवाद करने की निरन्तर उत्कण्ठा हो जाय, उसी को आप अपना वर समझ लीजियेगा। हे सीते! कल्याण

गुणरूप दिव्यजल से जिसकी पवित्रता निरन्तर बढ़ रही है, ऐसे करोड़ों कामदेवों को भी निन्दित करने वाले, नवीन बादल जैसी कान्ति से युक्त जिन घनश्याम के समक्ष आपका मनमयूर नाच उठे वही आपका वर होगा, ऐसा आप जानें। जिसके सौन्दर्य सागर की छवि सुधा का श्रवण करके भी आपके नेत्र की क्षुधा बढ़ जाय। जो सबका वरणीय होकर भी आपके वर-भाव में अतिशय वर्तमान हो, उसी को आप अपने प्राप्त-वररूप में समझ लीजिएगा। फुलवारी में सखी के मुख से जिनकी छवि सुनकर जिन भक्तकमल के सूर्य को देखने के लिए आपका मन करे और जिन **गिरिधर** कवि के ईश्वर को आपकी दृष्टि बार-बार निहारे उसी पुरुष विशेष को आप अपने पास आया हुआ वर समझ लीजिएगा।

## गीत संख्या १५

**धर धर धरणिसुते हृदि धैर्यम्। मा त्याक्षीर्हृदयस्य स्थैर्यम्।।१।।**
**कार्या देव्या सदा प्रतीक्षा। सफला स्यात्ते भाग्यसमीक्षा।।२।।**
**आयास्यति नवजलदश्यामः। भङ्क्ष्यति ते विरहं श्रीरामः।।३।।**
**कुतुकभग्नगौरीपतिचापः। भास्यति भूपे स्वमितप्रतापः।।४।।**
**धास्यति पाणिग्रहं पुनीतम्। गास्यति शुभं गिरिधरो गीतम्।।५।।**

**भौमी–**हे पृथ्वीपुत्री सीते! हृदय में (धैर्य धारण कीजिए) अपने हृदय की स्थिरता मत छोड़िये। आप निरन्तर प्रतीक्षा कीजिए। आपके भाग्य की समीक्षा सफल हो। नवीन मेघ के समान श्रीराम आयेंगे और आपके विरह को समाप्त करेंगे। वे खेल-खेल में शिवजी का धनुष तोड़कर राजाओं के बीच असीम प्रतापी पुरुष के रूप में प्रकाशित होंगे और वह आपका पवित्र पाणिग्रहण करेंगे तथा कवि **गिरिधर** भी मंगल-गीत गायेंगे।

**विशेष–** यह गीत तीन ताल में निबद्ध है और इसे कल्याण के ही स्वर में गाना चाहिए।

## गीत संख्या १६

**अदः पूर्णं इदं पूर्णं द्वयं वैदेहि वै पूर्णम्।**
**न चामुष्मादिदं न्यूनं द्वयं वैदेहि वै पूर्णम्।।१।।**
**अदो नवतारि साकेते इदं त्ववतार्यवधकेते।**
**अदस्त्वगुणं इदं सगुणं द्वयं वैदेहि वै पूर्णम्।।२।।**
**अदो रामः इदं सीता त्वमेव स्नेहसमवीता।**
**न पूर्वस्मात् परं न्यूनं द्वयं वैदेहि वै पूर्णम्।।३।।**
**सुसौलभ्यात् सकारुण्यात् उदच्यं पूर्णमथपूर्णात्।**
**सदोत्कृष्टं शुभं पूर्णं इदं वैदेहि वै पूर्णम्।।४।।**
**गृहीत्वा पूर्णपूर्णांशं सगुणनिर्गुणसमस्तांशम्।**
**सुकवि गिरिधरप्रभुः पूर्णं द्वयं वैदेहि वै पूर्णम्।।५।।**

**भौमी–**नारदजी पुनः लोकधुन में गाते हैं–हे सीते! वह अर्थात् साकेत के श्रीराम पूर्ण हैं और यह अर्थात्

अवध के श्रीराम भी पूर्ण हैं। दोनों ही पूर्ण हैं। वह इनसे न्यून नहीं हैं। दोनों ही पूर्ण हैं। अदः अर्थात् वे साकेतबिहारी श्रीराम अवतार नहीं लेते और इदं अर्थात् अवधबिहारी श्रीराम अवतार लेते हैं। वे निर्गुण हैं ये सगुण हैं, परन्तु दोनों ही पूर्ण हैं। दूसरे पक्ष में अदः अर्थात् वे हैं श्रीराम तथा इदं अर्थात् यह अत्यंत निकट वर्तमान इदं शब्द का अर्थ तुम्ही हो स्नेहमयी सीता! कोई किसी से कम नहीं है। तुम दोनों ही पूर्ण हो। परन्तु श्रीराम की अपेक्षा आप में सुलभता और करुणा की अधिकता है। अतः उन पूर्ण श्रीराम से पूर्ण अर्थात् आप उदच्यते अर्थात् अधिक पूज्य और उत्कृष्ट हैं। इसीलिए आप शुभ हैं, उत्कृष्ट हैं और पूर्ण भी हैं। इस प्रकार सगुण-निर्गुण रूप समस्त अंशों के अंशी पूर्ण परमात्मा के पूर्णांश को ग्रहण करके आप दोनों **गिरिधर** कवि के स्वामी श्रीसीताराम पूर्ण हैं।

**विशेष-** यह गीत '**पूर्णमदः पूर्णमिदं**' का पूर्ण भाष्य है।

## गीत संख्या १७

**अन्यच्च-**

**राजाऽपि दृष्टो महाराजोऽपि दृष्टो मम रामसदृशः।**
**कोऽपि राजा न दृष्टः।।**
**दीनजनबन्धुः करुणासिन्धुः कोऽस्ति भक्तभयहारी।**
**कः पदाब्जरजसा पतिशापात् पतिताहल्यातारी।।**
**देवोऽपि दृष्टो महादेवोऽपि दृष्टो मम राम सदृशः।**
**कोऽपि देवो न दृष्टः।।१।।**
**त्यक्त्वा सुरदुर्लभपितृराज्यं कोऽगात् वनं कृपालुः।**
**धीवरकोलकिरातजनानां को दयते स्म दयालुः।।**
**त्यागी च दृष्टो महात्यागी च दृष्टो मम रामसदृशः।**
**कोऽपि त्यागी न दृष्टः।।२।।**
**कस्य पतितपावनशुभविरुदं कोऽकृत गृद्धं तातम्।**
**कः शवरीजुष्टफलमश्नात् कोऽकृत कपिं स्वजातम्।।**
**योगी च दृष्टो महायोगी च दृष्टो मम रामसदृशः।**
**कोऽपि योगी न दृष्टः।।३।।**
**को वानरनिशिचरभल्लूकान् सचिवानकृत कृतज्ञः।**
**गिरिधरसम्मितागणितपतितान् कोऽपालयत गतिज्ञः।।**
**स्वामी च दृष्टो महास्वामी च दृष्टो मम राम सदृशः।**
**कोऽपि नाथो न दृष्टः।।४।।**

**भौमी-**और भी! राजे भी देखे गये महाराजे भी देखे गये परन्तु मेरे राम जी के समान कोई राजा नहीं देखा गया। कौन हैं दीनजनों का बन्धु और करुणासिन्धु कौन हैं भक्तों का भयहर्ता? पति के शाप से पतित अहिल्या को अपने चरण कमल की धूलि से किसने तारा? हमने देवता भी देखा, महादेवता भी देखा, पर श्रीराम जैसा

कोई देवता नहीं देखा। देवतुल्य पिता का राज्य छोड़कर सामान्य–जनों पर कृपा करने के लिए वन में कौन गया? केवल श्रीराम केवट–कोल–किरातों पर किसने दया की? एकमात्र श्रीरामजी ने। मैंने त्यागी भी देखा और महात्यागी भी देखा पर श्रीराम जैसा कोई त्यागी नहीं देखा। पतितपावन जैसा विरुद किसने धारण किया? किसने जटायु को पिता माना? किसने शबरी के जूठे फल खाये और किसने वानरशरीरधारी हनुमान जी को अपना पुत्र बनाया? मैंने योगी भी देखे और महायोगी भी देखे हैं, पर मैंने राम जैसा कोई योगी नहीं देखा। किस कृतज्ञ ने वानर–भालू–और राक्षस को अपना मंत्री बनाया? किस गतिज्ञ ने मुझ कवि **गिरिधर** जैसे अनेक पतितों का पालन किया? हमने स्वामी भी देखा महास्वामी भी देखा पर मेरे राम जी जैसा कोई स्वामी नहीं देखा।

**विशेष–** यह गीत मेरे ही द्वारा रचित '**राजे भी देखे महाराजे भी देखे**' गीत की ही ढाल में निबद्ध है।

## सन्दर्भश्लोकौ

**दिवमिते गुणवर्णिनि नारदे विबुधवृद्धविचारविशारदे।**
**अवनिजाजनमण्डितमानसा विशिथिलामिथिलाधिपबालिका।।१।।**
**चारुशीलां समाहूय रामपादाब्जचन्द्रिका।**
**चकोरी मिथिलाधीशकिशोरी किञ्चिदाजगौ।।२।।**

**भौमी–**इस प्रकार प्रभु का गुण वर्णन करके दैवीय–विचार में निपुण देवर्षि नारदजी के ब्रह्मलोक पधार जाने पर परमात्मा श्रीराम के आवेश से सुशोभित मन वाली पृथ्वीपुत्री मिथिलाधिराज कन्या जानकी जी कुछ क्षणों के लिए शिथिल हो गयीं। पश्चात् अपनी अन्तरंग सखी चारुशीलाजी को बुलाकर श्रीराम चरणकमल की नखमणि चन्द्रिका की चकोरी जनकराज किशोरी कुछ गाने लगीं।

## गीत संख्या १८

**सखि हे किं कथां कथयामि।**
**समस्यायाः समाधानं न मे त्वां व्यथयामि।।**
**जनुरिदं सुकुलीनवंशे वपुः परवशमेव।**
**मरणमपि याचितुमशक्यं चेद् वरं स्वयमेव।।१।।**
**राघवस्य कथां श्रृणोमि सदैव तं ध्यायामि।**
**तद् गुणान् किल चिन्तयामि निरन्तरं गायामि।।२।।**
**भोजनं न करोमि दिवसे निशि च नो निद्रामि।**
**दरिद्राति च मानसं भाग्यं स्वकीयं द्रामि।।३।।**
**राघवेण विना जगदिदं शून्यवत् प्रतिभाति।**
**अहो रजनीवल्लगति रविरेव शशी विभाति।।४।।**
**जानकीजीवनं चेच्छसि चारुशीले देहि।**
**शीघ्रमथ गिरिधरप्रभुं मम सन्निधौ प्रविधेहि।।५।।**

**भौमी**–हे सखी! तुमसे क्या कहूँ? मेरी समस्या का कोई समाधान नहीं है। मैं तुम्हें दुःखी ही कर रही हूँ। मेरा जन्म–कुलीन–वंश में हुआ है। अतः घर से श्रीअयोध्या के लिये भाग नहीं सकती। शरीर पराधीन है, उसे त्याग नहीं सकती। मरण माँगना भी कठिन है, यदि वह स्वयं आ जाता तो अच्छा होता। मैं श्रीराम की कथा सुनती हूँ सदैव उनका ध्यान करती हूँ, उन्हीं प्रभु के गुणों का हृदय में चिन्तन करती हूँ और उन्हीं प्रभु का गान करती रहती हूँ। मैं दिन में भोजन नहीं लेती हूँ और रात में सोती नहीं हूँ। मेरा मन दरिद्र हो रहा है, मैं अपने भाग्य की भी निन्दा कर रही हूँ। श्रीराघव के बिना यह संसार शून्य जैसा प्रतीत हो रहा है। अहो! अर्थात् दिन–रात्रि के समान लग रहा है और सूर्य भी चन्द्रमा जैसे दिख रहे हैं। हे चारुशीले! यदि मुझ जानकी का जीवन चाहती हो तो जानकीजीवन श्रीराम को दे दो और **गिरिधर** कवि के स्वामी राघव जी को शीघ्र ही मेरे निकट ला दो।

## गीत संख्या १९

**सखि किं कथये निजभावम्।**
**जानन्त्यपि प्रभोः स्वभावम्।।**
**यदा प्रभृति नारदो गतः सखि वर्णितनाथचरित्रः।**
**तदा प्रभृति मां दहति निशि दिवा प्रभुविरहाग्निरमित्रः।।१।।**
**क्वायोध्या क्व च दूरदेशगा सुभगे जनकपुरीयम्।**
**क्वाहं पामरमतिरल्पज्ञा क्वेदं ब्रह्मतुरीयम्।।२।।**
**यद्यपि मां विहाय रघुनाथः कामपि नो परिणेता।**
**सदैवैकपत्नीव्रतनिरतो मर्यादाकृतचेताः।।३।।**
**रविणा प्रभेव विधुना चान्द्री रामेणाहमनन्या।**
**सीताया रामो निरन्तरं प्रकृतिश्चैषा मान्या।।४।।**
**लोकवेदसम्मता सुस्थिरा यदपीयं मीमांसा।**
**तदपि विकलयति मां गिरिधरप्रभुमुखविधुसुधापिपासा।।५।।**

**भौमी**–पुनः सीता जी कहती हैं–हे सखी! मैं अपने प्रभु का स्वभाव जानती हुई भी अपने मन का भाव कैसे कहूँ? प्राणनाथ का चरित्र सुनाकर जब से श्रीनारद मेरे पास से गये हैं, तभी से शत्रु बना हुआ प्रभु का विरहाग्नि मुझे रात–दिन जला रहा है। कहाँ अयोध्या और कहाँ उससे बहुत दूर देश में बसी हुई यह मिथिलापुरी। कहाँ मैं अल्पबुद्धि सामान्य महिला, कहाँ तुरीयतत्व परब्रह्म श्रीराम। यद्यपि रघुनाथ जी मर्यादा पुरुषोत्तम और सदैव एकनारी–व्रती होने के कारण मुझे छोड़कर किसी भी नारी से विवाह नहीं करेंगे। जिस प्रकार सूर्य से उनकी प्रभा और चन्द्रमा से चन्द्रिका अभिन्न है, उसी प्रकार मैं भी श्रीराम से अनन्य हूँ। श्रीराम तो निरन्तर सीता के ही हैं। यही प्रकृति सर्वमान्य है। यद्यपि यह मीमांसा लोक और वेद दोनों से सम्मत है कि श्रीराम सीता के ही हैं, फिर भी **गिरिधर** कवि के प्रभु श्रीराम के मुखचंद्र की अमृत पिपासा ही मुझे व्याकुल कर रही हैं।

## सन्दर्भश्लोकः

**कदाचिद् वीक्ष्य दैवज्ञरूपिणं सा वृषाकपिम्।**
**वर्षद्वारम्बकाम्भोजा पप्रच्छेदं शुचिस्मिता।।१।।**

**भौमी–**किसी समय ज्योतिषी के वेश में आये हुये भगवान शंकर को देखकर नेत्र कमल से अश्रु वर्षा करती हुई पवित्र मुस्कान वाली सीताजी इस प्रकार आदरपूर्वक पूछने लगीं।

## गीत संख्या २०

**किञ्चिदस्माकं सुशकुनं विचारय ज्यौतिषिन्।**
**कदाऽऽयास्यति रघुनाथ उच्चारय ज्यौतिषिन्।।**
**म्रियमाणां सीतां द्विज सुधां पाययेथा।**
**रघुकुलचन्द्रं मम सन्निधापयेथा।।**
**चिररोगिणीं चिकित्सयोपचारय ज्यौतिषिन्।।१।।**
**सत्यं सत्यं ब्रूहि ब्रूहि कदा तन्मुहूर्तम्।**
**सफलय ब्राह्मण मदीयमिष्टापूर्तम्।।**
**सीताजीवनविधानकं विधारय ज्यौतिषिन्।।२।।**
**कनकवसनमणिभूषणानि दास्ये।**
**भूसुरदम्पतीकृते भवनं विधास्ये।।**
**सत्यं ज्यौतिषस्य सुफलं विचारय ज्यौतिषिन्।।३।।**
**कनकदिवसो गुरो कदा सा गमिष्यति।**
**यदा मम नेत्रपूरो रामो नु भविष्यति।।**
**गिरिधरप्रभुदृशि निमिषं निवारय ज्यौतिषिन्।।४।।**

**भौमी–**सीता जी शिव ज्योतिषी जी से कह रही हैं–हे ज्योतिषी जी! थोड़ा-सा हमारा सगुन विचार लीजिए। मेरे रघुनाथ जी कब आयेंगे? यह फल भाख दीजिए। हे ब्राह्मण देवता! मर रही मुझ सीता को अमृत पिला दीजिये। रघुकुल के चंद्रमा श्रीराघव को मेरे निकट ला दीजिए। इसी चिकित्सा से बहुत काल से रुग्ण मुझ सीता का उपचार कर दीजिए। हे ब्राह्मण! सत्य बताइये–सत्य बताइये वह मुहूर्त्त कब है? आप मेरी ईष्टापूर्त अर्थात् कुआँ बावली आदि के निर्माण के पुण्य को सफल कर दीजिए। मुझ सीता के जीवन के विधान को भी निश्चित कर दीजिए। अन्यथा मैं मर जाऊँगी। हे ज्योतिषी! आप अपने ज्योतिष का सत्य फल विचार दीजिए, प्रभु के आ जाने पर मैं आपको स्वर्ण-वस्त्र-मणि और भूषण का दान करूँगी और आप पति-पत्नी के लिए एक सुन्दर भवन बनवा दूँगी। हे गुरुदेव! वह सोने का दिन कब आयेगा? जब श्रीराम मेरे नेत्र के सामने होंगे। अब तो ज्योतिषी जी **गिरिधर** कवि के स्वामी श्रीराम के दर्शन में बाधा बन रही पलकों का गिरना भी रोक दीजिए।

**विशेष-** यह गीत ठेंठ मिथिला के आँचलिक धुन की ढाल में निबद्ध है। जिसके बोल हैं–

**कनि हमरौ सगुनवां विचारु ज्यौतिषी।**
**कखनौ ऐतै रघुनाथ उच्चारु ज्यौतिषी।।**

## सन्दर्भश्लोकौ

**वेदव्याससुतं प्रपत्तिनिगमं ज्ञातुं पुरैवागतम्**
**मायाकीरतनुं श्रियैव महितं वैराग्यसत्पञ्जरे।**
**सीताहूय सिताम्बकास्वलिखितं लीलाशुकं प्राहिणो-**
**द्रामायार्प्य सुपत्रमाशुसखिभिः श्रीकोसलावासिने।।१।।**
**गत्वा कीरो राघवीं राजधानीं दृष्ट्वा रामं क्वापि संक्रीडमानम्।**
**शौक्या वाचाहूय वाचंयमाय प्रादात् पत्रीं राघवायावनेय्याः।।२।।**

**भौमी–**वेदव्यास जी के पुत्र शुकाचार्य जो कि पूर्व में ही शरणागति का रहस्य जानने के लिए श्रीसीता के चरणों में आये हुये थे सबके समक्ष उन्होंने लीला में तोते का रूप बना रखा था और श्री जी ने भी उन्हें वैराग्य के पिंजरे में रखकर शरणागति का रहस्य पढ़ाया था। आज उन्हीं शुकाचार्य को बुलाकर कजरारे–नैनों वाली सीता जी ने स्वहस्तलिखित एक पत्र सौंपा और कहा– यह तुम मित्रों के साथ खेल रहे कोसलराज किशोर श्रीराम को चुपके से सौंप देना। अनन्तर श्रीराम की राजधानी में जाकर एकान्त में खेलते हुए श्रीराम के दर्शन करके उन्हें तोते की ही वाणी में बुलाकर शुकाचार्य जी ने संयमित वाणी में बोलने वाले प्रभु श्रीराम को पृथ्वीनंदिनी सीता जी का पत्र सौंपा।

## गीत संख्या २१

सीता प्राह–

**जय जय रघुनन्दन खरारे हे जय स्वजनसौख्यकारिन्।**
**श्रुत्वा गुणास्ते श्रीदेवर्षिवक्त्रात् सारानसारे।**
**संसारे हे कामितास्मि कामदारिन्।।**
**जय जय रघुनन्दन ...........................................।।१।।**
**उद्धर्तुं प्लवानिव सर्वजीवजगतां मग्नानामपारे।**
**पारावारे हे मोदितास्मि मोदितारिन्।।**
**जय जय रघुनन्दन ...........................................।।२।।**
**त्रैलोक्यलावण्यलक्ष्मीमये रूपकुलललामे।**
**दनुजारे हे मोहितास्मि मोहहारिन्।।**
**जय जय रघुनन्दन ........................................।।३।।**
**सर्वचक्षुष्मतां चक्षुर्लाभे घनाभे आधारभूते।**
**निराधारे हे भवितास्मि भवप्रहारिन्।।**
**जय जय रघुनन्दन ...........................................।।४।।**
**गिरिधरप्रभुं पतिमेव वृतवती पाहि राक्षसेभ्यो।**

राक्षसारे हे त्वां गतास्म्यवधविहारिन्।।
जय जय रघुनन्दन ..........................................।।५।।

**भौमी**–अब सीता जी पत्र में कह रही हैं– हे रघुनन्दन! हे खर नामक राक्षस के शत्रु! हे स्वजनों को सुख देने वाले प्रभु! आपकी जय हो, जय हो, जय हो। हे कामादिविकारों को नष्ट करने वाले प्रभु! श्री देवर्षि के मुख से आपके गुणों को सुनकर जो इस असार संसार में सारभूत तत्व हैं, मैं आपकी कामना करने लगी हूँ। हे शत्रुओं को भी प्रसन्न करने वाले प्रभु! उन गुणों को सुनकर जो अगाध सागर में डूबे हुये सम्पूर्ण जीवों के उद्धार के लिए जहाज के समान हैं, मैं आप पर बहुत प्रसन्न हो रही हूँ। हे मोह को हरने वाले प्रभु! आपके मनुष्य कुल के रत्न के समान एवं तीनों लोकों के सौन्दर्य की शोभा से युक्त रूप पर मैं मोहित हो चुकी हूँ। हे सांसारिक बाधाओं को नष्ट करने वाले हरे! सम्पूर्ण नेत्र वालों के नेत्रों के लाभ स्वरूप नीले बादल के समान सुन्दर आप श्री पर मैं अपना सम्पूर्ण भाव उड़ेल चुकी हूँ। हे अवध विहारिन **गिरिधर** कवि के स्वामी! आप श्रीराघव को ही मैंने पतिरूप में वरण कर लिया है। हे राक्षसों के शत्रु श्रीरघुनाथ! मैं आपको ही प्राप्त कर चुकी हूँ, आप मेरी राक्षसों से रक्षा कीजिए।

**विशेष**- यह गीत मिथिलाँचल के लोकधुन की ढाल पर निबद्ध है जिसका बोल है–

**आइल अवध के बरतिया हे मिथिला के दुअरिया**

## गीत संख्या २२

**मम विनतिं शृणु श्रीराम हे।**
**प्रणतपाल राजीवविलोचन प्रणतविवुधतरुनाम हे।१।।**
**जलधरसुन्दर भवनिधिमन्दर सुखमन्दिर गुणधाम हे।**
**आगच्छाशु कृपाकर रघुवर कामयस्व मां काम हे।।२।।**
**मा भुङ्क्तां हरिबलिं वायसो विजितदनुजसंग्राम हे।**
**गिरिधरप्रभो मां सपदि परिणय प्रणयपूर्णपरिणाम हे।।३।।**

**भौमी**–अब सीता जी मालकौंश राग में निबद्ध गीत प्रस्तुत कर रही हैं। हे प्रणतपाल! हे लालकमल के समान नेत्र वाले! हे प्रणतजनों के कल्पवृक्ष स्वरूप नाम वाले! श्रीराम मेरी प्रार्थना सुनिये। हे बादल के समान सुन्दर! हे संसार सागर के मंदराचलरूप! हे सुख के मंदिर! हे श्रेष्ठ गुणों के भवन! हे कृपा के भाण्डागार! हे रघुकुल में श्रेष्ठ निष्काम श्रीराम! आप मेरी कामना कीजिए अर्थात् मुझे पत्नी रूप में अपनी इच्छा का विषय बनाइए। हे युद्ध में राक्षसों को जीतने वाले प्रभु! हे परिणाम में भी प्रणयपूर्ण श्रीराम! देखिये कहीं सिंह का भाव कौवा न खा जाय। हे **गिरिधर** कवि के स्वामी मुझे शीघ्रातिशीघ्र परिणीत कर दीजिए।

## गीत संख्या २३

**रघुनन्दन प्रणतिः श्रूयताम्।**
**मा मम भाग्यविबुधतरुलतिकागरलफलं परिषूयताम्।।**
**भग्नकामरिपुधनुषाऽजनुषा रक्षोबलमभिभूयताम्।**

जित्वा राजकुलं स्वयम्बरे प्रभुणा मुहुः प्रभूयताम्।।१।।
त्वच्छरदिनकरकरनिकुरं वै रिपुतिमिरञ्च विधूयताम्।
तव विक्रमप्रभञ्जनवेगाच्छत्रुघटाप्यवधूयताम्।।२।।
सपदि मया सह जनकमण्डपे भवता लाजा हूयताम्।
गायन् सीतारामपरिणयं कविगिरिधरो न दूयताम्।।३।।

**भौमी**–सीता जी फिर मालकौंश में ही गा रही हैं–हे रघुनन्दन! मेरी प्रार्थना सुनी जाय। मेरी भाग्य रूप कल्पलता कहीं विषफल को न जन्म दे दे। अजन्मा और विष्णु को भी अंश के रूप में उत्पन्न करने वाले आप श्रीप्रभु राम के द्वारा शिवधनुष तोड़कर राक्षसों की सेना को और राक्षसों के बल को अभिभूत किया जाय अर्थात् कुचल दिया जाय और स्वयम्बर में राजकुल को जीतकर अपने पराक्रम का पुनः–पुनः प्रदर्शन किया जाय। इसी प्रकार आपके बाणरूप सूर्यों की दिव्य किरणों से आपके शत्रुरूप अंधकार का नाश हो जाय और आपके पराक्रमरूप वायु के वेग से शत्रु समूहरूप घटाएँ नष्ट हो जायँ। जनक मण्डप में मेरे साथ आप शीघ्र ही लाजाहुती करें अर्थात् अग्नि में धान की लावा डालें और इस प्रकार श्रीसीताराम का विवाह मंगल संस्कृत भाषा में गाते हुये **गिरिधर** कवि कभी दुःखी न हों।

## गीत संख्या २४

हरे मिथिलापुरमागम्यताम्।।
आत्मारामरम्यमिथिलायाः आरामे आरम्यताम्।
रविकुलरविरमणीयरोचिषा भवविपदापि विरम्यताम्।।१।।
कमनकामरिपुकार्मुकभञ्जं जनकसंशयः शम्यताम्।
यद् धाष्ट्र्यं पत्रेऽस्मिन् लिखितं तत्क्षमयेव क्षम्यताम्।।२।।
सत्वरमीश्वरभवताप्यवता जनकप्रणः परिणम्यताम्।
गिरिधरहृदयनिकुञ्जे नित्यं राम मया सह रम्यताम्।।३।।

**भौमी**–सीता जी फिर मालकौंश में गाती हुई कहती हैं–हे श्रीहरे! आप मिथिलापुर में पधार आयें। हे आत्माराम! आप मिथिला के रमणीय उद्यानों में सानंद भ्रमण करें। सूर्यकुल के सूर्य आप श्रीराम के तेज से संसार के भय और विपत्ति का नाश हो जाय। और, हे सुन्दर! शिव जी का धनुष तोड़कर आप श्री द्वारा जनक जी के संशय का शमन किया जाय। इस पत्र में मैंने जो धृष्टतापूर्ण वाक्य लिखा हो, उसे आप अपने क्षमा से ही क्षमा कर दीजिए। इसी प्रकार हे ईश्वर! आप भी जनक की प्रतिज्ञा की रक्षा करते हुये उसे अतिशीघ्रता से परिणाम तक पहुँचा दें। हे श्रीराम! आप **गिरिधर** कवि के हृदयकुंज में मुझ सीता के साथ रमण कीजिए।

## गीत संख्या २५

राघव मा कुरु किमपि विलम्बम्।
किञ्चिन् मिषेणागतो मिथिलां शीघ्रं दिश मे करावलम्बम्।।१।।
दिनकरकुलसरसीरुहदिनकर हर हरकार्मुक तिमिरस्तम्बम्।

**विकसय सत्सरोजनिकुरम्बं लोकय लोकलोकरोलम्बम्।।२।।**
**गृह्णीस्वार्यपुत्र मम पाणिं दशमुखमपि कुरु विगतालम्बम्।**
**पूरय कविगिरिधरस्य रघुवर मधुरमनोरथकमनकरम्बम्।।३।।**

**भौमी**–हे श्रीराघव! अब कुछ भी विलंब मत कीजिए। किसी भी बहाने मिथिला आकर मुझे अपने करकमल का शीघ्र अवलम्ब दीजिए। हे सूर्यकुल कमल के सूर्य! इस धनुषरूप अंधकार के आडंबर को हर लीजिए, हर लीजिए और हे प्रभो! संतरूप कमलवन को विकसित कीजिए, संसार के नेत्ररूप भ्रमर को भी प्रकाशित कर दीजिए। हे आर्यपुत्र! मेरा पाणिग्रहण कीजिए और रावण को भी असहाय कर दीजिए। इसी प्रकार **गिरिधर** कवि के मधुर मनोरथों के समूह को पूर्ण कर दीजिए।

## गीत संख्या २६

**सपदि कृपा क्रियतां झटिति दया क्रियताम्।**
**हे कोसलाविहारिन् श्रीकोसलाविहारिन्।।**
**नागृह्णे केवलमनुरन्धे द्रव मयि भगवन् भवभयहारिन्।।१।।**
**अबला गता भवन्तमतिबलं शरणं शरणागतसुखकारिन्।।२।।**
**शत्रुञ्जय रञ्जय मां दयितां भञ्जय विपदं विपद्विदारिन्।।३।।**
**त्रोटय शम्भुधनुः परिमोटय दशमुखमदमपि कार्मुकधारिन्।।४।।**
**मां परिणीय विहर हरपूजित गिरिधरकविसुमनोवनचारिन्।।५।।**

**भौमी**–हे अवधविहारी! प्रभु मुझ पर शीघ्र कृपा कीजिए और शीघ्र दया कीजिए। मैं आपसे आग्रह नहीं कर रही हूँ, केवल अनुरोध कर रही हूँ। हे भवभयहारी भगवान! मुझ पर द्रवित हो जाइये। हे शरणागतों को सुख देने वाले प्रभु! मैं अबला अर्थात् बलहीन होती हुई भी अत्यन्त बलवान आपश्री की शरण में जाकर अब अबला अर्थात् अकार के व्यंग्यार्थरूप आपके बल से युक्त हो गई हूँ। हे विपत्ति को हरने वाले राघव! आप शत्रुओं को जीतिये। मुझ अपनी प्राणप्रिया को प्रसन्न कीजिए और मेरी विपत्ति को नष्ट कीजिए। हे धनुर्धर! शिवधनुष तोड़ दीजिए और रावण का मद मसल डालिए। हे **गिरिधर** कवि के सुन्दर मनरूप वन में भ्रमण करने वाले रघुनाथ जी मेरे साथ विवाह करके विहार कीजिए।

**विशेष**- यह गीत अवधी आँचल के एक लोकधुन की ढाल पर निबद्ध है, उसका बोल है–

**तुम्हारे संग जइबै तुम्हारे संग रहिबै हे अवध बिहारी हे अवध बिहारी।**

## गीत संख्या २७

**प्राणप्रियतम मदीया व्यथा श्रूयतां शान्तशन्तम मदीया कथा श्रूयताम्।।**
**सर्वान्तर्यामिन् सकललोकस्वामिन् व्यथयानया चित्ते मा दूयताम्।।१।।**
**त्वामन्तरेणेह गतसौख्या वनिता वनिता समनुवोभूयताम्।।२।।**
**मिथिला मे शिथिला विभाति हरे शीघ्रं करालम्वनं दीयताम्।।३।।**
**सारङ्गी म्रियते तृषातुरा स्वातिमेघ त्वदधरसुधा पीयताम्।।४।।**

**रुजति मनः कामं मनोभवः सर्वा समस्या समाधीयताम्।।५।।**
**गिरिधरप्रभो विभज्य शिवधनुः सीता विनीता च परिणीयताम्।।६।।**

**भौमी–**सीताजी पुनः लोकधुन में ही कहती हैं कि हे प्राणप्रियतम! मेरी व्यथा सुन ली जाय। हे शान्त स्वभाव कल्याणकारी प्रभु! आप मेरी कथा सुन लें। हे सबके अन्तर्यामी! हे समस्त लोकों के स्वामी रघुनाथ जी मेरी इस व्यथा से आप चित्त में दुःखी मत होइये, प्रत्युत् इस व्यथा का निवारण कीजिए। हे दीनबन्धो! आप के बिना आप में पूर्ण अनुराग रखने वाली आरूढ़ यौवना यह सीता सुख से हीन हो चुकी है। इस सत्य का आप बार–बार अनुभव कीजिए। यह मिथिला मुझे शिथिल लग रही है अर्थात् इसमें रावणादि के प्रतिकार का पौरुष नहीं है। आप अति शीघ्र मुझे अपने कर का अवलम्बन दें। हे स्वाती के बादल! यह चातकी प्यास से मर रही है, वह आपका अधरामृत पान करे, ऐसी व्यवस्था कीजिए। आपके मिलन का मनोरथ मेरे मन को बहुत व्याकुल कर रहा है, आप सभी समस्याओं का समाधान कर दीजिए। हे **गिरिधर** कवि के स्वामी श्रीराघव! शिव धनुष को तोड़कर मुझ विनम्र सीता का पाणिग्रहण कर लीजिए।

## गीत संख्या २८

**सीता प्राह–**

**राम हरे श्रीराम हरे सीदति सीता विषमज्वरे।।**
**सततं विलपति वनरुहनयना परिहृतभूषणभोजनशयना।**
**रोदिति दीना श्लथस्वरे।।१।।**
**दिशि दिशि भ्राम्यति नहि विश्राम्यति**
**निशि निशि ताम्यति परितः क्राम्यति।**
**पतति महीतलधूलिभरे।।२।।**
**अरुणकपोले सिततां याते सततकलितनयनाश्रुनिपाते।**
**विशति मनसि तव विषमशरे।।३।।**
**वदति न चलति न जल्पति दीना योगीवास्ति समाधौ लीना।**
**विकला त्वद्विरहप्रसरे।।४।।**
**तत्र भवन्तं ध्यायति सीता गिरिधरगीतं गायति सीता।**
**पाहि प्रपन्नां सपदि हरे।।५।।**

**भौमी–**सीता जी पुनः तोड़ी राग में विरह गीत गाती हैं–हे श्री अर्थात् मुझ साकेतबिहारी सीता को रमाने वाले पापहारी हरि! योगियों के भी रमणस्थान श्रीराघव! आपकी यह सीता आपकी विरहात्मक विषमज्वर में बहुत कष्ट पा रही है। यह कमलनयनी सीता अलंकार, भोजन और शयन छोड़कर आपके लिए निरन्तर विलाप करती रहती है और शिथिलस्वर में दीनभाव से रोती रहती है। आपके बिना यह इधर–उधर भ्रमण करती, रात–रात व्याकुल होती, चारों ओर चक्कर लगाती और धूलि से भरे हुए पृथ्वी तल पर गिर पड़ती है। प्रभु! आपके स्मरणात्मक काम के मन में प्रवेश करते ही निरन्तर अश्रुपात होने के कारण मुझ सीता के लाल–लाल कपोल श्वेत पड़ गये हैं। आपके विरह के प्रसार में व्याकुल होती हुई यह सीता योगी की भाँति समाधि में लीन रहती

हैं। न बोलती है, न चलती है। कभी-कभी कुछ असम्बद्ध बोल जाती है। यह सीता आप आदरणीय का ध्यान करती रहती है और **गिरिधर** कवि के गीतों के विषय बने हुये आपका ही गान करती रहती है। हे श्रीहरे! आप की शरणागति इस प्रकार व्यथित मुझ सीता की शीघ्र रक्षा कीजिए।

## सन्दर्भश्लोकः

**पत्रं निशम्य शतपत्रभवाब्जनाभः सैरध्वजीचरितचिन्तनलीनचित्तः।**
**प्रत्युत्तरं लिखितुमैक्षत पार्श्ववर्तिताम्राम्रपल्लवमसौ दयिताधराभम्।।१।।**

**भौमी**–इस प्रकार सीता जी के द्वारा लिखे हुए पत्र को सुनकर कमलजन्मा ब्रह्मा को भी उत्पन्न करने वाला कमल जिनकी नाभि से प्रकट हुआ ऐसे प्रभु श्रीराम विदेहनन्दिनी सीताजी के चरित्र के चिन्तन में चित्त से लीन हो गये और उन्होंने पत्र का प्रत्युत्तर लिखने के लिए अपने पास वर्तमान एक आम्र का पल्लव देखा, जो प्रभु की प्रिया सीता जी के अधर के ही समान अरुण था।

## गीत संख्या २९

**सदा चारित्रशीलां त्वामनन्यां जानकीं जाने।**
**शुभां पावित्र्यशीलां त्वामनन्यां जानकीं जाने।।१।।**
**मदर्थं सङ्कटं षोढं विपद्वृन्दं मुदा वोढम्।**
**सदा साद्गुण्यशीलां त्वां सुमान्यां जानकीं जाने।।२।।**
**जगन्माताऽपि विख्याता मदर्थं त्वं सुता जाता।**
**विदेहस्यार्यशीलां त्वां सुधन्यां जानकीं जाने।।३।।**
**सदैवैक्येऽप्यहो भार्या बुभूषन्ती ममाप्यार्या।**
**यदा सौन्दर्यशीलां त्वां वदान्यां जानकीं जाने।।४।।**
**शुभं सेवाव्रतं धृत्वा वरं पातिव्रतं कृत्वा।**
**सदैवैश्वर्यशीलां त्वां वरेण्यां जानकीं जाने।।५।।**
**मदीयां मानवीं लीलां प्रभावयितुं विनतशीलाम्।**
**ममाभिन्नां सुकविगिरिधरशरण्यां जानकीं जाने।।६।।**

**भौमी**–प्रत्युत्तर लिखते हुए भगवान श्रीराम गाते हैं–मैं सदैव चरित्र युक्त स्वभाव वाली, मुझसे अनन्य आप जनकनन्दिनी को जानता हूँ। मैं कल्याणमयी स्वभाव से पवित्र मुझसे अतिरिक्त आश्रय का त्याग की हुई आपको अपने से अभिन्न ही जानता हूँ। मैं जानता हूँ कि आप श्रीजनकनन्दिनी ने मेरे लिये बहुत संकट सहे और प्रसन्नता से विपत्तियों का भार ढोया। आपके स्वभाव में सदैव श्रेष्ठ सद् गुण रहते हैं। आप सबकी माननीय हैं। जगत की माता के रूप में प्रसिद्ध होकर भी आप मेरे लिये ही जनकराजा की पुत्री बनीं। आपका शीलश्रेष्ठ है और आप धन्य हैं। ऐसा मैं समझता हूँ। अहो! सदैव मुझसे अभिन्न होकर भी आप लीला-रंगमंच पर मेरी पत्नी बनना चाहती हैं। आप सौंदर्यवती और निरन्तर धन्य हैं ऐसा मैं समझता हूँ। आप ऐश्वर्यवती होती हुई भी मेरी वरणीय होकर भी पवित्र सेवाव्रत को धारण करके पविव्रत धर्म का पालन कर रही हैं ऐसा मैं जानता हूँ।

मैं जानता हूँ कि आप मुझसे अभिन्न हैं और मेरी मानवलीला को प्रभावित करने के लिए ही मिथिला में अवतीर्ण हुई हैं। आपका स्वभाव विनम्र है और आप **गिरिधर** कवि को शरणागति देने में समर्थ हैं।

## गीत संख्या ३०

**यज्ञरक्षाच्छलेनैव मिथिलां पुरीमागमिष्यामि पद्भ्यां त्वदर्थं प्रिये।**
**धर्मदीक्षामिषेणोल्लसच्चातुरीं आव्रजिष्यामि पद्भ्यां त्वदर्थं प्रिये।।१।।**
**भावयन् भावनीयं महर्षेर्मखं तोषयन् सद्धविर्भिश्च मारुत्सखम्।**
**वर्धयन् मैथिलानां दृगञ्चलसुखं मानयिष्यामि मान्यान् त्वदर्थं प्रिये।।२।।**
**सानुजो घोरनक्तञ्चरान् मारयन् पादरजसाप्यहल्यां द्रुतं तारयन्।**
**कारयन् मुनिमनोरथलतां फलवतीं भावयिष्यामि भावं त्वदर्थं प्रिये।।३।।**
**राजकं त्वत्स्वयम्वरगतं सञ्जयन् रूपलावण्यतो मैथिलान् रञ्जयन्।**
**सुकविगिरिधरभवं कल्मषं भञ्जयन् त्रोटयिष्यामि चापं त्वदर्थं प्रिये।।४।।**

**भौमी–**भगवान श्रीराम पत्र में आगे कहते हैं–हे प्रिये! यज्ञ रक्षा के बहाने से आपके लिए मैं मिथिलापुरी में पैदल आऊँगा। धर्म दीक्षा के ब्याज से ज्ञान चातुरी से युक्त जनकपुरी में मैं आपके लिये महर्षि विश्वामित्र के यज्ञ का सम्मान करते हुए श्रेष्ठ हविष्य से अग्नि को संतुष्ट करते हुये, मिथिलावासियों का नेत्र सुख बढ़ाते हुये मैं माननीय मिथिलापुरी का भी सम्मान करूँगा। हे जनकनंदिनी जू! आपही के लिए युद्ध में राक्षसों को मारकर चरण की धूल से अहल्या को तारकर विश्वामित्र की मनोरथ की लता को सफल बनाकर मिथिला के मधुर भाव का सम्मान करूँगा। हे सीते! केवल आपके लिए आपके स्वयम्बर में आये हुए राजाओं को जीतकर अपने रूप–माधुरी से मिथिलावासियों का मनोरंजन करके और कवि **गिरिधर** के मन के कल्मष को नष्ट करके मैं शिव जी का धनुष भी तोड़ दूँगा।

## गीत संख्या ३१

**त्यक्त्वा साकेतलोकस्य वैभवसुखं सीते भूमेः प्रजातास्यहो मत्कृते।**
**मल्ललितलीलाकार्येऽपि मारुत्सखं पंक्तिमासं प्रयातास्यहो मत्कृते।।१।।**
**नीरजस्का रजोराशिभिः क्रीडसे दिव्यदेहत्विषा विद्युतं व्रीडसे।**
**भूत्वा ब्रह्मादिमाताऽपि सीरध्वजे कन्यकीभूयजातास्यहो मत्कृते।।२।।**
**सर्वशक्तिस्वरूपाऽपि यन्मां शुभे पत्रतश्चाजुहोषीति चित्रं न तत्।**
**त्रोटनेऽपि क्षमा त्वं पिनाकस्य भो दिव्यकीर्तिं प्रदातास्यहो मत्कृते।।३।।**
**त्रोटयिष्यस्यलं नैज शक्त्या धनुः किन्त्वमाकारयस्येव मार्यव्रते।।**
**नूनमेतन् मिषेणैव मयि भूमिजे गौरवं संप्रधातास्यहो मत्कृते।।४।।**
**पद्मपद्भ्यां प्रगन्तासि सार्धं मया दण्डकारण्यमारातिवधहेतवे।**
**रावणं घातयित्वा च गिरिधरप्रभौ राजलक्ष्मीं निधातास्यहो मत्कृते।।५।।**

**भौमी–** भगवान श्रीराम आगे कहते हैं–अहो सीते! मेरे ही लिए साकेत–लोक का वैभव सुख छोड़कर

आप पृथ्वी से प्रकट हुई हैं। मेरी ललित–लीला के संविधान में मेरे ही लिये आप दस मासपर्यन्त अग्नि में भी निवास करेंगी। आप स्वयं रजोगुण से रहित होकर भी बालिका बनकर धूल की राशि से खेल रही हैं और अपने शरीर की कांति से बिजली को भी लज्जित कर रही हैं। ब्रह्मादि देवताओं की माता होकर भी आप मेरे ही लिये जनक जी के यहाँ कन्या बनकर जन्म लीं। सर्वशक्तिस्वरूपा होकर भी आप मुझे पत्र से आह्वान कर रही हैं। यह कोई आश्चर्य नहीं है। स्वयं शिवधनुष तोड़ने में समर्थ होती हुई भी आप मेरे लिए दिव्य कीर्ति प्रदान करना चाह रही हैं। आप तो अपनी शक्ति से ही धनुष तोड़वायेंगी फिर भी इस प्रकार आप मुझे बुला रही हैं। निश्चित ही इसी बहाने हे पृथ्वीनंदिनी! आप मेरे लिए मुझमें दिव्य गौरव का विधान करना चाह रही हैं। हे प्रिये! शत्रु रावण के वध के लिए मेरे साथ आप अपने कोमल चरणकमलों से दण्डकारण्य भी जायेंगी। मेरे लिए रावण का वध कराकर **गिरिधर** कवि के स्वामी मुझ राम के समीप आप स्वयं राजलक्ष्मी को ले आयेंगी।

## गीत संख्या ३२

**मैथिलि तव धन्यं किल शीलम्।**
**कोऽपि न वेत्तुं प्रभवति भद्रे निखिलनिगमचितलीलम्।।१।।**
**स्वयं जगत्स्वामिनी भवन्ती भवसि साम्प्रतं दासी।**
**जननी जगतामपि वधूरहो मोदितकोसलवासी।।२।।**
**कोटिकोटिवाणीगिरिजालक्ष्मीसेवितपदकमला ।**
**श्वश्रूः स्वयं सेवितुं वाञ्छसि भूत्वा स्नुषा सुविमला।।३।।**
**त्यक्त्वा साकेतं परिसेवितकोसलराजनिकेता।**
**गिरिधरहृदयकुटीरे विहर सदा निजभर्तृसमेता।।४।।**

**भौमी–** पुनः श्रीराम हवेली पद्धति का गीत गाते हुये कहते हैं कि– हे मिथिलाधिराजनन्दिनी सीते! सम्पूर्ण वेदों में वर्णित लीलाओं वाले आपके शील को कोई जान ही नहीं सकता। अहो धन्य है। स्वयं जगत की स्वामिनी होकर भी इस समय मेरी पत्नी बनकर आप दासी बनना चाह रही हैं और सारे संसार की माँ होकर भी अयोध्यावासियों को प्रसन्न करती हुई आप महाराज दशरथ की पुत्रवधू बन रही हैं। यद्यपि करोड़ों–करोड़ों सरस्वती, पार्वती एवं लक्ष्मियों द्वारा आपके श्रीचरणकमल की सेवा होती रहती है। ऐसी महिमा मण्डित होकर भी आप पवित्र पुत्रवधू बनकर सात सौ वेश बनाकर अपनी सात सौ सासुओं की सेवा करना चाहती हैं। साकेत को छोड़कर अवध राजभवन में बिराजकर अपने स्वामी मुझ राम के साथ **गिरिधर** कवि के हृदय कुटीर में विहार कीजिए।

## गीत संख्या ३३

**किशोरी तव चरितं कानुकरोतु।।**
**किं सरसी मन्दाकिनीसमतां दधती हृदि न दुनोतु।**
**किं खद्योती तपनविभायाः समतां मनाक् तनोतु।।१।।**
**यत्पदाब्जरज आकांक्षन्तो ब्रह्मादयः सुरेशाः।**
**तेपुर्विविधतपस्तनुतापं हरिहरशेषगणेशाः।।२।।**

**सैव साम्प्रतं दशरथगेहे भास्यसि वधूर्भवन्ती।**
**निजस्वरूपदीपिकया नरपतिभवनं विदीपयन्ती।।३।।**
**यस्याः कृपाकटाक्षं विबुधा नो स्वप्नेऽपि प्रापुः।**
**तां मैथिला बालिकाभूतां यत्नं विनाप्यवापुः।।४।।**
**एकमद्वयं द्वयसि वितनुसे विश्ववन्द्यदाम्पत्यम्।**
**निजे रामपत्नीत्वं सनुषे मयि किल सैतापत्यम्।।५।।**
**या साकेताधीशस्वामिनी सा नृपजनककिशोरी।**
**सीता सैव साम्प्रतं भास्यसि मन्मुखचन्द्रचकोरी।।६।।**
**निर्विवादमकलङ्कमघघ्नं तव निरवद्यचरित्रम्।**
**भवसिन्धोः मज्जतो गिरिधरस्यापि तदेव वहित्रम्।।७।।**

**भौमी-** हे किशोरी जू! आपके चरित्र का कौन महिला अनुकरण कर सकती है? क्या छोटी-सी तलैया मन्दाकिनी की तुलना कर सकती है? ऐसा करने में क्या उसका मन लज्जित नहीं होगा? क्या खद्योती अर्थात् जुगुनूँ मादा सूर्य नारायण की प्रभा की तुलना कर सकती है? जिनके चरण कमल की धूलि को प्राप्त करने की इच्छा करते हुये विष्णु, शिव, शेष, गणेश, ब्रह्मादि अनेक देवता अनेक प्रकार से तप किये। वही आप इस समय अपने रूप की दीपिका से अयोध्या राजभवन को प्रकाशित करती हुई महाराज दशरथ की पुत्रवधू बनकर सुशोभित होंगी। देवता लोग स्वप्न में भी जिनकी कृपा कटाक्ष को नहीं प्राप्त कर सके उन्हीं आपको मिथिलावासियों ने कन्यारूप में सहजतः प्राप्त कर लिया। वस्तुतः मुझसे अभिन्न होकर भी आप लीला में दो भाव उपस्थित कर रही हैं। स्वयं में राम पत्नीत्व का और मुझमें सीतापतीत्व का। जो मुझसाकेताधिपति राम की स्वामिनी हैं वही इस समय जनक राजकन्या अवधराजवधू बनकर मेरे मुखचन्द्र की चकोरी बन रही हैं। वस्तुतः हे सीते! आपका यह निर्मल चरित्र निर्विवाद, निष्कलंक और पापहारी है और यही संसार सागर में डूबते हुये मुझ कवि **गिरिधर** का भी जलयान है।

## गीत संख्या ३४

**सीते चित्ते मा विकला भव।।**
**विरहतापतपनेन सुशीले स्वप्नेऽपि न भो यतुवत् त्वं द्रव।।१।।**
**नहि नीरन्ध्रनलिननयनाभ्यां मौक्तिकशरमिव सलिलं संस्त्रव।।२।।**
**मा हासीर्धरणिजे स्वधैर्यं मा गिरिसदृशं स्वान्तं किल जव।।३।।**
**मत्प्रीतये कनकलतिकामिव तनुं जनकनन्दिनि नितरामव।।४।।**
**गिरिधरप्रभोः पुरातनप्रीतिं गतभीतिं निजमनसाप्यनुभव।।५।।**

**भौमी-** श्रीराम फिर शास्त्रीय हवेली पद्धति में कहते हैं कि हे सीते! आप चित्त में विकल न हों। हे सुशीले! आप स्वप्न में भी विरह ताप की ज्वाला से लाह की भाँति मत पिघलें और अपने निर्निमेष कमल नेत्रों से मुक्ता की माला की भांति आँसुओं की धारा मत चुवाइये। हे जनक नंदिनी अपना धैर्य मत छोड़िये और अपने पर्वत के समान मन को भी विचलित मत कीजिए। हे जनकनंदिनी जी स्वर्ण की लता के समान अपने

शरीर को मेरी प्रसन्नता के लिये यत्न से बचाकर रखिये। **गिरिधर** कवि के प्रभु मुझ राम की पुरातन प्रीति को अपने मन से अनुभव करती रहिये।

## गीत संख्या ३५

**प्रियतमे आयामि शीघ्रम्।।**
**सानुजः कौशिकसहायः जनकपुरमायामि शीघ्रम्।।१।।**
**निहतयज्ञध्वंसिनिशिचरकरस्त्वामुपयामि शीघ्रम्।।२।।**
**तारिताहल्यो मुदितभूसुरगणैः संयामि शीघ्रम्।।३।।**
**जनकनृपलोचनं निजतनुरोचिषा सुखयामि शीघ्रम्।।४।।**
**दुष्टनृपपङ्कजवनं सिंहो यथा नखयामि शीघ्रम्।।५।।**
**भग्नशंकरकार्मुकोऽहं भवव्यथां च हरामि शीघ्रम्।।६।।**
**त्वया सह गिरिधरहृदयकुञ्जाजिरे विहरामि शीघ्रम्।।७।।**

**भौमी–** भगवान श्रीराम पुनः सात मात्रा रूपक ताल में गा रहे हैं–हे प्रियतमे सीते! मैं शीघ्र आ रहा हूँ। अपने छोटे भाई लक्ष्मण के साथ विश्वामित्र की सहायता करने के लिए मैं जनकनगरी में शीघ्र आ रहा हूँ। मैं यज्ञ–विरोधी राक्षस–समूह को मारकर तुम्हारे समीप शीघ्र आ रहा हूँ। मैं अहल्या का उद्धार करके ब्राह्मण समूहों के साथ शीघ्र उपस्थित हो रहा हूँ। मैं अपने शरीर की कांति से महाराज जनक के नेत्रों को शीघ्र सुखी कर रहा हूँ। दुष्टराज समूहरूप कमल वन को सिंह के समान शीघ्र ही प्रताप नख से विदीर्ण कर दूँगा। मैं शीघ्र ही शिव धनुष तोड़कर संसार की व्यथा को हर लूँगा और आपके साथ **गिरिधर** कवि के हृदय कुंज के आंगन में शीघ्र ही विहार करूंगा।

## सन्दर्भश्लोकः

**लब्ध्वा शुको राघवचारुपत्रं पतत्त्रिवर्यो मिथिलां जगाम।**
**ददौ स भौम्यै चिरविह्वलायै असून्त्यजन्त्या इव सोमपानम्।।१।।**

**भौमी–** इस प्रकार श्रीराम का पत्र प्राप्त करके श्रेष्ठ पक्षी लीलाशुक श्रीमिथिला पधार गये। प्राणों को छोड़ती हुई विरहिणी के लिये अमृतपान के समान प्रभु का श्रीपत्र भूमिनन्दिनी श्रीसीता जी को सौंप दिया।

## गीत संख्या ३६

**पठति रघुचन्द्रपत्रं जनकनन्दिनी।।**
**रामकरकञ्जविन्यस्तमधुराक्षरं भावनासाक्षरं विश्ववरवन्दिनी।।१।।**
**भर्तृरूपानुकार्यक्षरैरङ्कितं रङ्कितेवाप्य चिन्तामणिं क्रन्दनी।।२।।**
**जातहर्षा चुचुम्बाथ भावाकुलाऽऽवक्षसाऽऽश्लिष्य दृग्वारिजस्यन्दनी।।३।।**
**सानुरागा नरीनृत्यमानाननं वाष्पपूर्णं पदाब्जेन संस्कन्दिनी।।४।।**
**गीतसीताभिरामं लसत्पत्रकं सुकवि गिरिधरप्रभोः सन्मनश्चन्दिनी।।५।।**

**भौमी-** अब कवि स्वयं दस मात्रा झपताल में सीता जी की मनोदशा का वर्णन करते हुये गाते हैं। सम्पूर्ण विश्व के श्रेष्ठवन्दन की आश्रयरूपा जनकनंदिनी सीता जी भावना के साकार रूप श्रीराम के कर कमल से टंकित अक्षरों वाला पत्र पढ़ रही हैं। प्रभु श्रीराम के रूप का अनुकरण करने वाले नीले अक्षरों से अंकित पत्र को प्राप्त कर सीता जी उसी प्रकार प्रसन्न हो रही हैं जैसे धन के अभाव में बिलखती हुई दरिद्रा महिला को चिन्तामणि प्राप्त हो गया हो। अपने नेत्र से आँसू बहाती हुई प्रसन्न सीता जी पत्र को हृदय से लगाकर चूमने लगीं। सीता जी के हृदय में अनुराग उमड़ आया और वे नाचने लगीं और वे अपने अश्रुपूर्ण मुख से चरणकमल का स्पर्श करने लगीं। इस प्रकार सीताजी को आनन्द देने वाले गीतों से भरा हुआ यह पत्र प्राप्त कर जो कि **गिरिधर** कवि के स्वामी श्रीराम ने भेजा था, संतों के मन को आनन्द देने वाली सीता जी बहुत प्रसन्न हुईं।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये बालकाण्डे गीतयुगलकैशोरको नाम षष्ठः सर्गः।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के बालकाण्ड में गीतयुगलकैशोरक नामक षष्ठ सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये
# बालकाण्डे

## गीतस्वयम्वरोपक्रमो नाम

# सप्तमः सर्गः

## मङ्गलाचरणम्

**सीते मातः कमेतं वहसि हृदि सुते नीलवर्णं विधुं भोः**
**स श्वेतो नैव नीलोऽप्यपर इति मया नैव दृष्टः स दृश्यः।**
**क्वोत्पन्नः क्षीरसिन्धौ क्व खलु दिशि हरेर्भारते कोसलायाम्**
**कौसल्याकुक्षिनाम्नीति मुदितजननी जानकी कं करोतु।।१।।**
**सीते कः समुदेति खेति सुभगस्त्वद्वक्त्रशोभो हरिः।**
**किं सर्पो नहि सर्पहारमुकुटं किं मौक्तिकं नो तथा।।**
**मुक्तव्याहरणान्तिमार्थवचनः शम्भुः न तद्भूषणम्।**
**नोक्त्वा चन्द्रमिनाभिधान्तिमतया प्रीता च सीतावतु।।२।।**

**भौमी-** अब कवि सप्तम सर्ग के दो श्लोकों में अत्यन्त मधुर कल्पना प्रस्तुत करते हुये सीता–सुनयना संवाद के व्याज से आशीर्वादात्मक मंगलाचरण विन्यस्त कर रहे हैं। एक बार माता सुनयना जी ने सीता जी को स्नान कराते हुये उनके हृदय की ओर ध्यान से देखा और कुतूहल से पूछा–सीते! बेटी! अपने हृदय के मध्य में किस नीलवर्णी पुरुष को तुमने धारण किया है? सीता जी ने उत्तर दिया–विधु को। अर्थात् श्रीवत्सलांछन साकेतविहारी श्रीराम को। कोश में विधु शब्द के चन्द्रमा और महाविष्णु ये दो अर्थ प्रसिद्ध हैं–‘विधुःश्रीवत्सलांछनः चन्द्रश्च’ सीता जी ने तो ‘विधु’ कहकर यह कहना चाहा कि वे श्रीवत्सलांछन महाविष्णु श्रीराम को ही अपने हृदय में धारण कर रही हैं। पर माता सुनयना ने विधु शब्द का अर्थ चन्द्र समझा और फिर पूछा–किशोरी जू! विधु तो श्वेत होता है जबकि तुम्हारे हृदय में तो नीलवर्ण दिख रहा है। सीता जी ने कहा–माँ! एक और भी विधु है जो नीलवर्ण होता है-माता सुनयना ने कहा–मैंने तो उसे कभी नहीं देखा। सीता जी ने उत्तर दिया हाँ, कुछ समय पश्चात् आप उन्हें देख लेंगी। सुनयना जी ने पूछा–यह नीलवर्णी विधु कहाँ उत्पन्न हुआ? सीता जी ने कहा– कौसल्या जी की कोख नामक क्षीरसागर में। सुनयना ने फिर पूछा। कौसल्या कौन? सीता जी ने कहा– कोसल महाराज की धर्मपत्नी। सुनयना जी ने कहा–कौसल्या कहाँ हैं? सीता जी ने कहा– यहाँ से पूर्व दिशा में इसी भारत देश में विराजमान कौसल्या नामक पुरी में जिसे अयोध्या भी कहते हैं। इस प्रकार अपनी वचन–चातुरी से माता सुनयना को प्रसन्न करती हुई जनकनन्दिनी सीता जी हम सबका कल्याण करें। पुनः एक बार माता सुनयना ने लाडली लली सीता जी से विनोद किया। सीते! तुम्हारे मुख जैसी शोभा वाला अत्यन्त सुन्दर

यह कौन आकाश में उदित हो रहा है? सीता जी ने भी श्रीरामचन्द्र जी का उत्तरार्ध होने के कारण पति के नामोच्चारण में संकोच का अनुभव करती हुई चन्द्र का पर्यायवाची 'हरि' शब्द कहकर उत्तर दिया। माँ! आकाश में हरि उदित हो रहे हैं सुनयना जी ने भी फँसाना चाहा बोलीं–सीते! क्या वह सर्प है? क्योंकि हरि का अर्थ सर्प भी होता है तो सीता जी ने उत्तर दिया–नहीं। यह तो सर्पहार (शिव जी का मुकुट) है। अर्थात् चन्द्रमा। सुनयना जी ने फिर सीता जी को चक्कर में डालना चाहा! तो क्या ये मुक्तामणि है? सीता जी ने कहा, नहीं– यह मुक्तजनों के द्वारा उच्चारित होने वाले महामन्त्र के अन्तिम अक्षर का अर्थ है। आशय यह है कि मुक्तजन 'राम' इस महामन्त्र का उच्चारण करते हैं। राम का अन्तिम अक्षर 'म'। 'म' के चंद्रमा और शिव, ये दोनों अर्थ प्रसिद्ध हैं। सीता जी ने प्रथम अर्थ का संकेत करते हुए कह दिया कि ये चन्द्रमा हैं। सुनयना जी ने दूसरा अर्थ 'शिव' मानकर पूछा। तो क्या ये शिव जी आकाश में उदित हो रहे हैं? क्योंकि रामशब्द के मकार का अर्थ शिव भी होता है। सीता जी ने कहा नहीं। ये शिव नहीं प्रत्युत शिव जी के आभूषण हैं। इस प्रकार अपने स्वामी श्रीरामचंद्र के नाम के अन्तर्गत होने से स्पष्ट रूप से चन्द्र शब्द का उच्चारण न करके उसका भिन्न-भिन्न युक्तियों से संकेत करती हुई परम प्रसन्न सीता जी हम सबकी रक्षा करें।

## सन्दर्भश्लोकः

**कदाचित् क्रीडन्ती स्वसृशुचिसखीभिः परिवृता**
**शनैः सीता गत्वा पितृमखगृहं तत्र पतितम्।**
**धनुर्दृष्ट्वा विज्यं रजसि विहितं पूजितमथो**
**प्रहासं तन्वाना पितरमिह पप्रच्छ तनया।।१।।**

**भौमी-** कवि कथा प्रसंग को क्रमबद्ध कर रहे हैं। किसी समय अपनी तीनों बहनों मांडवी, उर्मिला, श्रुतिकीर्ति तथा आठों पवित्र सखियों के साथ खेलती हुई जनकनन्दिनी सीताजी–पिताश्री की यज्ञशाला में धीरे से जाकर वहाँ बिना डोरी के पड़े हुए धूलि से धूसरित फिर भी जनक जी द्वारा गंधाक्षत पुष्पों से पूजित हो रहे निरीह धनुष को देखकर परिहास करती हुई लाडली जू जनक जी से पूछने लगीं।

## गीत संख्या-१

**किमिदमवनिभरभूतं हे विलुठति महिपृष्ठे।**
**भवभयमिव परिभूतं हे चिति गरिमगरिष्ठे।।१।।**
**तम इव नभसि पुराणं हे खररजसि विलीनम्।**
**अहमिव मनसि समानं हे गुणरूपविहीनम्।।२।।**
**दिव इत नहुषसुकृतमिव हे स्खलितं गतलाभम्।**
**पुरमिह विशिखनिकृतमिव हे पतितं विगताभम्।।३।।**
**जडमिदमर्चसि रक्षसि हे पितरत्र किमर्थम् ।**
**तुषमवहन्तुमिहेच्छसि हे तण्डुलाय निरर्थम् ।।४।।**
**तदिदमलं मम पाणिर्हे धनुरस्यतु पुरतः।**
**अघमिव सुरवरवाणी हे विनिरस्यतु परितः।।५।।**

**उक्त्वेति गिरिधरस्वामिनी हे धनुरेव चकर्षे।**
**सुरधनुरिव शिशुदामिनी हे वामकरतो जहर्षे।।६।।**

**भौमी-** सीता जी ने पूछा–पिताश्री! यह क्या है? जो पृथ्वी का भार–सा बना हुआ अपमानित हुआ संसार का भय जैसा, चेतना की गरिमा से श्रेष्ठ, मिथिला के भूभाग पर लोट रहा है। पिताश्री! ये कौन–सा अत्यन्त जीर्ण–क्षीण वस्तु विशेष है, जो आकाश में अन्धकार की भाँति भयंकर धूल में छिपा हुआ है। यह तो मन में मान के सहित अहंकार की भाँति गुणों और रूप से विहीन हो चुका है। पिताश्री! यह तो स्वर्ग से गिरे हुये राजा नहुष के पुण्य समान लाभ से रहित होकर निरीह जैसा गिरा पड़ा है। इसकी शोभा उसी प्रकार नष्ट हो गयी है मानो शिव जी के बाण से तितर–बितर हुआ त्रिपुरासुर का नगर ही हो। पिताश्री! किसलिए इस जड़–पदार्थ की आप पूजा कर रहे हैं और रक्षा करते रहते हैं? आप तो उसी प्रकार व्यर्थ की चेष्टा कर रहे हैं जैसे कोई चावल के धान की भूसी कूट रहा हो। इसीलिए जिस प्रकार देववाणी संस्कृत भाषा पाप को नष्ट कर देती है उसी प्रकार इस धनुष को मेरा हाथ ही सामने फेंक दे और चारों ओर घुमाकर इसे तहस–नहस कर दे, इस प्रकार कहकर इन्द्रधनुष को छोटी बिजली की बालिका की भाँति **गिरिधर** कवि की स्वामिनी सीता जी ने अपने बायें हाथ से धनुष को खींचकर घसीटा और बहुत प्रसन्न हुईं।

**विशेष-** यहाँ चकर्षे और जहर्षे प्रयोगों में कर्मव्यतिहार से आत्मने–पद किया गया है और यह भी मैथिल कोकिल विद्यापति के गीत की ढाल में निबद्ध है। जिसका बोल है– कुंज गलिन में रोकल हे पकरल मुरिसारी।

### गीत संख्या-२

**सीता शम्भुधनुर्भुवि कर्षति।।**
**केलिघोटकीकृतं कृतबला प्रबलाबलमिव बलं प्रकर्षति।**
**वारयते जनको न मानयति निरादृत्य नितरां च निकर्षति।।१।।**
**ज्यया कशीकृतया कषायदृक् काषं काषं स्वसन्निकर्षति।**
**बालदामिनी यथा हरिधनुर्धृत्वा धावति धाम्नि प्रधर्षति।।२।।**
**हृष्यति परिपश्यति सखीजने धरणौ धावति धनुराकर्षति।**
**मन्येऽसावबलाप्रवादमपि निराकृत्य सद्बलमुत्कर्षति।।३।।**
**जय जानकि कथयन् सुमनो बहुसुमनाः सुमनोगणः प्रवर्षति।**
**दृष्ट्वा स्वस्वामिनीप्रकर्षं गायन् गिरा गिरिधरो हर्षति।।४।।**

**भौमी-** पुनः कवि हवेली पद्धति में गा रहे हैं–सीता जी शिवजी का धनुष घसीट रहीं हैं। श्रेष्ठबल से युक्त जानकी जी इस निर्बल धनुष को खेल का घोड़ा बनाकर बलपूर्वक खींच रही हैं जनक जी रोक रहे हैं फिर भी सीता जी नहीं मान रही हैं। वह धनुष को निरादरपूर्वक बहुत घसीट रही हैं। क्रोध से लाल नेत्र वाली सीता जी धनुष की डोरी को ही कोड़ा बनाकर उसी से घोड़ा बनाये हुये धनुष को पीट–पीट कर अपने सामने खींच लाती हैं। मानो इन्द्रधनुष को अपने हाथ में लेकर बिजली की बालिका दौड़ती हुई दिव्य तेज को प्रघर्षित कर रही हैं। सखीजनों के देखते–देखते सीताजी प्रसन्न हो रही हैं। दौड़ रही हैं और पृथ्वी पर धनुष को घसीटती जा रही हैं। मुझे लगता है कि सीता जी इसी बहाने नारी अबला है इस अपवाद को भी दूर करके सज्जनों के बल

का उत्कर्ष कर रही हैं। जय जानकी, जय जानकी कहकर देवगण प्रसन्नता से पुष्प-वृष्टि कर रहे हैं और अपनी स्वामिनी सीता जी का अभ्युदय देखकर **गिरिधर** कवि भी गीत गा-गाकर प्रसन्न हो रहा है।

## सन्दर्भश्लोकाः

**जानक्याः कौतुकं दृष्ट्वा विस्मितो जनको नृपः।**
**असाधारणतां मेने दुहितुर्दुहितृवत्सलः।।१।।**
**ततस्समाहूय गुरून् समन्त्रिणो निगद्य सीताभुजवीर्यवैभवम्।**
**गवेषयंश्तद् वरमादिपूरुषं स्वयम्वरं संरचयाम्बभूव ह।।२।।**
**अजूघुषद् विदेहेशो घोषणां सर्वसम्मताम्।**
**देशे देशे नरेन्द्राणां सविधे दूतमाध्यमात्।।३।।**
**यो राजसंसदि पुरारिधनुश्च विज्यं सज्यं विधाय परिभङ्क्ष्यति मध्यतो वै।**
**तं सर्वलोकपरिलोकितवीर्यलोकं सीताविशोकमनघञ्च वरिष्यतीति।।४।।**
**अथादिषन् महेशानं सीतासर्वार्थसाधिनी।**
**अयोध्यां गन्तुमेवाशु स्वप्ने कौशिकमादिश।।५।।**
**तथेति संप्रतिश्रुत्य नत्वा सीतां वृषाकपिः।**
**कौशिकं कोसलान् गन्तुं स्वप्न एव समादिशत्।।६।।**
**विश्वामित्रोऽपि यज्ञघ्नराक्षसान् संप्रघातयन्।**
**इयेष राघवं द्रष्टुं कोसले केलिमास्थितम्।।७।।**
**स च सङ्क्रीडमानोऽपि शिशुभिःश्यामसुन्दरः।**
**दृष्टो दशरथादिष्टो गायत्रीमन्त्रदर्शिना।।८।।**

**भौमी**–सीता जी का यह कौतुक देखकर महाराज जनक विस्मित हो गये और पुत्री पर वात्सल्य-भाव रखने वाले महाराज ने बेटी सीता को असाधारण माना। इसके पश्चात् गुरुजनों और मन्त्रियों को बुलाकर उनके समक्ष सीता जी की भुजाओं के पराक्रम का बखान कर नन्दिनी जी के लिये वर रूप में परम पुरुष परमात्मा को खोजते हुये महाराज जनक ने सीता स्वयम्वर की संरचना की। महाराज जनक ने दूतों के माध्यम से प्रत्येक देश के राजाओं के पास तक सर्वसम्मत घोषणा सूचित करायी। घोषणा के शब्द निम्नवत् हैं-राज समाज में शिवधनुष पर प्रत्यंचा चढ़ाकर जो उसे मध्य से तोड़ देगा सभी लोगों द्वारा पराक्रम के सम्बन्ध में परीक्षित उसी निष्पाप, पराक्रमी, शोकरहित महापुरुष को सीता जी वरण करेंगी। इसके अनंतर भगवती सीता जी ने शिव जी को आदेश दिया कि आप विश्वामित्र को स्वप्न में रामरक्षा-कवच का उपदेश करके, उन्हें शीघ्र अयोध्या जाने के लिए प्रेरित करिये। ऐसा ही होगा इस प्रकार प्रतिज्ञा करके सीता जी को प्रणाम करके शिवजी ने स्वप्न में ही श्री अयोध्या जाने के लिये विश्वामित्र को आदेश दे दिया और राम रक्षा का उपदेश दे दिया। महर्षि विश्वामित्र ने भी यज्ञ विध्वंशकारी राक्षसों का वध कराने के निमित्त श्री अवध में बाललीला करते हुये भगवान राम के दर्शनों की इच्छा की। बालकों के साथ खेलते हुये एवं पिता महाराज दशरथ के अनुशासन में रहते हुये श्यामसुन्दर भगवान श्रीराम के गायत्री मंत्र के दृष्टा विश्वामित्र ने दर्शन किये।

## गीत संख्या-३

खेलति शिशुः सखिभिर्वृतः सरयूतटे श्रीराघवः।
शत्रुघ्नलक्ष्मणसंयुतो भरतार्चितः करुणार्णवः।।१।।
नवनीलनीरदसुन्दरः कलकम्रकेसरिकन्धरः।
शरचापतूणमनोहरः सुभगो लसत्करलाघवः।।२।।
शरदिन्दुकान्तशुभाननो दनुजेन्द्रदावहुताशनः।
व्रीडितविपुलबलशासनो हृतभक्तभीषणरौरवः।।३।।
नवनीलकञ्जविलोचनो जनपापतापविमोचनः।
शतकोटिदिनकररोचनो गुरुसेवयाश्रितगौरवः।।४।।
कन्दुकधरः क्रीडति क्वचिद् हरिशावकान् व्रीडति क्वचित्।
गिरिधरहृदयसदने क्वचित् विहरति भवाम्बुधिवाडवः।।५।।

**भौमी–**शत्रुघ्न–लक्ष्मण के साथ भरत जी द्वारा सम्मानित करुणासमुद्र भगवान श्रीराघव अपने बाल–सखाओं के सहित सरयू तट पर खेल रहे हैं। वे नवीन बादल के समान सुन्दर हैं तथा उनके स्कन्ध सिंह के समान सुदृढ़ हैं। वे धनुष–बाण धारण करने से अत्यन्त मनोहर व सलोने लग रहे हैं और उनके बाण का निशाना बहुत ही सुहावना है। उनका मुख शरदकालीन चन्द्र के समान सुन्दर है तथा वे राक्षस रूप वन को जलाने के लिये अग्नि के समान हैं। उन्होंने अपने प्रताप से असंख्य इन्द्रों को लज्जित किया है और वे अपने भक्तों की भयंकर रौरव यातना को नष्ट कर डालते हैं। वे प्रभु श्रीराम नवीन कमल के समान नेत्र वाले भक्तों के पाप–ताप को दूर करने वाले कोटि–कोटि सूर्यों के समान प्रकाशमान तथा गुरुजनों की सेवा से परम गौरवान्वित हो रहे हैं। कहीं तो श्रीराघव गेंद खेल रहे हैं और कहीं अपने पराक्रम से सिंहों के बच्चों को भी लज्जित कर देते हैं और कहीं **गिरिधर** कवि के हृदय सदन में विहार कर रहे हैं, वे इस संसार–सागर को नष्ट करने के लिये वाड़वाग्नि के समान हैं।

## सन्दर्भश्लोकः

मनोरथरथारूढो गूढस्वेनैव तेजसा।
विश्वामित्रो महाभागः पथि प्राह शुचिस्मितः।।१।।

**भौमी–**इस प्रकार मनोरथों के रथ पर आरूढ़ और शिवजी द्वारा उपदिष्ट श्रीराम रक्षा प्रयोग से जनित अपने ही तेज से सुरक्षित विश्वामित्र श्रीअयोध्या के मार्ग में ही इस प्रकार मुस्कुराते हुए बोले।

## गीत संख्या-४

अद्य गत्वा मया चारु कोसलपुरीं
रामचन्द्राननेन्दोः सुधा पीयताम्।
अद्य दृष्ट्वा तुरीयं लसच्चातुरीं
तत्र सर्वा समस्या समाधीयताम्।।१।।

सुप्रभाता निशा मेऽद्य मङ्गलदिशा
प्रेरितोऽहं शकुनसूचिदक्षिणदृशा।
चारुलोचनचकोरेण वै सादरं
कोमलः कोसलेन्दुः समाश्रीयताम्।।२।।
विश्वामित्रोऽपि मित्रं परं प्राणिनां
भक्तकञ्जैकमित्रं समासाद्य भोः।
स्वाभिमानं विहायैव राघवकरे
मुक्तिमूल्यं विनैवाद्य विक्रीयताम्।।३।।
याचकोऽहं हरिश्चन्द्रपुरतः पुरो
रामचन्द्रं तथैवाद्य याचे सुखम्।
प्रार्थ्यमान्यं वदान्यं नृपं दशरथं
रामरत्नं मनः सम्पुटे धीयताम्।।४।।
अद्य यास्याम्ययोध्यां भवन्याजकः
ब्रह्म साक्षात् करिष्ये परिव्राजकः।
यज्ञरक्षामिषेणाद्य लक्ष्मणयुतः
स्वाश्रमं गिरिधरेशः समानीयताम्।।५।।

**भौमी–**आज जाकर मनोहर श्री कोसलपुरी राम विधुमुख शशी की सुधा पी लूँ मैं।
आज चातुर्य मण्डित निरख तूर्य को अपनी सारी समस्या को हल कर लूँ मैं।।१।।
सुप्रभाता निशा मेरी मंगल दिशा प्रेरणा है शकुन सूचि दक्षिण दृशा।
चारु लोचन चकोरों से आदर सहित राम कोसल सुधाकर को वश कर लूँ मैं।।२।।
मित्र जग का विश्वामित्र हो करके मैं भक्त कुल कंज रवि राम को प्राप्त कर।
तज के अभिमान बिन मुक्ति के मोल अब आज विक्रीत रघुनाथ कर हो लूँ मैं।।३।।
मैं था याचक हरिश्चन्द्र का पूर्व में आज रघुचन्द्र को सुख से माँगू अहो।
लेके दशरथ सरीखे महादानी से मन के सम्पुट में प्रभु रत्न को धर लूँ मैं।।४।।
आज याज्ञिक हो कोसल को जाऊँगा मैं धर यतीवेश प्रभु को निहारूँगा मैं।
यज्ञ रक्षा के मिस से अनुज के सहित **गिरिधर** आश्रम रघुबर अतिथि कर लूँ मैं।।५।।

## सन्दर्भश्लोकः

**स च राजसभां गत्वा गीयमानं च चारणैः।
ददर्श सानुजं रामं समीपे चक्रवर्तिनः।।१।।**

**भौमी–**महर्षि विश्वामित्र ने राजसभा में जाकर चक्रवर्ती महाराज दशरथ के समीप भाइयों सहित उन श्रीरामचंद्र जी के दर्शन किये जिनका यश चारण गा रहे थे।

## गीत संख्या-५

जय नरलोकललाम सजलघनतनुसुषमामन्मथमदहारिन्।।
कौसल्यासुशुक्तिमौक्तिकवर दशरथसुकृतपयोधिसुधाकर।
सुजनचारुसारङ्गमधुपवर रविरविकुलसरोजसुखकारिन्।।१।।
जय मानव मानवताभूषण जय नरवर रघुवंशविभूषण।
भूमिभारमपहर रणभीषण खलकुलकदन शरासनधारिन्।।२।।
करुणावरुणालय धृतलाघव मर्यादापुरूषोत्तम राघव।
परब्रह्म सुजने सुमुखो भव गिरिधरेश जनमनोविहारिन्।।३।।

**भौमी–** जय नरलोक ललाम सजल घन, तनु सुषमा मन्मथमदहारी।
कौसल्या सुशुक्ति मौक्तिकवर, दशरथ सुकृत पयोधि सुधाकर।
सुमन चारु सारंग मधुपवर, रविरविकुल सरोज सुखकारी।।१।।
जय मानवमानवता भूषण, जय नरवर रघुवंश विभूषण।
भूमि भार हर लो रणभीषण खलकुल कदन शरासन धारी।।२।।
करुणा वरुणालय धृतलाघव मर्यादापुरुषोत्तम राघव।
परब्रह्म होवो प्रसन्न अब रामभद्र जनमनोविहारी।।३।।

## सन्दर्भश्लोकः

निरीक्ष्यमाणोऽथ तमालनीलं पतन्तमङ्घ्रौ पतितार्तिहारम्।
हारं हरिं हर्षितहारहारं रामं निकामं मुनिरभ्यगायत्।।१।।

**भौमी–**इस प्रकार तमाल के समान नीलवर्ण पतितों के कष्ट को दूर करने वाले विष्णु के भी आराध्य शिव जी के पुत्र गणपति और कार्तिकेय उनके हार स्वरूप शेष नारायण को हर्षित करने वाले अपने चरण पड़े हुये भगवान राम के दर्शन करते हुये महर्षि विश्वामित्र ने इस प्रकार गाया।

## गीत संख्या-६

मनसि मम वसतु सदा श्रीरामः।
निखिललोकलावण्यलालितो व्रीडितशतशतकामः।।
रुचिररसेन्द्रसरोवरजातं मसृणमृदुलनवमिव जलजातम्।
परममधुरसौन्दर्यविभातं रूपं दधदभिरामः।।१।।
तरुणतमालजलदसमशोभः परमहंसमानसकृतलोभः।
विगलितसुजनमनोविक्षोभः भवभयविपद्विरामः।।२।।
हरतु हरिर्मम भवपरितापं शमयतु शत्रुजनितसन्तापम्।
वितरतु दिशि दिशि कीर्तिकलापं क्षपितदुरितपरिणामः।।३।।
पातु मखं हतरिपुकुलयूथः रणहतनिशिचरगर्ववरूथः।
भवतु शम्भुकार्मुकखण्डनपरगिरिधरललितललामः।।४।।

**भौमी–**हमारे मन बसे सदा श्रीराम।

सकल लोक लावण्य सुलालित, लज्जित शत–शत काम।।
रुचिर शृंगार सरोवर सम्भव, कोमल मृदुल सजल घन नव–नव।
परम मधुर सुन्दरता अभिनव, रूप धरे अभिराम।।१।।
तरुण तमाल जलद सम शोभन, परम हंस मुनि मानस लोभन।
विगलित सकल सुजन मन छोभन, भवभय विपद् विराम।।२।।
मम परिताप सकल हरि हर लें, रिपु संताप दूर प्रभु कर दें।
दिशि दिश में निर्मल यश भर दें, हरें दूरित परिणाम।।३।।
शत्रु मार, कर लें मख रक्षण, हरें निशाचर गर्व विचक्षण।
करें शंभु कार्मुख खण्डन प्रभु, **गिरिधर** ललित ललाम।।४।।

## सन्दर्भश्लोकः

**कृतातिथ्योऽथ ब्रह्मर्षी राज्ञा पृष्टः स्वमागमम्।**
**यज्ञघ्नान् घातयन् रामं विश्वामित्रोऽभ्ययाचत।।१।।**

**भौमी–**महाराज के द्वारा आतिथ्य सम्पन्न कर लिये जाने पर तथा उन्हीं के द्वारा अपने आगमन का कारण पूछे जाने पर यज्ञध्वंशी राक्षसों का वध कराने के लिये महर्षि विश्वामित्र जी ने महाराज दशरथ से श्रीराम–लक्ष्मण को माँगा।

## गीत संख्या–७

**राजन् देहि सानुजं रामम्।**
**काकपक्षधरमब्जसुन्दरं श्रीहृल्ललितललामम्।।१।।**
**धनुर्बाणतूणीरधारिणं मदनमनोहरवेषम्।**
**विदितवीररसविमलविग्रहं श्रितविधिविष्णुविशेषम्।।२।।**
**मनसिजमधुकरनिकरविनिन्दकविलुलितचिकुरकपोलम् ।**
**श्रुतियुगलसितश्रुतियुगमयमकराकृतकुण्डललोलम् ।।३।।**
**तिलकललितललाटमनसिजशुकचञ्चुविनिन्दकनासम् ।**
**जनाजीवराजीवलोचनं भवहरभ्रुकुटिविलासम्।।४।।**
**सौरभपल्लवविलसदधरविधुवदनसुधामयहासम् ।**
**दाडिमबीजदशनमनघं सुमनोहरवचनविकासम्।।५।।**
**कण्ठतरुणतुलसिकास्त्रगाहृतमुक्तसुमुक्ताहारम् ।**
**वक्षोविलसच्छ्रीवत्सं कौस्तुभमुनिमनोविहारम्।।६।।**
**शिशुदिनमणिदीधितिदेवितदीपितजाम्बूनदवस्त्रम् ।**
**अंसलमंसमखोपवीतमखरक्षणसक्षणशस्त्रम् ।।७।।**

जाह्नवीजनकजनकसुखकरभवतारणतरणितचरणम्	।
श्रुतिचयविदितपतितपावनगुणमनुपममशरणशरणम्	।।८।।
परब्रह्म परमेश्वरमीड्यं क्षमं विजितशतकामम्।
रामं देहि मरकतश्यामं गिरिधरमनोऽभिरामम्।।९।।

**भौमी-** हे राजन! लक्ष्मण के सहित उन श्रीराम को दे दीजिये। जो काक पक्ष अर्थात् स्कन्ध तक लटकने वाले घुँघराले बालों से युक्त एवं नीलकमल के समान सुन्दर तथा श्रीजी के हृदय के रत्न हैं। जो धनुष-बाण तरकश धारण करने वाले और काम के मन को हरने वाले वेश से युक्त प्रसिद्ध वीर रस ही जिनका मंगलमय विग्रह है; ब्रह्मा-विष्णु और शेष भूषण शिव जिनके सेवक हैं। जिनके कपोल पर कामदेव के भ्रमरों को निन्दित करने वाले घुँघराले बाल लटक रहे हैं और चतुर वेदस्वरूप मकराकृत कुण्डल जिनकी शोभा बढ़ा रहे हैं। जिनके ललाट पर ललित तिलक है, जिनकी नासिका तोते की चोंच को भी लज्जित कर देती है, जिनके नेत्र सज्जनों के जीवनदाता और लाल कमल के समान हैं, जिनका भृकुटि विलास भवभयहारी है। जिनका अधर आम्रपल्लव के समान है, जिनका मुख चन्द्र के समान तथा मुस्कान अमृतमय है, जिनके दाँत अनार के बीज के समान हैं और जिनकी वाणी का विकास सज्जनों का मन हर लेता है ऐसे श्रीराम को मुझे दे दीजिये। जिनके कण्ठ में विराजमान तुलसी की माला अपनी सुगन्ध से मुक्तजनों को भी आकर्षित कर लेती है, जिनके वक्ष पर श्रीवत्सलांछन सुशोभित है और जिनका कौस्तुभमणि मुनिजन के मन का विहार स्थल बन गया है। जिनका पीताम्बर बालसूर्य की किरणों का निन्दक तथा प्रकाशमान शुद्ध स्वर्ण के समान है, जो अत्यन्त स्वस्थ हैं तथा जिनके स्कन्ध पर यज्ञोपवीत विराज रहा है और जिनका शस्त्र यज्ञ रक्षा में कुशल है। जिनके चरण गंगाजी के जन्मदाता वामन भगवान के अंशी विष्णु को भी आनन्द देने वाले संसार सागर को पार करने वाले एवं नवीन कमल के समान हैं, जिनका पतितपावन गुण वेदों में विदित है, जो अनुपमेय और अशरणों के भी शरण दाता हैं। ऐसे परब्रह्म परमेश्वर स्तुति करने योग्य, सर्वसमर्थ, अनेक कामों को जीतने वाले नीलमणि के समान श्यामल **गिरिधर** कवि के मन को अनुकूलता से रमाने वाले श्रीराम को मुझे दे दीजिये।।९।।

## सन्दर्भश्लोकः

निशम्य राजा मुनिवाक्यवज्रं पपात भूमौ सविमूर्च्छितोऽभूत्।
पुनः समासादितदेहसञ्ज्ञो जगाद जीमूतगिरा गभीरम्।।१।।

**भौमी-** वज्र के समान कठोर विश्वामित्र का वाक्य सुनकर महाराज दशरथ मूर्च्छित होकर भूमि पर गिर पड़े। फिर चेतना प्राप्त कर बादल के वाणी में गंभीरार्थक वचन बोले-

## गीत संख्या-८

हस्तौ बध्वा पादौ नत्वा प्रार्थये भवन्तं हे सिद्धाश्रमसाधो।
रामचन्द्रं दातुं न शक्नोमि हे सिद्धाश्रमसाधो।।१।।
रामभद्र आस्ते मम प्राणानामाधारो हे सिद्धाश्रमसाधो।
रामलालं दातुं विदुनोमि हे सिद्धाश्रमसाधो।।२।।
सम्पूर्णाऽप्ययोध्या वधं विनाऽपि मरिष्यति हे सिद्धाश्रमसाधो।

रामं विना मृत्युं निश्चिनोमि हे सिद्धाश्रमसाधो।।३।।
अनभ्यस्तायुधो द्वादशाब्दो मम रामो हे सिद्धाश्रमसाधो।
ततश्चित्ते नितरां दुनोमि हे सिद्धाश्रमसाधो।।४।।
राममन्तरेण नैव जीवामि मुहूर्तं हे सिद्धाश्रमसाधो।
तत्प्रदाने धैर्यं न तनोमि हे सिद्धाश्रमसाधो।।५।।
राममेव वच्मि रामं चिन्तयामि नित्यं हे सिद्धाश्रमसाधो।
राममेव कर्णाभ्यां शृणोमि हे सिद्धाश्रमसाधो।।६।।
राममेव दर्शं दर्शं युञ्जे मनः क्षेत्रे हे सिद्धाश्रमसाधो।
सत्यमेव भवते प्रतिशृणोमि हे सिद्धाश्रमसाधो।।७।।
गिरिधरप्रभौ लोकलोचनाभिरामे हे सिद्धाश्रमसाधो।
रामे सर्वममतां सिनोमि हे सिद्धाश्रमसाधो।।८।।

**भौमी–**अब कवि बिहार–भोजपुर की लोकधुन में दशरथ जी का गीत प्रस्तुत कर रहे हैं जिसका ढाल है– हाथ जोर पाँय परि करीला बिनतिया हे बक्सर के बाबा। देत ना बनयलेन बबुआ राम हे बक्सर के बाबा। हे सिद्धाश्रम के बाबा विश्वामित्र! मैं हाथ जोड़कर, पाँय पड़कर आपसे प्रार्थना करता हूँ कि श्रीराम चन्द्र को मैं नहीं दे सकता। श्रीरामभद्र मेरे प्राणों के आधार हैं। इसीलिए उन्हें देने में मैं अत्यन्त व्याकुल हो रहा हूँ। हे सिद्धाश्रम के संत कौशिक जी! सम्पूर्ण अयोध्या श्रीराम के बिना वध के बिना भी मर जायेगी। श्रीराम के वियोग में मेरी मृत्यु भी निश्चित है। मेरे श्रीराम अभी शस्त्र चलाने में अभ्यस्त नहीं हैं। सम्प्रति, उनकी अवस्था बारह वर्ष से भी अल्प है। इससे मैं चित्त में बहुत चिन्तित हो रहा हूँ। मैं राम–राम ही रटता हूँ। श्रीराम का ही नित्य चिन्तन करता हूँ और कानों से भी श्रीराम शब्द ही सुनता हूँ। रामजी के बिना मैं एक मुहूर्त्त भी नहीं जी सकता। हे सिद्धाश्रम के सन्त! श्रीराम के प्रदान में मैं धैर्य नहीं रख पा रहा हूँ। हे सिद्धाश्रम के बाबा! श्रीराम को ही देख–देखकर मैं मन समेत इस शरीर में जुड़ रहा हूँ। आपके समक्ष मैं सत्य प्रतिज्ञान से कह रहा हूँ। **गिरिधर** कवि के स्वामी समस्त लोकों के नेत्रों को आनन्द देने वाले श्रीराम में ही मैंने अपनी सम्पूर्ण ममताएँ बाँध रखी हैं। हे सिद्धाश्रम के अधिपति विश्वामित्र जी! मैं श्रीराम को नहीं दे सकता।

## गीत संख्या–९

राघवमहं न दास्ये मरणेऽपि हे मुनीश्वर।
प्राणा न मे भवेयुर्दानादितो यतीश्वर।।
नीरं विनाऽपि मीनो देहं धरेत् कदाचित्।
धर्तुं त्वहं न शक्ये रामं विना तनुं स्वित्।।
गात्रेषु वेपथुर्मे भीतस्य हे शुभाकर।।१।।
महता प्रयत्नतो मे लब्धाश्चतुः कुमाराः।
पितृमातृपरिजनानां जीव्या इमे उदाराः।।
लोचनचकोरचन्द्रं दास्यामि नैव मुनिवर।।२।।

**यान्तं निरीक्ष्य नाथं शून्या भवेत्पुरीयम्।**
**स्थातुं कथं हि शक्या कौशिक विना तुरीयम्।।**
**त्रायस्व शोकवह्नेः पौरान् कृपापयोधर।।३।।**
**भगवन् प्रसीद लब्ध्वा राज्यं धनं सकोषम्।**
**गन्तास्मि पुत्रभार्यायुक्तो वनं सतोषम्।।**
**याचस्व मा सुतं मे मां संकटात्समुद्धर।।४।।**
**बालौ सुकोमलाङ्गौ श्रीरामलक्ष्मणौ मे।**
**युद्धे कथं घटेतां पुत्रावचक्षणौ मे।।**
**गिरिधरप्रभुं न दास्ये रोषं ऋषे समाहर।।५।।**

**भौमी–** राघव को मैं न दूँगा मुनिनाथ मरते–मरते।
मेरे प्राण ना रहेंगे यह दान करते–करते।।
जल के बिना कदाचित मछली शरीर धारे।
पर मैं न जी सकूँगा इनको बिना निहारे
कौशिक सिहर रहे हैं मेरे अंग डरते–डरते।। राघव को.....।।१।।
कर यत्न चौथेपन में सुत चार मैंने पाया
पितु मातु पुरजनों को रघुचन्द्र ने जिलाया
लोचन चकोर तन्मय छवि पान करते–करते।। राघव को.....।।२।।
चलते विलोक प्रभु को होगा उजाड़ कौसल
मंगल भवन के जाते संभव कहाँ से मंगल
सींचे कृपालु तरु को मृदुपात झरते–झरते।। राघव को.....।।३।।
होवें प्रसन्न मुनिवर ले राजकोष सारा
रानी सुतों के संग मैं वन में करूँ गुजारा
ले गोद राम शिशु को सुख मोद भरते–भरते।। राघव को.....।।४।।
लड़के हैं राम लक्ष्मण कैसे करें लड़ाईं
**गिरिधरप्रभु** को देते बनता नहीं गुसाईं
कह यों पड़े चरण में, दृग नीर ढरते–ढरते।। राघव को.....।।५।।

## सन्दर्भश्लोकौ

**अथो वसिष्ठनिर्दिष्टभग्नमोहतमा नृपः।**
**ददौ कुशिकपुत्राय राघवं सहलक्ष्मणम्।।१।।**
**ततः पुरोधसा साकं ब्राह्मणा ब्रह्मवादिनः।**
**जगू राघवमाश्रित्य प्रस्थाने स्वस्तिवाचनम्।।२।।**

**भौमी–**इसके पश्चात् वसिष्ठ के निर्देश पर महाराज दशरथ का मोहान्धकार नष्ट हुआ और उन्होंने लक्ष्मण

सहित श्रीराम को विश्वामित्र जी को समर्पित कर दिया। इसके अनन्तर पुरोहित वसिष्ठ जी के साथ वेदज्ञ ब्राह्मण-जन श्रीराम के प्रस्थान के समय उनका मंगलाशासन करते हुए गीत गाने लगे।

### गीत संख्या-१०

गच्छ राघवसुखं स्वस्ति मङ्गलसुखं
नाधिकानेहसा भूय आगम्यताम्।
साधयित्वा मखं तुष्टमारुत्सखं
सानुजेनाशु सखिभिः समागम्यताम्।।१।।
सुप्रभाताः समाः सन्तु मञ्जुलनिशः
वासरं भास्वरं भान्तु भासुरदिशः।
त्वत्प्रतापानले बाणजिह्वाकुले
प्रोज्वले शत्रुभिर्भस्मतां गम्यताम्।।२।।
लब्धविद्यायशः कीर्तिमण्डितदिशः
जीव शरदां शतं दिव्यसंयुगरसः।
दिव्यविजयश्रिया त्वत्पदाम्भोरुहे
हे हरे हृष्टतन्वा समानम्यताम्।।३।।
हे तपनवंशपङ्कजदिवाकर विमल
पाहि पापीयसः शीलमन्दिर सरल।
रामराजीवलोचन कृपाकर तरल
चेतसा गिरिधरे वै सदा रम्यताम्।।४।।

**भौमी**–हे राघव सुखपूर्वक जाओ, आपका मंगलमय कल्याण हो, अतिशीघ्र ही पुनः आना। अग्नि को सन्तुष्ट करके, यज्ञ को सफल कर श्रीलक्ष्मण के साथ अतिशीघ्र आकर मिलो। आपके वर्ष मंगलमय प्रभात से युक्त हों, आपकी रात्रि मधुर हो, आपके दिन तेजोमय हों, आपकी सब दिशाएँ दिव्य आभा से युक्त होकर सदैव सुशोभित रहें। बाणरूप जीभ से युक्त जाज्वल्यमान तुम्हारे प्रतापरूप अग्नि में शत्रु-पतंगे की भाँति भस्म हो जायें। आप विद्या और यश प्राप्त करके सुयश से दिशाओं को सुशोभित कर दिव्य वीररस से सम्पन्न होकर अनन्तवर्ष पर्यन्त जीते रहें। हे भगवान! अलौकिक विजयश्री पुलकित शरीर वाली होकर आपके चरणकमलों में प्रणाम करे। हे सूर्यवंश रूप कमल के विमल सूर्य! हे शील के मन्दिर! हे सरल श्रीराम! हे कमलनेत्र! हे वत्स! हे चित्त से तरल अर्थात् करुण! आप कवि **गिरिधर** के हृदय में रमते रहें।

### गीत संख्या-११

देवा जगुः-

राघवस्तु कौशिकेन सार्धं प्रयाति तं च लक्ष्मणोऽनुयाति।।
नीलतामरसश्यामकोमलशरीरः ।

कोटिकामकमनीयः समररङ्गधीरः।।
सिन्धुकोटिसमगभीरो धैर्यं न जहाति।।१।।
कटितटनिषङ्गलसितपाणिधनुःसायकः।
भानुवंशनायकः स्वभक्तमोददायकः।।
विनमितविनायको न धृतिं विजहाति।। २।।
शीतलसुगन्धमन्दपवनं निषेवते।
मार्गे परिश्रान्तं मुनिं राघवोऽपि सेवते।।
लोकलोचनानि चोरं चोरं पथि याति।।३।।
खगमृगसरित्सरांसि लक्ष्मणाय दर्शयन्।
मार्गे मधुरवार्ताभिः कौशिकं प्रहर्षयन्।।
चक्रवर्तिसूनुस्तृणशय्यायां विभाति।।४।।
सिंहशावकानां क्वचिद् दन्तांश्च गणयतः।
क्वचिद् घोरजन्तून् स्वबाणैर्व्रणयतः।।
गिरिधरप्रभोर्दृष्ट्वा मुनिसुखं न सम्माति।।५।।

**भौमी–**अब मैथिल लोकधुन में कवि श्रीराम की यात्रा का वर्णन करते हैं। देवता गाने लगे। श्रीराम विश्वामित्र के साथ प्रयाण कर रहे हैं और कुमार लक्ष्मण उनके पीछे–पीछे चल रहे हैं। प्रभु का शरीर नीले कमल के समान कोमल है, वे करोड़ों कामदेवों के समान सुन्दर तथा युद्ध–भूमि में स्थिर स्वभाव के हैं। प्रभु श्रीराम करोड़ों सागरों के समान गम्भीर हैं, इसीलिए धैर्य नहीं छोड़ रहे हैं। उनके कटि प्रदेश में तरकश तथा हाथ में धनुष–बाण है। वे सूर्यवंश के नायक और अपने भक्तों के सुखदाता हैं। श्रीगणेश भी उनके चरणों में झुक रहे हैं और भगवान राम अपनी सात्विक धृति नहीं छोड़ रहे हैं। शीतल–मंद–सुगंध वायु का सेवन करते हुये श्रीराम मार्ग में थके हुये विश्वामित्र जी की सेवा करते हैं और लोगों के नेत्रों को चुरा–चुराकर वनपथ में चले जा रहे हैं। पक्षी–हिरन–नदी–तालाब आदि प्राकृतिक वस्तुएँ लक्ष्मण जी को दिखाते हुये अपनी मीठी–मीठी बातों से विश्वामित्र को प्रसन्न करते हुये प्रभु श्रीराम चक्रवर्ती महाराज के पुत्र होकर भी शयन के लिए कुश शैय्या पर सुशोभित हो रहे हैं। कहीं पर सिंह के बच्चों के दाँत गिनते हुए कहीं हिंसक जंतुओं को अपने बाणों से बेधते हुए **गिरिधर** कवि के प्रभु श्रीराम को निहार–निहारकर महर्षि विश्वामित्र का सुख नहीं समा रहा है।

**विशेष–**यहाँ कर्म में शेषत्व विवक्षया षष्ठी हुई है।

## गीत संख्या-१२

शीतलपवन मञ्जुमङ्गलभवन स्वेदविन्दून् विशोषय हे।
स्यन्दनगमन कोमलं भानुमन् भानुवंश्यं प्रपोषय हे।।१।।
मृद्वी भव पावनवसुन्धरे दूरय शैलान् पुण्यनिर्भरे।
कण्टकविपिनलतातरुगणगहनमार्गखेदं विनोदय हे।।२।।

**सरसिजशिरिषकुसुमसुकुमारौ व्रजत इतो द्वौ राजकुमारौ।**
**नवनीलघन आतपत्रितगगन राजपुत्रौ प्रमोदय हे।।३।।**
**प्रकृते कुरु स्वागतमविलम्बं गापय मृदुपिकमधुपकदम्बम्।**
**गिरिधरनयननीलसम्पुटसुधन कोसलेन्दुं विलोकय हे।।४।।**

**भौमी–**हे शीतलपवन! सुन्दर एवं मंगलभवन श्रीराम के स्वेद–बिन्दुओं को सुखा दो। हे रथगामी सूर्यदेव! सूर्यवंशोद्भव कोमल राम का पोषण करें। हे पुण्यशालिनी पवित्र वसुधे! श्रीराम लक्ष्मण के लिये कोमल बन जाओ और उनके मार्ग से पर्वतों को दूर कर दो। हे कण्टक, वन, लता, वृक्षसमूह तुम श्रीराम के मार्ग में होने वाले खेद को समाप्त कर दो। कमल और शिरीषपुष्प सदृश कोमल एवं सुकुमार दो राजकुमार इधर से जा रहे हैं। हे नवीन नीलमेघ! आकाश में छाया करके दोनों राजकुमारों को आनन्दित करो। हे प्रकृति! तुम श्रीराम लक्ष्मण का अविलम्ब स्वागत करो तथा कोयल और भ्रमरों के समूह द्वारा मंगलगान कराओ तथा **गिरिधर** कवि के नेत्ररूप नीलसम्पुट के रत्न कोसलेन्द्र श्रीराम को निहारो।

## गीत संख्या–१३

**कविर्गायति–**

**जयति मुनियज्ञरक्षारतो राघव जयति श्रुतिविहितधर्मव्रतो राघवः।**
**ब्रह्म परमेश्वरो व्यापको भास्वरो निर्गुणः सगुण एकोऽजितो राघवः।।१।।**
**राम आजानुभुजदण्डकोदण्डशरचण्डवरवन्द्यविरुदैर्वृतो राघवः।**
**याचितस्तातमृषिणा समं धर्मभृद् भ्रातृसौमित्रसध्र्यङ्गतो राघवः।।२।।**
**एक वाणेन हतताडकः कानने बलातिबलाख्यविद्यान्वितो राघवः।**
**लब्धदिव्यायुधः सर्वमायाबुधः प्राप्तसिद्धाश्रमस्वागतो राघवः।।३।।**
**नीचमारीचमुत्क्षिप्य पारेजलधि सुभुजमदमर्दनो वन्दितो राघवः।**
**विहितमखरक्षणो धनुर्मखदर्शने सम्प्रतिष्ठासुरध्वार्चितो राघवः।।४।।**
**चरणपङ्कजपरागेण गौतमवधूशापहृद्विप्रदम्पतिनुतो राघवः।**
**सीतामुखचारुचन्दिरचकोरो भवन् मुदित गिरिधरप्रभुः प्रस्तुतो राघवः।।५।।**

**भौमी–**महाकवि स्वयं गा रहे हैं–विश्वामित्र की यज्ञ रक्षा में तत्पर श्रीराघव की जय हो। वेदविहित धर्मव्रती श्रीराघव की जय हो। ब्रह्म परमेश्वर, व्यापक, दीप्तिमान, निर्गुण, सगुण; किसी से भी न जीते जाने वाले राघव सरकार की जय हो। घुटने तक लटकने वाली भुजा में धनुष–बाण धारण करने वाले श्रेष्ठ विरुदावली से युक्त रामराघव की जय हो। विश्वामित्र के द्वारा पिताश्री से स्वयं के माँगे जाने पर भाई लक्ष्मण के साथ विश्वामित्र के संरक्षण में प्रयाण करने वाले राघव सरकार की जय हो। वन में एक ही बाण से ताड़का का वध करके बला–अतिबला विद्या से युक्त राघव की जय हो। विश्वामित्र से दिव्यास्त्र प्राप्त करने वाले और सम्पूर्ण मायाओं के वेत्ता एवं सिद्धाश्रम का स्वागत प्राप्त करने वाले श्रीराघव सरकार की जय हो। नीच मारीच को समुद्र के पार फेंककर सुबाहु का मद नष्ट करने वाले ऋषियों द्वारा वंदित राघव की जय हो। विश्वामित्र की यज्ञ रक्षा करके मिथिला में धनुर्यज्ञ के दर्शन के लिए सिद्धाश्रम से प्रस्थान करने के इच्छुक मिथिला मार्ग में सम्मानित श्रीराघव की जय हो। अपने चरणकमल की धूलि से अहल्या का शाप नष्ट करने वाले ब्राह्मण–

से मनुष्य श्रेष्ठ हो जाता है ऐसे रघुवर श्रीराम को उदार बुद्धि वाले उन महर्षि वसिष्ठ जी ने शरीर में रोमाञ्च से युक्त होकर इस प्रकार आदेश दिया।

## गीत संख्या-२८

सिन्धूरं समर्पय राघव सीतासीमन्ते
किञ्चिद् विलम्बो न विधीयताम्।
जगदम्बा जानकी जगद्धिताय जगत्पित्रा
जगति पश्यति परिणीयताम्।।१।।
अरुणपरागपूर्णः पद्मिनीपाद्मजस्त्रजा
सुधायै सुधांशुर्भूषां नीयताम्।
तव चक्षुश्चकोराभ्यां सैरध्वजीमुखचन्द्र
पीयूषं मुदैव मुहुः पीयताम्।।२।।
स्वयम्वरे जिता त्वया सीमन्तिनी सीतावधूः
वन्दनीयामयोध्यां च नीयताम्।
रावणं निहत्य चैतद् व्याजतो दयालुनाथ
भूमेरपि भारोऽप्यपनीयताम्।।३।।
रामराज्यसम्पत्या वै प्रणतप्रपत्या प्रभो
त्रिलोक्यद्य सुखं संविधीयताम्।
गिरिधरभारत्यापि दिवानिशमनारतम्
माङ्गलिकगीतमभिगीयताम् ।।४।।

**भौमी-** हे राघव! सीताजी की माँग में सिन्दूर दान कीजिये। किसी प्रकार का विलम्ब मत कीजिए। जगत के हित के लिये जगत के देखते-देखते जगत के पिता आपश्री द्वारा जगदम्बा जानकी का परिणय कर लिया जाय। अमृतपान के लिये कमल माला द्वारा चंद्रमा लाल पराग से पूर्ण करके सुशोभित किया जाय और आपके नेत्र चकोरों के द्वारा सीताजी की मुखचन्द्र सुधा बार-बार पान की जाय। आपके द्वारा स्वयंवर में जीती हुई सौभाग्यवती सीताजी अब वन्दनीया अयोध्या में पधराई जायँ। इसी बहाने रावण का वध करके आपश्री के द्वारा दया करके पृथ्वी का भार हर लिया जाय। श्रीरामराज्य की सम्पत्ति और शरणागत की प्रपत्ति के साथ आज तीनों लोक सुखी कर दिये जायँ। और **गिरिधर** कवि की सरस्वती के द्वारा भी बिना विश्राम किये रात-दिन आपश्री का मांगलिक गीत गाया जाय।

## गीत संख्या-२९

रामो राति श्रियै सिन्धूरम्।।
सीतासीमन्ते कचकान्ते कुसुमगुच्छजितकोटिवसन्ते।
निजसुषमासन्दीप्तदिगन्ते सरसमनघमक्रूरम्।।१।।

दक्षिणकरजनिकरभररम्यं जगदघशमनमशेषप्रणम्यम्।
कलितकञ्जकिञ्जल्ककान्तिहरप्रथितपयोजमदूरम् ।।२।।
सुरदेशिककविकुजबुधजुष्टं परमप्रेममकरन्दसुपुष्टम्।
विधुमभिलसदम्भोजमनुपमं कल्पितशतशिशुसूरम्।।३।।
मङ्गलमथ गायति मिथिलानी हैमवतीपरिकलितहिमानी।
भवति कृतार्था गिरिधरवाणी क्षपितदुरितमधरितकलिशूरम्।।४।।

**भौमी-** कवि स्वयं हवेली पद्धति में गा रहे हैं- श्रीराम सीताजी को सिन्दूरदान कर रहे हैं, पुष्प के गुच्छों से करोड़ों बसन्तों को जीतने वाले अपनी परमशोभा से दिगन्त को प्रकाशित करने वाले घुँघराले बालों से सुन्दर सीताजी के भाल प्रदेश (माँग) में श्रीराम रसयुक्त, निष्पाप, कोमल सिन्दूर समर्पित कर रहे हैं। दक्षिण हाथ के ऊंगलियों के समूह से सुन्दर संसार के पाप को नष्ट करने वाला, सभी प्राणियों के लिए प्रणम्य, सुन्दर कमल के पराग की शोभा को चुराने वाला और कमल की ख्याति को बढ़ाने वाला, दम्पत्ति की दूरी को दूर करने वाला, दिव्य सिन्दूर सीताजी को समर्पित कर रहे हैं–बृहस्पति, शुक्र, मंगल और बुध की शोभा से युक्त, सुन्दर, परमप्रेम, मकरन्द से पूर्ण, चन्द्रमा की इच्छा करने वाले उपमारहित कमल जैसा जिसने अनंत सूर्यों के तेज को इकट्ठा कर लिया हो ऐसा दिव्य सिन्दूर भगवान श्रीराम सीताजी को अर्पित कर रहे हैं। मिथिलानी मंगल गीत गा रही हैं, गंगाजी स्नेह की शीतलता से युक्त हैं। गिरिधर कवि की वाणी कृतार्थ हो रही है और श्रीराम पाप के नाशक कलियुग रूप वीर को भी तिरस्कृत करने वाला दिव्य सिन्दूर सीताजी की माँग में भर रहे हैं।

## गीत संख्या-३०

श्रीरामसीतायुगलं विजयते
अभिरामप्रीतायुगलं विजयते।
श्रीरामजानकीयुगलं विजयते।।१।।
वसिष्ठानुशासने नैकासनस्थं
दिव्यवरवर्णिनीयुगलं विजयते।
श्रीरामजानकी युगलं विजयते।।२।।
परस्परमवलोकयन्मञ्जुप्रीत्या
नलिननयनरसिकयुगलं विजयते।
श्रीरामजानकी युगलं विजयते ।।३।।
गुप्तमपि प्रकटिभवन्मधुतरङ्गं
प्रेमपूर्णमन्तरङ्गयुगलं विजयते।
श्रीरामजानकी युगलं विजयते।।४।।
एकस्थयोर्वारिदविद्युतो सुसमन्वयं

कल्पतरुलताश्लेषयुगलं विजयते।
श्रीरामजानकी युगलं विजयते।।५।।
सुषमाश्रृङ्गारयोरेकीभवद्रूपम्
रघुनिमिकुलपुण्ययुगलं विजयते।
श्रीरामजानकी युगलं विजयते।।६।।
कविगिरिधरमनोमण्डपे विराजमानं
साध्यसाधनसुफलयुगलं विजयते।
श्रीरामजानकी युगलं विजयते।।७।।

**भौमी–** श्रीराम सीता युगल सरकार की जय हो। सबको आनन्द देने वाले श्रीराम और परम प्रसन्न सीता जी इन दोनों दिव्य–विभूतियों की जय हो। वसिष्ठजी के अनुशासन से एक आसन पर बैठे हुये दिव्य वर–वधू युगल की जय हो। प्रेम से अन्योन्य को निहारते हुये कमलनयन युगल रसिक की जय हो। गोपनीय होकर भी जिनके मधुर–भाव तरंग प्रकट हो रहे हैं, ऐसे प्रेमपूर्ण युगल अन्तरंगों की जय हो। एक सिंहासन पर बैठे हुये श्रीसीतारामजी के बादल और बिजली के समान समन्वय की तथा पारिजात और कल्पलता के युगल संश्लेषण की जय हो। सुषमा और शृंगार का एकी–भावरूप रघुराज और निमिराज के पुण्य–युगल श्रीसीतारामजी की जय हो। **गिरिधर** कवि के मनोमण्डप में विराजमान साध्यसाधन के युगल–फलस्वरूप श्रीसीतारामयुगल सरकार की जय हो।

## सन्दर्भश्लोकौ

राजा श्रीभरताय सादरमदात् कौशध्वजीं माण्डवीं
पुत्रीरत्नमथोर्मिलां निजभवां श्रीलक्ष्मणायार्पयत्।
शत्रुघ्नं श्रुतिकीर्तिवल्लभमथो कृत्वा विदेहो मुदं
विद्यानां च चतुष्टयीमिव बुधो दत्त्वा चतुर्भ्योभ्यगात्।।१।।
चत्वारः किलकोसलाधिपसुता राजान्तिके रेजिरे
पत्नीभिः सहिताः क्रियाभिरनघाः पूर्णा पुमर्था यथा।
भूयो मङ्गलगानवाद्यविलसद् माधुर्यमञ्जूत्सवं
नीताः कौतुकगेहमद्भुतवधूभाजः सखीभिर्मुदा।।२।।

**भौमी–** महाराज जनक के आदरपूर्वक कुशध्वज की ज्येष्ठपुत्री माण्डवी को भरतजी को दिया और स्वयं की उत्पन्न हुई पुत्रीरत्न उर्मिला को श्रीलक्ष्मण को समर्पित किया। इसी प्रकार शत्रुघ्नलालाजी को कुशध्वज की छोटी बेटी श्रुतिकीर्ति का पति बनाकर जनकजी उतने ही प्रसन्न हुये जैसे विद्वान आन्वीक्षिकी, त्रयी, वार्ता तथा दण्डनीति नामक चारों विद्याएँ अधिकारानुरूप मुमुक्षु, जिज्ञासु, जिघृक्षु और वुभुक्षु नामक चार अधिकारियों को देकर प्रसन्न होता है। कोसलाधिपति के चार राजकुमार राम–भरत–लक्ष्मण–शत्रुघ्न महाराज दशरथ के पास पत्नियों सहित उसी प्रकार सुशोभित हो रहे थे। जैसे–सेवा, श्रद्धा, तपस्या और भक्ति के साथ क्रमशः चार

अर्थ-धर्म-काम-मोक्ष पुरुषार्थ सुशोभित होते हैं। फिर अद्‌भुत बहुओं वाले चारों भाई मंगलगान और वाद्य से मधुर सम्पन्न कोहबर भवन में सखियों द्वारा ले जाये गये।

**सख्यो जगुः-**

## गीत संख्या-३१

**सख्यो धावं धावं वरोऽयं चलति कीदृशः।**
**अजो बन्धनाद्विमुक्तः पलायते यादृशः।।१।।**
**एतादृशं वरं किमजं वदथ सुदृशः।**
**अजपौत्रीभूय ख्यातोऽयं यतस्तादृशः।।२।।**
**सख्यो मन्दं मन्दं वरोऽयं चलति कीदृशः।**
**तैलयन्त्रे बद्धो वृषभो भ्रमति यादृशः।।३।।**
**ईदृक् वरं कथं वृषभं वदथ सुदृशः।**
**कर्मयन्त्रे यतो जीवान् पिनष्टि तादृशः।।४।।**
**सख्यस्तिष्ठन्वरः सम्प्रति लगति कीदृशः।**
**खातो मरकतस्तम्भो विभाति यादृशः।।५।।**
**ईदृग्वरं कथं स्तम्भं वदथ सुदृशः।**
**प्रह्लादार्थे स्तम्भं भीत्वा प्रकटस्तादृशः।।६।।**
**सख्यः प्लावं प्लावं वरोऽयं चलति कीदृशः।**
**जालान्मुक्तो वनहरिणो विभाति यादृशः।।७।।**
**ईदृक् वरं कथं हरिणं वदथ सुदृशः।**
**गजोद्धारे हरिणीगर्भात्सञ्जातस्तादृशः।।८।।**
**सीतारामगुणवर्णनापवित्रहृद्दृशः।**
**सीतारामे मनो रमतां गिरिधरस्येदृशः।।९।।**

**भौमी-** सखियाँ मिथिला की पद्धति में गाने लगीं। सखियों! ये दौड़-दौड़कर दूल्हे राजा कैसे चल रहे हैं, जैसे-बन्धन से छूटा हुआ बकरा भागता है। दूसरी सखी ने पूछा- अरी सखी! इस प्रकार सुन्दर वर को अज अर्थात् बकरा क्यों कह रही हो? सखी ने उत्तर दिया-क्योंकि ये अज के पौत्र हैं। यदि दादा अज है तो पोता भी तो अज ही होगा। वस्तुतः अज का अर्थ ब्रह्मा है और ब्रह्मा के अंश होने से दशरथ जी के पिताश्री का नाम भी अज ही हुआ। चूँकि अज का अर्थ बकरा भी होता है, अतः मिथिलानियों ने विनोद में वही अर्थ ले लिया। तब भगवान श्रीराम धीरे-धीरे चलने लगे। सखि ने पुनः कहा- सखियों! देख रही हो-धीरे-धीरे चलते हुये दूलह सरकार कैसे लग रहे हैं? जैसे तेल निकालने वाले कोल्हू में बँधा हुआ बैल चलता है। सखि ने फिर कहा अरे! सुन्दर नेत्र वाली इस प्रकार के वर को कोल्हू का बैल क्यों कह रही हो? सखि ने उत्तर दिया-क्योंकि ये चौरासी लाख योनियों में भटकने वाले जीव को कर्म के कोल्हू अर्थात् तैल-यन्त्र में पीसते रहते हैं। इसलिये इन्हें

कोल्हू का बैल कह दिया। तब भगवान श्रीराम खड़े हो गये क्योंकि जल्दी चलें तो बकरा कहा और धीरे चले तो बैल कह दिया। अतः तीसरा विकल्प सोचकर प्रभु वहीं स्थिर खड़े हो गये। फिर सखि ने कहा–सखियों! देख रही हो। स्थिर खड़े हुये दूल्हे राजा कैसे लग रहे हैं? जैसे–आँगन के मध्य गड़ा हुआ मरकतमणि का खम्भा। सखि ने कहा–अरे! सखि इस प्रकार सुन्दर वर श्रीराम को तुम खम्भा क्यों कह रही हो? सखि ने उत्तर दिया–क्योंकि यही प्रह्लाद के लिये खम्भे को फाड़कर नरसिंह रूप में प्रकट हुये थे। खम्भे से प्रकट होने वाला खम्भा ही तो होगा। फिर श्रीराम उछल–उछल कर चलने लगे। तब सखि ने कहा– सखियों! देख रही हो। आज दूल्हेराजा उछल–उछल कर कैसे चल रहे हैं? जैसे जाल से मुक्त हुआ वन का हरिण कूद–कूद कर भागता है। पुनः सखी ने पूछा–अरी सुन्दर नेत्रवाली सखियों! इस प्रकार सुन्दर वर को वन का हरिण क्यों कह रही हो? सखि ने उत्तर दिया– क्योंकि गजेन्द्र के उद्धार के समय ये हरि मेधा ऋषि की हरिणी के गर्भ से उत्पन्न हुये थे तो हरिणी का बेटा हरिण ही तो होगा। भागवत् में कहा भी गया है–"हरिण्यां हरिमेधसः" सीताराम जी के गुण–वर्णन से जिसके हृदय के नेत्र पवित्र हो गये हैं, ऐसे **गिरिधर** कवि का मन सीताराम जी में ही रमता रहे।

**विशेष–** यह गीत मिथिला रसिक परम्परा की गारी लोकधुन में बद्ध है– इसका बोल कुछ इस प्रकार का है– 'सखि हे हलबल दुलहा चलै छी कोना बन्धन छूटल बकरा भगै ही जेना।।'

## सन्दर्भश्लोकः

**अथो समानीय च कौतुकालयं वधूभिरेतांश्चतुरः कुमारकान् ।**
**विधापयामासुरमोघदर्शनाः सुचारुसख्यः किल लौकिकान् विधीन्।।१।।**

**भौमी–** इसके पश्चात् अमोघ दर्शन वाली सुन्दर सखियाँ चारों राजकुमारों को बधुओं के सहित कोहबर में लाकर उनसे सभी लौकिक विधि सम्पन्न करायीं।

## गीत संख्या–३२

**गारीर्भवद्भ्यो नार्पयामो हे काञ्च कथां कथयामः।**
**तथ्यानि यानि भुवि ख्यातानि हे दृष्टिपथे पथयामः।।**
**गुरुपुत्रीसरय्वां निमज्जन्ति सर्वे**
**श्रुत्वा तच्च मनो व्यथयामो हे काञ्च कथां कथयामः।।१।।**
**शान्तया भगिन्या सुमूर्त्या समेतः**
**सन्देहं स्वचित्ते ग्रथयामो हे काञ्च कथां कथयामः।।२।।**
**एकनिशि कौसल्या हयेन संविष्टा**
**तव मातृमैत्रीं प्रथयामो हे काञ्च कथां कथयामः।।३।।**
**दशरथनियुक्ते सुमित्रास्वमित्रे**
**जननीं न ते कदर्थयामो हे काञ्च कथां कथयामः।।४।।**

**गिरिधरप्रभो द्वय र्थश्लिष्टपरिहासेन**
**श्रीचरणरतिं प्रार्थयामो हे काञ्च कथां कथयामः।।५।।**

**भौमी–** सखियाँ कहती हैं– हे राघव सरकार! हम आपको गारी नहीं दे रही हैं, पर जो तथ्य संसार में प्रसिद्ध हैं, उन्हीं को आपके संज्ञान में ला रही हैं। सरयू आपकी गुरुपुत्री अर्थात् बहन हैं उन्हीं की धारा में आप लोग नहाते हैं, यह सुनकर हमारा मन थोड़ा–सा व्यथित हो जाता है। आपकी शान्ता जी बहन हैं और आपकी मूर्ति भी शान्ता है। 'श्यामलं शान्तमूर्तिम्' अतः आप अपनी मूर्ति में ही शान्ता बहन को चिपकाये हुये हैं। इससे हम अपने चित्त में सन्देह के गुच्छों को ही गूँथ रही हैं। अर्थात् हमें आप बहन–भाई के ही सम्बन्ध में सन्देह हो रहा है। राघव! आपके जन्म के पूर्व महारानी कौसल्या एक रात अश्वमेधीय घोड़े के साथ रहीं थीं, अतः आपकी माताश्री की अश्वमित्रता की ख्याति बता रही है। यद्यपि उस अश्वमित्र को आपके पिता दशरथजी ने ही कौसल्याजी के लिए नियुक्त किया था। इसलिए हम आपकी माँ को नहीं गरिया रहे हैं। हे **गिरिधर** कवि के स्वामी! इस प्रकार श्लेष से युक्त दो अर्थों वाले परिहास के माध्यम से हम आपश्री के चरणकमल के अनुराग की प्रार्थना करती हैं। आपकी निन्दा में हमारा तात्पर्य नहीं है। यह केवल विनोद भर ही है।

## गीत संख्या–३३

**पिब कोसलराजकुमार मिथिलागारिरसम्।।**
**षट् पञ्चाशद् भोगं जीमन् यथारुचि शृणु सुकुमार।।१।।**
**दत्ता स्वसा शृङ्गिणे ऋषये ऋषिकुलकृते उदार।।२।।**
**दिश मातॄर्जनकाय राजर्षये हे करुणाकूपार।।३।।**
**पायसमथ तव गर्भनिमित्तं मा स्पृश तज्जितमार।।४।।**
**मा भूत् ते युवनाश्वदुर्दशा हे सीताशृङ्गार।।५।।**
**पितरौ तव निसर्गतो गौरौ श्यामस्त्वं हृतभार।।६।।**
**योऽसि सोऽसि मिथिलामावस लस गिरिधरप्राणाधार।।७।।**

**भौमी–** हे कोसल राजकुमार! मिथिला का गारीरस पीजिए। छप्पन भोग अपनी रुचि के अनुसार जेंवते हुये आप सुनिये। आपने अपनी बहन सींग वाले ऋषि को दे दी। लगता है आप ऋषिकुल के लिए बहुत उदार हैं। यदि बहन ब्रह्मर्षि को दी तो अपनी माताओं को भी राजर्षि जनक को दे दीजिए। क्योंकि आप करुणा के सागर हैं ही। खीर ही आपके गर्भ का निमित्त है। इसलिए हे काम के विजेता श्रीराम! इसे मत स्पर्श कीजिएगा। हे सीताजी के शृंगार! कहीं आपकी युवनाश्व जैसी दुर्दशा न हो जाय। आपके माता–पिता तो गोरे हैं और आप श्यामल हैं। हे **गिरिधर** कवि के प्राणाधार आप जो हैं सो हैं, कृपा करके आप मिथिला में यहीं बस जाइए और यहीं सुशोभित होइये।

**विशेष–** यह गीत भी मिथिला की मंगल गारी परम्परा में ही निबद्ध है।

## सन्दर्भश्लोकाः

**विधाप्य पाणिग्रहणं यथाश्रुतं**

सुबाहुशत्रोर्मिथिलाधिपो नृपः।
मुमोच नो नीरमुचोपमप्रभं
स राघवं तत् पितरं सहानुगम्।।१।।
अथो निकुञ्जेषु लतागृहेषु च
श्रिया समाब्रीडितवैद्युतत्विषा।
समं च रामे रममाण आदरात्
समागता वल्गुवसन्तपञ्चमी।।२।।
महोत्सवोऽभूदुभयोश्च पक्षयोः
दिनेशवंश्ये निमिवंशवर्धने।
प्रमोदमाना वरयात्रिणो मिथः
सुरागकेलिं विदधुश्च मैथिलैः।।३।।

**भौमी-** इस प्रकार वैदिक विधि से सुबाहु राक्षस के शत्रु भगवान श्रीराम का विवाह संस्कार सम्पन्न करके भी महाराज जनक ने मेघवर्णी श्रीराम को उनके पिता महाराज दशरथ और बारातियों को भी अयोध्या जाने की अनुमति न देकर मिथिला में ही रख लिया। इसके पश्चात् अपनी शोभा से विद्युत की भी शोभा को लज्जित करने वाली सीता जी के साथ निकुंजों में, लता भवनों में रमते हुये श्रीराम के समीप सुन्दर बसन्त पंचमी आ गई। अब दोनों पक्षों में जनकजी और दशरथजी के यहाँ होली महोत्सव प्रारम्भ हो गया और प्रसन्न बाराती मैथिलों के साथ रंग खेलने लगे।

## गीत संख्या-३४

होलीं क्रीडति रघुवीरो जनकपुरे होलीं क्रीडति रघुवीरः।
तत्र जनकसुतया सह सख्याः अत्र श्रीलक्ष्मणो वीरः।।१।।
सीतायाः हस्ते कनकनिर्झरणी रामः करे परिलसदवीरः।।२।।
सीताशरीरे नीली भाति शाटी रामः पीताम्बरचीरः।।३।।
सीताऽपि क्लिन्ना रामनवरागैः रामो बभौ समरुणशरीरः।।४।।
अन्योन्यं क्लेदयतो हसतो सुरागैः शीलयति मलयसमीरः।।५।।
शोभां वीक्ष्य गिरिधरो मुदितो जयति सीतावरो धीरः।।६।।

**भौमी-** जनकपुर में रघुवीर श्रीराम जी होली खेल रहे हैं। इधर सीता जी के साथ सखियाँ हैं, उधर श्रीराम के साथ वीर लक्ष्मण। सीता जी के हाथ में सोने की पिचकारी है। श्रीराम का हाथ अबीर से सुशोभित है। सीताजी के शरीर पर नीली साड़ी सुशोभित है और श्रीराम पीताम्बर धारण किये हैं। सीताजी रामजी के रंग से भींग गई हैं और श्रीराम सीताजी के रंग से लाल-लाल हो गये हैं। दोनों पक्षों के लोग एक दूसरे को रंग से भिगो रहे हैं और मलय वायु सबकी सेवा कर रहा है। इस शोभा को देखकर **गिरिधर** कवि प्रसन्न हैं। सीतावर श्रीराम की जय हो।

**विशेष-** यह गीत अवधी भाषा के होली लोकधुन की ढाल में निबद्ध है- इसके बोल हैं।-

**होली खेलैं रघुवीरा अवध में,**
**होली खेलैं रघुवीरा..........।।**

## गीत संख्या-३५

**मिथिलायां शुभमञ्चति होली मिथिलायाम्।।१।।**
**उड्डीयते गुलालमबीरं नवदम्पती अर्चति होली मिथिलायाम्।।२।।**
**वाद्यन्ते पणवानकभेर्यः मङ्गलमनुवर्षति होली मिथिलायाम्।।३।।**
**आली प्रभुमुखमरुणैर्लिम्पति हसति वदति होली होली मिथिलायाम्।।४।।**
**प्रहसन्ती वारयति सुनयना मानसमनुकर्षति होली मिथिलायाम्।।५।।**
**गिरिधरप्रभुर्लसति नतनयनः सदा लसतु मङ्गलहोली मिथिलायाम्।।६।।**

**भौमी-** आज मिथिला में होली मच रही है। गुलाल-अबीर उड़ रहा है। होली नव दम्पत्ति श्रीसीताराम जी की पूजा कर रही है। ढोल, आनक (तुरही) और भेरियाँ बज रही हैं। होली मंगल की वर्षा कर रही है। सीताजी की सखी प्रभु श्रीराम जी के मुख पर गुलाल मल रही हैं, हँसते हुए कहती हैं, होली है होली है। हँसती हुई सुनयना जी सखि को रोक रही हैं कि श्रीराघव को अधिक मत सता और होली भावुकों को मनों को आकर्षित कर रही है। **गिरिधर** कवि के प्रभु श्रीराम नेत्रों को झुकाकर संकोच की मुद्रा में सुशोभित हो रहे हैं और यह मंगल होली निरन्तर सुशोभित रहे।

**विशेष-** यह गीत भी होली की लोकधुन में बद्ध है, इसका बोल है-

**मिथिला में आज मची होली मिथिला में .....**

## गीत संख्या-३६

**क्रीडति वसन्तमिह रामब्रह्म जगता प्रशस्यते होलिकर्म।।१।।**
**सीतासख्यो मिथिलासुधाम्नि रागं क्षिपन्ति नरवरललाम्नि।।२।।**
**प्रहसन्ति मुहुर्गारीर्वदन्ति नाना विनोदवचनं गदन्ति।।३।।**
**शेषावतारलक्ष्मणमथेत्य धावन्ति धरन्ति समाः समेत्य।।४।।**
**नेत्रे अञ्जन्ति बलात् क्षिपन्ति लक्ष्मणमभिरागं निक्षिपन्ति।।५।।**
**परिधापयन्ति नारीवसनं ललना लालित्यस्मितदशनम्।।६।।**
**अवगुण्ठयन्ति वदनं विहस्य कथयन्ति लक्ष्मणामिति प्रशस्य।।७।।**
**राघवो हसति तां दशां वीक्ष्य गिरिधरो मोदते सुखमभीक्ष्य।।८।।**

**भौमी-** इस मिथिलापुरी में परब्रह्म श्रीराम बसन्त खेल रहे हैं। सम्पूर्ण संसार प्रभु के होली कर्म की प्रशंसा कर रहा है। मिथिला धाम में सीता जी की सखियाँ नररत्न श्रीराम जी पर रंग डाल रही हैं। सखियाँ हँस रही हैं, गारी सुना रही हैं, नाना प्रकार के विनोद वचन कह रही हैं पश्चात् सभी सखियाँ एक होकर शेषजी के अवतारी लक्ष्मणजी के पास जाकर दौड़ती हैं और उन्हें पकड़ लेती हैं। उन्हें बलपूर्वक रंग के बर्तन में फेंक देती

हैं। उनकी आखों में काजल लगा देती हैं। महिलाओं की भाँति मुस्कुराते हुये लक्ष्मण जी को महिला का वस्त्र पहना देती हैं। उनका मुख घूँघट से ढँक देती हैं। हँसकर कहती हैं–लक्ष्मणा! आप बहुत सुन्दर हो। लक्ष्मण की यह दशा देख श्रीरामजी हँस रहे हैं और इस सुख का चिन्तन करके **गिरिधर** कवि भी बहुत प्रसन्न हो रहा है।

## सन्दर्भश्लोकः

**इत्थं रमालालितपादपद्मो रामस्तु रेमे ननु होलिकायाम्।**
**वसन्तवासन्तिकताविभूषः सीतासमेतो दशमे सुसर्गे।।१।।**

**भौमी–** इस प्रकार लक्ष्मी द्वारा जिनके चरणकमल का परिलालन किया गया है ऐसे भगवान श्रीराम गीत रामायणम् के दशम सर्ग में सीता जी के समेत वसन्त की वासन्तिकता की शोभा से युक्त होकर होलिका में आनन्द लिये।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये बालकाण्डे**
**गीतसीतारामपरिणयो नाम दशमः सर्गः।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के बालकाण्ड में गीतसीतारामपरिणय नामक दशम सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये

# बालकाण्डे

## गीतप्रत्युद्गमोत्सवो नाम

# एकादशः सर्गः

### सन्दर्भश्लोकः

**एवं विधानेकमहोत्सवेषु प्रमोदमानो मिथिलानगर्याम्।**
**व्यतीत्य राजा बहुवासराणि प्रस्थानमैच्छत् किल कोसलायै।।१।।**

**भौमी-** इस प्रकार अनेक महोत्सवों में भाग लेकर मिथिला नगरी में प्रसन्न हुये महाराज दशरथ बहुत दिनों के पश्चात् अयोध्या जाने के लिये इच्छुक हुये।

### गीत संख्या-१

**गायति कविः-**

आयन् पञ्चकुमार्यो रघुवरवरणे।।
त्रोटिते पिनाके नाकेऽनाके खलकुले साके
पञ्चापि समुत्का राघवानुसरणे।।१।।
लज्जाकीर्तिप्रीतिर्दीनता
पञ्चमीविदेहसुतासंस्करणे ।।२।।
एकनारीव्रतोऽवाप्तकामो लोकरामो रामो
मनो मञ्जु चक्रे सीतास्वीकरणे।।३।।
कुपितेव लज्जा याता स्वयंवरभूपैर्सार्धं
कीर्तिश्चाभवद्दिगन्ते रामसंस्मरणे।।४।।
दीनताऽपिदीना लीना बालब्रह्मचारिणी
परशुधरे भृगुणामलङ्करणे।।५।।
प्रीतिश्चाप्यनूढाभवन् मिथिलापुरे सदैव
लग्ना सीता रामयशोव्याहरणे।।६।।
गिरिधरो मोदमानो वीक्ष्य दृश्यमीदृग्दधे
मतिं रामे जगन्मङ्गलाभरणे।।७।।

**भौमी-** कवि स्वयं एक अपूर्व कल्पनामय गीत गा रहे हैं- श्रीराम का वरण करने के लिये पाँच अल्पवयस्क कुमारी कन्याएँ उपस्थित हुईं। जब भगवान राम ने पिनाक धनुष तोड़ दिया और नाक अर्थात् स्वर्ग, अनाक अर्थात् दुःख से रहित हो गया, राक्षसों का कुटुम्ब साक अर्थात् दुःखी हो गया उस समय पाँच अविवाहित कन्याएँ श्रीराम का अनुसरण करने के लिए उत्सुक हुईं। उस संस्करण में लज्जा, कीर्ति, प्रीति, दीनता और पाँचवीं जनकतनया सीता जी उपस्थित हुईं। परन्तु समस्त कामनाओं को प्राप्त किये हुये संसार के आनन्ददाता भगवान श्रीराम ने एक नारी व्रत होने के कारण सीताजी के स्वीकार में ही मन का निश्चय किया। लज्जा कुपित हुई-सी स्वयम्वर में आये हुये राजाओं के साथ चली गई और कीर्ति प्रभु के संस्मरण के लिए दिगन्तों में फैल गई और दीनता बाल-ब्रह्मचारी भृगुवंशियों के अलंकार परशुराम में ही लीन हो गई। प्रीति ने किसी से भी विवाह नहीं किया। वह कुमारी बनकर मिथिलापुरी में ही विराजी और स्वयं को श्रीसीतारामजी के यशः कथन में लगा दिया। इस प्रकार का दृश्य देखकर प्रसन्न हो रहे **गिरिधर** कवि ने भी जगन्मंगल के अलंकार स्वरूप प्रभु राम में ही अपनी मति लगा दी।

## सन्दर्भश्लोकौ

**इत्येवं बहुसूत्सवेषु मिथिलालोकैर्मुदैवादृतः**
**मासान् पञ्च निनाय वै दशरथोऽयोध्येव वै विस्मृता।**
**पश्चाच्छ्रीजनकं निवेद्य करुणाक्लिन्नं स गन्तुं यदा**
**ऐच्छच्छोकमहोदधौ च मिथिलामग्नेव जाता तदा।।१।।**
**श्रुत्वा स्वं गमनं च कोसलपुरे सीता च बाष्पं दृशो**
**मुञ्चन्ती जनकेन पृष्टनिगमा तातं जगादातुरा।**
**एकस्माज्जठरादुभौ प्रजनितौ पुत्रस्तथा कन्यका**
**पुत्रस्तिष्ठति तातसद्मनि कथं दूरं सुता प्रेष्यते।।२।।**
**प्रेमपयोनिधितीव्रप्रवाहेषु ज्ञानविवेकमुदूहमरोदीत्।**
**भूयो निरीक्ष्य सुतां रुदतीं नयनाश्रु विमुच्य समोहमरोदीत्।।३।।**
**धीरधुरन्धरो धैर्यं विहाय धृतिं परिहाय वराकमरोदीत्।**
**जानकि जानकि जानकि जानकि सम्प्रविलप्य सुवाकमरोदीत्।।४।।**

**भौमी-** इस प्रकार बहुत से महोत्सवों में मिथिला के लोगों से सम्मानित होकर महाराज दशरथजी ने विवाह के पश्चात् भी प्रसन्नता से पाँच महीने व्यतीत कर दिये। जब करुणापूर्ण हृदय जनकजी से अयोध्यागमन की अनुमति माँगी तब तो सम्पूर्ण मिथिला ही शोक सागर में डूब गई। अयोध्या में अपने जाने का समाचार सुनकर नेत्रों से आँसू गिराती हुई सीताजी महाराज जनक द्वारा रोने का कारण पूछे जाने पर पिताजी से आतुर स्वर में बोलीं–एक ही कोख से बेटा और बेटी दोनों जन्म लेते हैं, परन्तु बेटे को माता-पिता क्यों अपने घर में रख लेते हैं और बेटी दूर क्यों भेज दी जाती है? जनकजी प्रेमसागर के तीव्र प्रवाहों में ज्ञान-विवेक को बहाते हुए रो पड़े। फिर बेटी सीता को रोती देख महाराज आँसू बहाकर फूट-फूट कर रो पड़े। धीर-धुरन्धर जनकजी अपना धैर्य त्यागकर वेदान्त की धारणा छोड़कर निरीह की भाँति रोने लगे। जानकी-जानकी-जानकी-जानकी! इस प्रकार सुन्दर वाक्यों में विलाप करके महाराज जनक रो पड़े।

## गीत संख्या-२

सुरतरुवल्लीरिव सीता मया पालितास्ति सीता मया पालितास्ति
तां च रामचन्द्रो नयन् याति।।
नयनपुत्तलिकेव सीता मया लालितास्ति सीता मया लालितास्ति
तां च रामभद्रो नयन् याति।।१।।
कथं सा श्वश्रूशुश्रूषणजागरं करिष्यति जागरं करिष्यति
या सायं नलिनीव निद्राति।।२।।
निज गोप्य रुचिमपि कमियं वदिष्यति कमियं वदिष्यति
या च स्वल्पगिरि दरिद्राति।।३।।
पुष्पकलिकेव मया नक्तं दिवं पोषिता या नक्तं दिवं पोषिता या
सैव पिपासया परियाति।।४।।
कामधेनुपयसा शुभौदनं समसिता या शुभौदनं समसिता या
सैव क्षुधार्तेव प्रतिभाति।।५।।
मा ब्रजत मा ब्रजत स्कन्धवाहास्तिष्ठत स्कन्धवाहास्तिष्ठत
सुता मम दूरं किमु याति।।६।।
रोधयत सख्यः समा सीतां बहिर्गमनाद् भोः सीतां बहिर्गमनाद् भोः
पितुः किन्नु प्राणान् नैव पाति।।७।।
गिरिधरस्वामिनीं स्वाभाविकीं मृदुलतां स्वाभाविकीं मृदुलतां
केन कारणेन विजहाति।।८।।

**भौमी-** अब जनकजी समदन गीत गा रहे हैं-अहो! कल्पवृक्ष की लता के समान जिन सीता का मैंने पोषण किया, उन्हीं को आज श्रीरामचन्द्र लिए जा रहे हैं। अहो! आँख की पुतली के समान जिन सीता को मैंने दुलार के रखा, उन्हीं को आज रामभद्र लिए जा रहे हैं। हमारी सीताजी सासुओं की सेवा में जागरण कैसे कर पायेंगी? जो कमलिनी की भाँति सायंकाल ही नींद में आ जाती हैं। ये लाडली जी अपनी गोपनीय रुचि किससे कहेंगी? जो थोड़ी वाणी में भी शब्द की दरिद्रता का अनुभव करती हैं अर्थात् बहुत ही अल्प बोलने का प्रयास करती हैं। फूल की कली की भाँति जिनका मैंने दिन-रात पोषण किया है, वे ही आज प्यासी-सी दिख रही हैं। कामधेनु के दूध से जिसको मैंने भात खिलाया, वही आज भूखी-भूखी प्रतीत हो रही हैं। हे कहारों! सीता की पालकी लेकर मत जाओ, रुक जाओ, मेरी बेटी मुझसे दूर क्यों जा रही है? हे सखियों! सीताजी को बाहर जाने से रोक लो, बेटी पिता के प्राणों की रक्षा क्यों नहीं कर रही है? **गिरिधर** कवि की स्वामिनी सीता अपनी स्वाभाविक कोमलता को किस कारण से छोड़ रही हैं।

**विशेष-** यह गीत मिथिला के समदन लोक धुन की ढाल में निबद्ध है, जो बेटी की विदाई के समय गाया जाता है, इसमें करुणा की पराकाष्ठा होती है, इसका बोल है ''बड़-बड़ जतन क-क, सिया जी के पोषलौं से हो रघुवंशी ने-ने जाये''

## गीत संख्या-३

सीता रुदती गायति-

**गतो गिरिमस्तं प्रातश्चन्द्रमा उदेति सूर्यो व्योमनि**
**मातरनुज्ञातुमर्हसि सुखेन मां श्वसुरगृहं यातुमयोध्यापुरं यातुम्।।१।।**
**अरे अरे मिथिलायाः दूर्वे सकरूणा न श्रुष्याः दूर्वे**
**अहमस्मि कन्यापरद्रव्यं श्वसुरगृहं यायामयोध्यापुरं यायाम्।।२।।**
**अरे अरे सखि मम सारिके पिञ्जरशुकबान्धव युवां त्यक्त्वा यामि**
**विवशाप्ययोध्यां विलप्य मा स्म रुदतं प्रलप्य मा स्म रूदतम्।।३।।**
**अरे अरे मिथिलायाः कोकिले जनन्यै धैर्यं दद्याः कोकिले**
**भारतीय संस्कृतेः प्रबन्धात् श्वसुरगृहे कन्या याति।।४।।**
**अरे अरे मृगि भ्रातृजाये मनसि मा स्म खिद्यथाः विलप्य मा स्म रोदीः**
**हरिणी तव प्रसव समाचारमेत्य सुखेन वर्धयिष्ये सोहरं कीर्तयिष्ये।।५।।**
**अरे अरे क्रूरा स्कन्धवाहा द्रुतं न शिविका नेया एषा मिथिला**
**विलोक्यतां क्षणेन पुनस्तु स्वप्ने यास्यति।।६।।**
**एवं विधं करुणं लपन्ती दृगश्रूणि विमुञ्चन्ती**
**गिरिधरस्वामिनी मिथिलां विषण्णां विधाय श्वसुरगृहमेति।।७।।**

**भौमी-** सीताजी रोती-रोती गा रही हैं-अहो! आज प्रातःकाल हो गया, चन्द्रमा अस्ताचल को जा चुके हैं, सूर्यनारायण आकाश में उदित हो रहे हैं। माँ! अब मुझे ससुराल जाने की अनुज्ञा दीजिये, अयोध्यापुर जाने की अनुमति दीजिए। अब मिथिला की दूब को सम्बोधित करती हुई सीताजी कहती हैं- अरे मिथिला की दूर्बा! तुम करुण मत होओ और कभी सूखो नहीं। मैं तो कन्या हूँ, दूसरे का धन हूँ। अतः ससुराल जाना ही पड़ेगा। अयोध्यापुर जाना ही होगा। अरी मेरी मित्र मैना! पिंजरे में रहने वाले मेरे भाई तोता! विवशता में तुम दोनों को छोड़कर अयोध्या जा रही हूँ। तुम विलाप करके मत रोना, प्रलाप करके रूदन मत करना। हे मिथिला की कोयल! मेरी माँ को धैर्य देती रहना। कोकिले! भारतीय संस्कृति की व्यवस्था के कारण ही कन्या ससुराल जाती है। हे मृगी भाभी! तुम मेरे वियोग में दुःखी मत होना और रोना नहीं। हरिणी! तुम्हारे प्रसव का समाचार सुनकर मैं अयोध्या से तुम्हें बधाई भेजूँगी और सोहर गवाऊँगी। अरे! अरे! निष्ठुर कहारों! पालकी जल्दी मत ले चलो। क्षण भर तो मिथिला को देख लेने दो फिर तो यह सपना हो जायेगी। इस प्रकार रोती हुई, नेत्रों से अश्रुपात करती हुई **गिरिधर** कवि की स्वामिनी सीताजी मिथिला को दुःखी बनाकर अयोध्या पधार आईं।

**विशेष-** यह गीत अवधी की उस लोक धुन में निबद्ध है जो बेटी की विदाई के समय गाया जाता है। इसका बोल है- पुरबू से उगलीं अजोरिया औ पच्छिम बिसवलीं, माई साजहु कूंड़ा दउरिया हम दूरि अजोध्या जाबै दूरि गवन जावै।।

## गीत संख्या-४

**श्वसुरगृहं याति सम्प्रति सीता।।**
**अनुजानन्तु तां तरुवरवल्यः**
**जातिमाधवीमालतीमञ्जुमल्यः ।**
**विलसतु श्वसुरगृहे सुखमेषा**
**न वो हृदा विजहाति सम्प्रति सीता।।१।।**
**मातेव स्वकरेण या वः सदा सिञ्चति**
**न कदापि युष्मत् प्रवालानि लुञ्चति।**
**मुञ्चन्ती वाष्पाणि नलिननयनतो**
**युष्मद्विदूरं याति सम्प्रति सीता।।२।।**
**धैर्यं धरत हृदि हरिणा हरिण्यः**
**मा मैव क्रन्दत करिणः करिण्यः।**
**सर्वेऽनुजानीत सीतां सनातन-**
**संस्कृतिमिह पाति सम्प्रति सीता।।३।।**
**गिरिधरस्वामिमनोरथारूढा**
**कोसलपतिवरवधू नवोढा।**
**मिथिलां विरहवारिधौ सम्मज्जयन्ती**
**कोसलाकुशलं लाति सम्प्रति सीता।।४।।**

**भौमी-** इस समय सीता ससुराल जा रही हैं। हे वृक्ष की लताओं! जाति! मालती! सुन्दर चमेली! सब लोग उन्हें अनुमति दीजिए। सीता आपको हृदय से नहीं छोड़ रही हैं। जो माँ की भाँति आप लोगों को निरन्तर सींचती हैं, जो आपके पल्लवों को कभी नहीं तोड़तीं, आज वही सीता आँसू बहाती हुई आप लोगों से दूर चली जा रही हैं। हे हरिण और हरिणियों! धैर्य धारण करो। हे हाथियों और हथिनियों! मत रोओ। सभी लोग सीता को अनुमति दो। जो इस समय सनातन वैदिक संस्कृति की रक्षा कर रही हैं। इस समय **गिरिधर** कवि के स्वामी श्रीराम के मन रूप रथ पर आरूढ़ नव-विवाहिता कोसलेश्वर दशरथ की श्रेष्ठ बहूरानी मिथिला को बिरह सागर में डुबोती हुई अयोध्या में कुशल मंगल का उपहार ला रही हैं।

## सन्दर्भश्लोकः

**सुनयना वनरुणनयनं हरिं नयननीरजनीरनिषेचितम्।**
**समगदद् गदितं श्रुतिभिर्गदत् सुनिगदं गदनाशिनमागदम्।।१।।**

**भौमी-** सासु सुनयनाजी कमल के समान नेत्र वाले, भावुकों के कमल नेत्र के जलों से स्नात, श्रुतियों में प्रसिद्ध निगद से युक्त भवरोगनासक, अमृतस्वरूप भगवान श्री राम को संबोधित करके गद्‌गद वाणी में कुछ कहने लगीं।

## गीत संख्या-५

**अये राम! सीतामधीतां मया मातृकं प्रेषयेथाः कदाचित् कदाचित्।**
**मुखेन्दुत्विषा स्वीयकैरवकुलं त्वं समुन्मेषयेथाः कदाचित् कदाचित्।।१।।**
**मया भूभृता प्राणतोऽपाल्यभिज्ञा कृता नो कदाप्येतदीयाह्यवज्ञा।**
**कठोरं न वाच्या किशोरी त्वया मे विनिर्देशयेथाः कदाचित् कदाचित्।। २।।**
**समुद्विग्नचित्तां स्मरन्तीं कुटुम्बं जनं परिजनं वृद्धं तातं सहाम्बम्।**
**गिराशीलमङ्गल्यया वत्स राघव! समुपदेशयेथाः कदाचित् कदाचित्।।३।।**
**सुतां नेतुकामेन रामेण भूम्ना निरीक्ष्या पुरीयं चिदानन्दसीम्ना।**
**तुरीयोऽतुरीयां कुटुम्बावलीं स्वां सुखं श्लेषयेथाः कदाचित् कदाचित्।।४।।**
**प्रिया तावकीयं सदा मर्शनीया परामर्षणीया शुभं दर्शनीया।**
**गिरा गिरिधरेश्वर निराकृत्य रोषं समादेशयेथाः कदाचित् कदाचित्।।५।।**

**भौमी-** हे रामचन्द्र! जब भी मैं बेटी सीता का स्मरण करूँ तो सतत नहीं तो कभी-कभी मैके भेज दिया करियेगा। अपने मुखचन्द्र की कान्ति से आप आत्मीयजन रूप कुमुद समूहों को कभी-कभी विकसित कर दिया करियेगा। मैंने और महाराज ने इन अभिज्ञा सीता को प्राण से पाला है। हम दोनों ने इनका कभी अपमान नहीं किया। आप मेरी किशोरीजी को कभी कठोर वचन नहीं कहेंगे। कभी-कभी इन्हें निर्देश देते रहेंगे। जब मेरी बेटी उद्विग्न चित्त होकर कुटुम्ब का, सेवकों का, परिवार का, बूढ़े पिता का और मेरा स्मरण करके उद्विग्न हो जाय, तब हे वत्स राघव! आप शील-मंगल्य अर्थात् अनुनय की कला से पूर्ण वाणी द्वारा उन्हें कभी-कभी धीरज धरा दीजियेगा। हे प्रभु! आप भूमा और सच्चिदानन्द की सीमा हैं, अतः मेरी बेटी को लिवा जाते समय इस मिथिलापुरी को निहार लीजिए। हे तुरीय ब्रह्म! तुरीया सीताजी से रहित इस मिथिला परिवार को भी कभी-कभी सुख से युक्त कर दिया करियेगा। हे प्रभो! ये सीताजी अब आपकी प्रिया हैं। इनको क्षमा करते रहियेगा। समय-समय पर इनसे परामर्श भी लेते रहियेगा। इन्हें कल्याण के दर्शन कराते रहियेगा। हे **गिरिधर** कवि के स्वामी श्रीराम! क्रोध को छोड़कर कभी-कभी इनको आप आदेश भी देते रहिएगा।

## सन्दर्भश्लोकौ

**दयितामधिगम्य धारणेयीं**
**रघुचन्द्रो ननु रोहिणीं शशीव।**
**चकमे किल कोसलां प्रगन्तुं**
**सहभार्यो भगवान् सहानुयात्रः।।१।।**
**ननृतुर्नाकनर्तक्यस्तुष्टुवुः सिद्धचारणाः।**
**सुमनांस्यपि सुमनसो ववृषुर्योषितो जगुः।।२।।**

**भौमी-** रोहिणी को प्राप्त किये हुये चंद्र की भाँति रघुकुल के चंद्रमा भगवान श्रीराम, धर्मपत्नी सीताजी और बारातियों के साथ श्रीअवध को प्रस्थान के लिये इच्छुक हो उठे। अप्सराएँ नाचनें लगीं। सिद्ध और चारण स्तुति करने लगे। देवता फूल बरसाने लगे और देवबधुएँ गाने लगीं।

## गीत संख्या-६

आयात्ययोध्यां पुनीता हे अद्य सीता वधूराज्ञी।।
श्रीमिथिलाधिपराजकिशोरी रामचन्द्रमुखचन्द्रचकोरी
आयात्ययोध्यामभीता हे अद्य सीता वधूराज्ञी।।१।।
छविविगणितशतशतशर्वाणी विभवविजितवनजाब्रह्माणी
आयात्ययोध्यां प्रतीता हे अद्य सीता वधूराज्ञी।।२।।
भारतीयसंस्कृत्यनुरूपा आदिशक्तिरथ हतभवकूपा
आयात्ययोध्यां श्रुतिगीता हे अद्य सीता वधूराज्ञी।।३।।
तनुसुषमाजितचम्पकवर्णा गिरिधरगीतसरोरुहचरणा
आयात्ययोध्यां विनीता हे अद्य वधूराज्ञी।।४।।

**भौमी-** आज पवित्र, सीता बहूरानी जी श्रीअवध पधार रही हैं। आज मिथिला नरेश जनकजी की राजकिशोरी श्रीरामचंद्र के मुखचन्द्र की चकोरी भयरहित सीता बहूरानी जी श्रीअवध को पधार रही हैं। अपनी छवि से कोटि-कोटि पार्वतियों को भी तिरस्कृत करने वाली, अपने वैभव से लक्ष्मीजी और ब्रह्माणीजी को भी जीतने वाली, प्रभु के प्रति अत्यन्त विश्वस्त सीताजी श्रीअवध को पधार रही हैं। भारतीय संस्कृति के अनुरूप व्यक्तित्व वाली आदिशक्ति, संसार कूप को नष्ट करने वाली, वेदों में गायी हुई सीता बहूरानीजी आज श्रीअवध पधार रही हैं। अपनी शोभा से जिन्होंने चम्पा के वर्ण को जीत लिया है, **गिरिधर** कवि के द्वारा जिनके कमलचरण का गान किया गया है ऐसी अत्यन्त विनीत सीता बहूरानीजी आज श्रीअवध को पधार रही हैं।

## गीत संख्या-७

सीता लोकललनाललाम हो
नृपतिगृहं वधूरागच्छति।
अद्य वयं मैथिलीं पश्याम हो
नृपतिगृहं वधूरागच्छति।।१।।
पूरय देवि सुमित्रे चतुष्कं
कैकयि सिञ्च प्राङ्गणं शुष्कम्।
अथ मङ्गलानि करवाम हो
नृपतिगृहं वधूरागच्छति।।३।।
गुरुमातरमाह्वयारुन्धतीं
पूजय गणपतिमथो पार्वतीम्।
अथ तोरणानि रचयाम हो
नृपतिगृहं वधूरागच्छति।।३।।

दोहय दिव्यसुरगवीदुग्धं
कुरु लौकिकं वैदिकं शुद्धम्।
गोमयेन द्वाराणि लिम्पाम हो
नृपतिगृहं वधूरागच्छति।।४।।
रोपय परितः पुरीं रसालं
बकुलकदम्बपलासतमालम्
गिरिधरगीतं गापयाम हो
नृपतिगृहं वधूरागच्छति।।५।।

**भौमी–** देववधुएं कह रही हैं आज सम्पूर्ण नारियों की रत्नभूत सीताजी महाराज के घर में वधू बनकर आ रही हैं। आज हम मिथिलाधिराज कन्या सीताजी के दर्शन करेंगी। हे देवी सुमित्रा! चौके पूरो। कैकेयी! सूखा प्रांगण सुगन्ध जल से सींचो। आज हम सब मंगलाचार करें। दशरथ महाराज के घर में नवीन बहू आ रही हैं। आज कामधेनु का दूध दुहाओ। लौकिक और वैदिक सभी विधानों को शुद्ध रूप से सम्पन्न करो। हम द्वारों को गोबर से लीपें, क्योंकि महाराज के घर सीता दुलहिन पधार रही हैं। नगर के चारों ओर आम्र वृक्ष, बकुल, कदम्ब, टेसू और तमाल के वृक्ष लगाओ और **गिरिधर** कवि के द्वारा रचित गीत गवाओ और गाओ, क्योंकि चक्रवर्ती दशरथजी के राजभवन में बड़ी बहूरानी सीताजी पधार रही हैं।

**विशेष–** यह गीत अवधी के आँचलिक लोकधुन में बद्ध है जो नई बहू के आने के समय गाया जाता है– इसका बोल इस प्रकार है–नया खपड़इलवा छवाउ रे नये घर दुलहिनि आवै।।

## गीत संख्या-८

अद्य अयोध्या परममोदमीता हे शुभे
चतुर्वधूसु सुभगतमा सीता हे शुभे।।
विहिता विधात्रा किं वा छविमयी भामिनी
राम सहितेव भाति सघना सौदामिनी।
अनया रतिकोटिकोटिव्रीडां नीता हे शुभे
चतुर्वधूसु सुभगतमा सीता हे शुभे।।१।।
चम्पककनकवर्णा दिव्यभव्याभरणा
अशरणशरणा नवनलिनचरणा।
शरद्विधुमुखी सुषमापरीता हे शुभे
चतुर्वधूसु सुभगतमा सीता हे शुभे।।२।।
नीलनीलपरिधाना विश्वविश्ववन्दिता
त्रिलोकीलावण्यलक्ष्मीः सन्ततमनिन्दिता।
मूर्तिमती भारतसंस्कृतिः प्रतीता हे शुभे

चतुर्वधूसु सुभगतमा सीता हे शुभे।।३।।
अयोनिजा मिथिलेशनृपतिकिशोरी
रामचन्द्रमुखचन्द्रचतुरचकोरी ।
रघुकीर्तिवैजयन्ती विनीता हे शुभे
चतुर्वधूसु सुभगतमा सीता हे शुभे।।४।।
शिविकामारूढा भाति वर्णिनी नवोढा
वीर्यशुल्का राघवेण नित्यश्रीरिवोढा।
सुरनरगीर्भ्यां कविगिरिधरगीता हे शुभे
चतुर्वधूसु सुभगतमा सीता हे शुभे।।५।।

**भौमी-** आज अयोध्या परम प्रसन्नता को प्राप्त हो गई है। हे कल्याणी! चारों बहुओं में सीताजी सबसे सुन्दर हैं। हे कल्याणी! क्या विधाता ने छवि से ही इस महिला की रचना की है? बादल के साथ बिजुली की भाँति श्रीराम के साथ सीताजी शोभित हो रही हैं। इन्होंने करोड़ों-करोड़ों रतियों को लज्जित कर दिया है। चार बहुओं में सीताजी सबसे रमणीय हैं। हे कल्याणी! चम्पा के समान वर्ण वाली सीताजी दिव्य वस्त्रों और आभूषणों से अलंकृत हैं। ये अशरणों को शरण देने वाली हैं। इनके चरण नवीन कमल के समान हैं। ये शरदकालीन चन्द्र के समान मुखवाली और दिव्य शोभा से सम्पन्न हैं। चारों बहुओं में सीताजी सबसे सुन्दर हैं। हे सखी! नीला वस्त्र धारण करने वाली, समस्त विश्व की वन्दनीया, त्रिलोक की लावण्य लक्ष्मी, निरन्तर निन्दारहित, अत्यन्त विश्वश्त, साकार भारतीय संस्कृति स्वरूपा सीताजी चारों बहुओं में सबसे अधिक आकर्षक हैं। हे सखी! सीताजी अयोनिजा अर्थात् स्वयं पृथ्वी से प्रकट होकर भी महाराज जनक की राजपुत्री हैं। ये श्रीरामचन्द्र मुखचन्द्र की चतुर चकोरी हैं। ये रघुवंश की कीर्तिपताका अत्यन्त विनीत सीताजी चारों बहुओं में सबसे अधिक मनोहरा हैं। ये नवविवाहिता सुन्दर दुलहिन लक्ष्मी की भाँति श्रीराम द्वारा पराक्रम शुल्क से विवाह करके लाई हुई, कवि **गिरिधर** के द्वारा देवभाषा संस्कृत और नरभाषा हिन्दी में गाई हुई सीताजी नित्य साकेतविहारिणी होकर भी सम्प्रति चारों बहुओं में सर्वाधिक सुन्दरी हैं।

## गीत संख्या-९

**निमिराजतनया जनकराजतनया भाति सीता सुखं राति सीता।।**
**श्रीमिथिलाधीशकिशोरी रामचन्द्रमुखचन्दिरचकोरी।**
**विबुधवधूभाविता सखीसहजसेविता भाति सीता सुखं राति सीता।।१।।**
**देहविभाविजितश्वेतवनजशोभा मानवेन्द्रसूनुमनोमहितलोभा।**
**रामभद्रभामिनी मत्तगजगामिनी भाति सुखं राति सीता।।२।।**
**मण्डयन्ती भूरिभागामयोध्यां रञ्जयन्ती रुचिररुचावेदबोध्याम्।**
**रामवरवर्णिनी स्वपतिगुणकर्णिनी भाति सुखं राति सीता।।३।।**
**शिवाशिवाशिवा शिविकामारूढा प्राणवल्लभेन सहिता नवोढा।**
**गिरिधरस्य स्वामिनी कान्तिसौदामिनी भाति सुखं राति सीता।।४।।**

**भौमी-** निमिवंश की राजकन्या जनकमहाराज की पुत्री सीताजी सुशोभित हो रही हैं, सबको आनन्द दे रही हैं। मिथिलाधिराज जनकजी की किशोरी श्रीरामचन्द्र के मुखचन्द्र की चकोरी देववधुओं से सम्मानित, सखियों द्वारा स्वभाव से सेवित सीताजी सुशोभित होती हुई सबको सुख दे रही हैं। अपने शरीर की कान्ति से श्वेतकमल की शोभा को जीतने वाली महाराज दशरथ के ज्येष्ठपुत्र श्रीराम के मन के पूजनीय लोभ की आश्रय स्वरूप भगवान रामभद्र की धर्मपत्नी, मत्त गजगामिनी सीताजी शोभित होती हुई, सबको आनन्द दे रही हैं। भूरि भाग्यशालिनी, वेदों में प्रसिद्ध श्रीअयोध्या को अपनी सुन्दरकान्ति से शोभित तथा आह्लादित करती हुई श्रीराम की नवीन दुल्हन अपने पति रघुनाथजी के गुणों का निरन्तर श्रवण करने वाली सीताजी सुशोभित होती हुई सबको परमानन्द दे रहीं हैं। अपने प्राण प्रियतम श्रीराम के साथ पालकी में विराजमान नवविवाहिता **गिरिधर** कवि की स्वामिनी शोभामयी विद्युत स्वरूप पार्वती की भी पार्वती अर्थात् कल्याणदायिनी सीताजी सुशोभित हो रही हैं और सभी को आनन्द दे रही हैं।

## सन्दर्भश्लोकः

**विश्वे वीक्ष्य वधूं विज्ञा विश्वविश्वविमोहिनीम्।**
**सीतां स्वागतसद्वाक्यैर्मानयन्तो मुदा जगुः।।१।।**

**भौमी-** सभी विज्ञजन सम्पूर्ण संसार को मोहित करने वाली बड़ी बहूरानी सीताजी को देखकर स्वागत वाक्यों से उनका सम्मान करते हुए इस प्रकार गाने लगे।

## गीत संख्या-१०

**पुरमेहि सुखं सीते स्वागतमिह ते कुर्मः।**
**प्रणिधेहि सुखं सीते स्वागतमिह ते तन्मः।।**
**तव पदपङ्कजरजसा पूयेत सदायोध्या।**
**शतशतशम्पा महसा स्तूयेत मुदायोध्या।।**
**पुरमेहि परमप्रीते स्वागतमिह ते कुर्मः।।१।।**
**हरिहृद्गृहदीपशिखे सम्भासय नृपसदनम्।**
**हृत्पुरितपुरारिसखे सुविलासय विधुवदनम्।।**
**पुरमेहि पुरटपीते स्वागतमिह ते कुर्मः।।२।।**
**दुर्गादर्शादर्शं दूरिता दुरीक्षा नः।**
**पद्मास्पर्शास्पर्शं पूरिता प्रतीक्षा नः।।**
**पुरमेहि निगमनीते स्वागतमिह ते कुर्मः।।३।।**
**श्रीरामपरा प्रेमा अनपायिनिभक्तिस्त्वम्।**
**संसृतियोगक्षेमा रघुवरपरशक्तिस्त्वम्।।**
**पुरमेहि हरिणिह्रीते स्वागतमिह ते कुर्मः।।४।।**
**रघुचन्द्रसुधाधाम्नो मुखचन्द्रचकोरी त्वम्।**

**गिरिधरप्रभुसुखसीम्नो गृहिणी सुकिशोरी त्वम्।।**
**पुरमेहि गिरिरागीते स्वागतमिह ते कुर्मः।।५।।**

**भौमी-** हे सीते! आप सुखपूर्वक अयोध्या पधारें। हम आपका स्वागत करते हैं। हे सीते! आप अयोध्यापुर में सुख की स्थापना करें, हम आपके स्वागत का विस्तार करते हैं। आपके चरणकमल की धूलि से अयोध्या सदैव पवित्र बने और सैकड़ों बिजलियों के समान आपके तेज से श्रीअयोध्या की सदैव स्तुति हो। हे परमप्रसन्न सीते! आप अयोध्या में पधारें, हम यहाँ आपका स्वागत करते हैं। हे श्रीहरि के हृदयभवन की दीपशिखे! आप राजगृह को प्रकाशित कीजिए। हे शंकरजी के सखा श्रीराम को अपने हृदयपुर में निवास कराने वाली सीताजी! चन्द्रमुख श्रीराम को सुशोभित कीजिए। स्वर्ण के समान पीलेवर्ण वाली सीते! आप अयोध्या में पधारें, हम यहाँ आपका स्वागत करते हैं। दुर्गाजी के लिये भी अदृश्य आप श्री के दर्शन करके हमारी संसार दर्शन की वासना दूर हो गई। लक्ष्मी भी जिनका स्पर्श नहीं कर सकतीं ऐसी आपश्री के चरण का स्पर्श करके हमारी प्रतीक्षा पूर्ण हो गई। हे वैदिक मंत्रों में विराजमान सीते! आप अयोध्यानगर में पधारें, हम आपका यहाँ स्वागत करते हैं। आप श्रीरामपरायण और अनपायनी प्रेमाभक्ति हैं। आपही संसार का योगक्षेम करने वाली हैं तथा आप ही रघुवर श्रीराम की पराशक्ति हैं। अपने नेत्रों से हरिणी को भी लजाने वाली सीते आप अयोध्यानगर में पधारें, हम आपका स्वागत करते हैं। आप श्रीरामरूप चंद्रमा के मुखचंद्र की चकोरी हैं और आपही सुख की सीमा **गिरिधर** कवि के स्वामी श्रीराम की गृहलक्ष्मी जनककिशोरी हैं। हे शिवजी द्वारा गायी हुई सीताजी! आप श्रीअवधपुर पधारें, हम आपका स्वागत करते हैं।

## गीत संख्या-११

**अद्यायोध्यां समुपेता सीता भाति जानकी**
**शोभां लाति जानकी लोकान् पाति जानकी।।**
**कोटिकञ्जसमसमरुणचरणा**
**अशरणशरणविनतभयहरणा ।**
**दिव्यसद्गुणैः परीता सीता भाति जानकी**
**शोभां लाति जानकी लोकान् पाति जानकी।।१।।**
**स्फुरन्नीलशाटी चारुस्वर्णमणिरशना**
**दामिनीदाडिमीबीजराजिद्युतिदशना ।**
**कम्रकरुणानिकेतप्रीता भाति जानकी**
**शोभां लाति जानकी लोकान् पाति जानकी।।२।।**
**मिथिलाधिराजकीर्तिमालाश्रीकिशोरी**
**रामचन्द्र मुखचन्द्रचतुरचकोरी।**
**शोभितसाकेतनिकेता सीता भाति जानकी**
**शोभां लाति जानकी लोकान् पाति जानकी ।।३।।**
**श्यामसरसीरुहाक्षी श्यामा रामरामा**

गिरिधरस्वामिनी विजितकामवामा।
श्रीमद्राघवसमेता सीता भाति जानकी
शोभां लाति जानकी लोकान् पाति जानकी।।४।।

**भौमी-** आज अयोध्या में पधारी हुईं सीताजी देदीप्यमान हो रही हैं। वे अपूर्व शोभा प्रस्तुत कर रहीं और सम्पूर्ण लोकों की रक्षा कर रही हैं। करोड़ों कमलों के समान लालचरण वाली अशरणों को शरण देने वाली तथा प्रणतों का भय हरण करने वाली, दिव्य सद्गुणों से युक्त सीताजी सुशोभित हो रही हैं। चमकती हुई नीली साड़ी धारण करने वाली मणि जटित किंकिणी धारण की हुई, अनार के समान दाँत वाली सुन्दर करुणानिकेत श्रीराम को प्रसन्न करने वाली सीताजी सुशोभित हो रही हैं। जनकराज की कीर्ति की पताका श्रीरामचन्द्र के मुखचन्द्र की चतुर चकोरी, साकेतलोक को सुशोभित करने वाली सीताजी सुशोभित हो रही हैं। नीलेकमल के समान नेत्रवाली मुग्धानायिका, श्रीराम को रमाने वाली **गिरिधर** कवि की स्वामिनी रति को जीतने वाली श्रीराघव के सहित सीताजी सुशोभित हो रही हैं और सारे संसार की रक्षा कर रही हैं।

## गीत संख्या-१२

सखि हे जानकीमभिपश्य।।
कलितललनाललितवेषां
महाछविं प्रपश्य सखि हे जानकीमभिपश्य।।१।।
सकलसौभगसाररचितां
मूर्तिमिमां व्यवस्य।
अध्यवस्यामुं निरुपमां
निमिषमहो निरस्य सखि हे जानकीमभिपश्य।।२।।
दृगपि नो तर्षं विमुञ्चति
मुहुरिमां सन्दृश्य।
समसुखंसङ्कुचति सर-
सरसीरुहं संस्पृश्य सखि हे जानकीमभिपश्य।।३।।
जानकीशुभचरितसूत्रै
र्भणितिसुपटीं सीव्य।
रामरमणीं गाय गिरिधर-
गिरा दिव्यां दीव्य सखि हे जानकीमभिपश्य।।४।।

**भौमी-** अब अयोध्या की सखी रूपक ताल में गा रही हैं–हे सखी! जानकीजी को सामने से देखो। सुन्दर महिला के वेश में विराजमान महाछवि को आदर बुद्धि से निहारो। हे सखी! इस मूर्ति को तुम सम्पूर्ण सुन्दरता के तत्व से ही रचित समझो। इनको उपमारहित मानों और पलकों का गिराना बन्द कर दो। सखी! इनको देखकर भी नेत्र अपनी प्यास नहीं छोड़ रहे हैं। समान आनन्द होने के कारण इनको स्पर्श करके कमल

भी संकुचित हो रहा है। सीताजी के सुन्दर चरित्र रूपी तागों से अपनी भणिति अर्थात् कविता रूपसुन्दर वस्त्र को गूँथ लो और **गिरिधर** कवि की वाणी से श्रीराम की रमणी सीताजी को गाओ तथा दिव्य जनकनन्दिनीजी की स्तुति करो।

**विशेष-** यह गीत रूपकताल में निबद्ध है इसे आसावरी, जौनपुरी इत्यादि रागों में गाया जा सकता है।

## सन्दर्भश्लोकः

**इयं किं वा विद्युन्नहि नहि चला सेयमचला**
**शशि ज्योत्स्ना किं वा नहि लसदघा सेयमनघा।**
**रमा किं नो सिन्धोरलभतजनिं सेयमजनि-**
**र्ध्रुवं सीता सीता भरतजनुषा सेत्यनुमिता।।१।।**

**भौमी-** कैकेयी जी ने प्रथम बार जब सीताजी को देखा तब उनके मन में सीताजी के समानान्तर अनेक-अनेक बिम्ब उपस्थित होने लगे। अरे! ये विद्युत हैं क्या? नहीं-नहीं बिजली चंचल होती है जबकि ये निश्चल और स्थिर हैं। तो क्या ये चन्द्रमा की ज्योत्स्ना हैं? नहीं! चन्द्रमा की ज्योत्स्ना में पाप और कलंक है जबकि ये दूल्हन तो पाप और कलंक से सर्वथा दूर हैं। तो क्या ये लक्ष्मी हैं? नहीं, वह लक्ष्मी तो समुद्र से जन्मीं जबकि ये तो अयोनिजा है, इन्होंने कहीं से जन्म नहीं लिया निश्चय ही सीताजी तो सीताजी ही हैं। इस प्रकार श्री भरत की माँ कैकेयी जी ने अपने ही द्वारा उठाये हुये पक्षों को अपने ही तर्कों से काटकर निर्णय कर लिया।

## गीत संख्या-१३

**कैकयी दृशि निमिषं नो लाति।।**
**पश्यन्ती पार्थिवीं पुलकिता प्रेम मनसि नो माति।।१।।**
**आरार्तिक्यकलितकरकमला निस्पन्दं न जहाति।।२।।**
**पनसायितपल्लवितशरीरा दारुवधूरिव भाति।।३।।**
**दर्शं दर्शं रूपमाधुरीं मोदमनुपमं याति।।४।।**
**स्रंशमानमञ्चलं न वोढुं सालं स्त्रजं न पाति।।५।।**
**आलिभिरभिहितापि हृतचेता-श्चिरं विधिं विदधाति।।६।।**
**गिरिधरेश्वरीदीपशिखादृङ्-मृगी मृगीदृग् भाति।।७।।**

**भौमी-** कैकेयीजी अपने नेत्र में पलक नहीं लगा रही हैं। पृथ्वीपुत्री सीताजी को निहारती हुई मझली माँ रोमांचित हो रही हैं। उनके मन में प्रेम नहीं समा रहा है। उनके कमल-कर में आरती है, परन्तु कैकेयीजी स्थिरता को नहीं छोड़ पा रही हैं अर्थात् आरती नहीं घुमा रही हैं। उनका शरीर कटहल और पल्लव के समान हो गया है। आशय यह है कि जैसे कटहल के फल में खड़े-खड़े काँटे दिखते हैं उसी प्रकार कैकेयीजी के शरीर में रोंगटे खड़े हो गये हैं और उनका शरीर पल्लव की भाँति काँप रहा है। वे कठपुतली की भाँति स्थिर हो गई हैं। सीताजी की रूपमाधुरी को देख-देखकर कैकेयी अनुपम प्रसन्नता को प्राप्त कर रही हैं। वे खिसकते हुये आँचल को भी नहीं सम्हाल पा रही हैं और अपनी माला भी नहीं बचा पा रही हैं। सखियों के द्वारा संकेत किये

जाने पर बहुत देर तक आरती करती जा रही हैं। मृगनयनी  कैकेयीजी **गिरिधर** कवि की ईश्वरी सीताजी रूप दीपशिखा के समक्ष मृगी जैसी हक्की-बक्की हो गई हैं।

## गीत संख्या-१४

**कैकयी गायति-**

**सुस्वागतं ते नमस्ते अयोध्यापुरीमागच्छ सीते।।**
**श्रीनिमिवंशजवैजयन्तिके विद्याविनयविनीते।**
**अयोध्यापुरीमागच्छ  सीते।।१।।**
**रुचिरमिहिरकुलकैरवकौमुदि शुभगुणचरितपरीते।**
**अयोध्यापुरीमागच्छ  सीते।।२।।**
**रामसवनघनसुचतुरचातकि पतिदेवते प्रतीते।**
**अयोध्यापुरीमागच्छ  सीते।।३।।**
**स्वश्रूशस्यकमनकादम्बिनि, मृदुताजितनवनीते।**
**अयोध्यापुरीमागच्छ  सीते।।४।।**
**आचार्ये सज्जनसञ्जीवनि, गिरिधरगीतसुगीते।**
**अयोध्यापुरीमागच्छ  सीते।।५।।**

**भौमी-** कैकेयीजी गा रही हैं- आपका स्वागत है। हे सीते! सभी अयोध्यावासियों का आपको नमन है। आप अयोध्यापुरी में पधारें। निमिकुल की वैजयन्ती, विद्या और विशिष्ट नीति से विनम्र, सुन्दर सूर्यकुलरूप कुमुद के लिये चन्द्रिका स्वरूपा, कल्याणमय गुणों और चरित्रों से युक्त सीते! आपका सुस्वागत है। श्रीरामरूप सजल स्वाती मेघ की चातकी, विश्वस्त पतिव्रता, सासूजनरूप सुन्दर खेती के लिए मेघमाला स्वरूपा, कोमलता से मक्खन को जीतने वाली, जगत की आचार्या, वैष्णवों की संजीवनी और **गिरिधर** कवि के द्वारा जिनके लिए सुन्दर गीत  गाये गये हैं, ऐसी हे सीताजी! आपका सुस्वागत है। आपश्री अवधपुर में पधारें।

## गीत संख्या-१५

**अद्य सर्वैरायोध्यकैर्देवी सीता  दृश्यताम्।**
**इमां दर्शं दर्शं  तर्षं  मनः  कर्ष्यं कृश्यताम्।।**
**चम्पककनकवर्णा  बालावरवर्णिनी**
**गतिजितललितमराली  शुभकर्णिनी।**
**अद्य  सोपनेत्रनेत्रैः  सुपुनीता दृश्यताम्।।१।।**
**यावककलितकमलकलचरणा**
**अशरणशरणा  लसितशुभाभरणा।**
**अद्य  विद्याव्रतविनयविनीता  दृश्यताम्।।२।।**

चित्रितमिहिरशिशुवासा मञ्जुमालिनी
विधुमुखी शशिसौम्यहासा शोभाशालिनी।
अद्य विविधविभूषणैः परीता दृश्यताम्।।३।।
सुभगा सौभाग्यवती जनककिशोरिका
रामचन्द्रमुखचन्द्रचतुरचकोरिका ।
अद्य श्रुतितती कविगिरिधरगीता दृश्यताम्।।४।।

**भौमी-** आज सभी अयोध्यावासी देवी सीताजी के दर्शन करें, इन्हें देखकर नेत्रों की प्यास और मन की दुर्बलता मिटा दें। चम्पा और स्वर्ण के समान शरीर वाली सुन्दर दुल्हन, मुग्धा नायिका, गति के द्वारा राजहंसिनी को जीतने वाली शुभ श्रीरामनाम को ही सुनने वाली, ऐसी परम पवित्र सीताजी को स्नेह का चश्मा लगाये हुये नेत्रों से देखिये। जिनके कमलचरण में महावर लगा है जो अशरणों को शरण प्रदान करती हैं तथा सुन्दर आभूषण भी जिनसे सुशोभित होते हैं ऐसी विद्या और विनय से विनम्र सीताजी के आज दर्शन कीजिए। रंग-बिरंगें बाल-सूर्य जैसा वस्त्र धारण की हुई, सुन्दरमाला से विभूषित, चंद्रमुखी, चंद्रकिरण के समान सौम्य-हास वाली अनेक आभूषणों से अलंकृत भगवती सीताजी के दर्शन कीजिए। सुन्दरी, सौभाग्यवती जनककिशोरी, श्रीरामचंद्र के मुखचन्द्र की चतुर चकोरी वेद ऋचाओं और गिरिधर कवि के द्वारा गाई गई सीताजी के आज दर्शन कीजिए।

## सन्दर्भश्लोकः

अथावतीर्णा शिविकात ईड्या सखीजनालम्बितपाणिपद्मा।
मन्ये नभस्तः किलतारिकाभिश्चाकाश्यमाना चपला चकास्ति।।१।।

**भौमी-** इसके पश्चात् सखीजनों का करकमल से अवलम्बन करके सीताजी पालकी से नीचे उतरीं। मुझे लगता है कि तारागणों से सुशोभित हुई महाविद्युत ही आकाश से उतरकर पृथ्वी पर सुशोभित हो रही है।

## गीत संख्या-१६

पश्यत पश्यत सख्यो जनककिशोरी सीता
शिबिकारूढा नवोढा भाति हे।
सखीभिर्निदिष्टा हृष्टा समवतीर्णा प्रवीणा
भूमौ शनैश्चरणं दधाति हे।।१।।
भौमीभूमिमभिपादपङ्कजं दधाना शनैः
बर्हा वरार्हा नवा भाति हे।
पुत्री निजमातुः किमु हृदयजलजमभि-
विष्टरायमाणं विदधाति हे।।२।।
पीतवसनाञ्चलावगुण्ठितमुखाम्बुरुहा

सुमुखि कामाऽभिख्यां लाति हे।
शङ्के चारुचपला मिहिरशिशुकरकरै-
रावृण्वाना शशिनं विभाति हे।।३।।
सखिभिः समनुगता राघवेण समन्विता
भूषणपरीता प्रतिभाति हे।
मन्ये मानवती विभुः विधुनानुनीता प्रीता
रोहिणीव सुषमा दधाति हे।।४।।
उर्मिलामाण्डवीश्रुतकीर्तिभिः समीहमाना
मानमदपादपं लुनाति हे।
तिसृभिरवस्थाभिश्च तुरीया गिरिधराय
रामभद्रपादरतिं राति हे।।५।।

**भौमी-** हे सखियों! देखो! देखो! नवविवाहिता जनकनंदिनी सीताजी पालकी पर आरूढ़ होकर बहुत सुन्दर लग रही हैं। सखियों के द्वारा निर्दिष्ट प्रसन्न सीताजी पृथ्वी पर धीरे-धीरे पग रख रही हैं। पृथ्वीपुत्री सीताजी पृथ्वी पर चरणकमल रखती हुई सुन्दर वर के योग्य श्रेष्ठ मयूरिणी-जैसी लग रही हैं। क्या पुत्री अपनी माता के हृदयकमल को अपने चरण का आसन बना रही है? सीताजी पीली साड़ी के आँचल से अपना मुख ढँककर किसी अपूर्व शोभा को प्रकट कर रही हैं। मुझे लगता है कि सुन्दर बिजली ही बालसूर्य की किरणों से चंद्रमा को ढँककर सुशोभित हो रही है। सखियों से घिरी हुई श्रीराघव के समेत आभूषणों से सजी हुई सीताजी बहुत सुन्दर लग रही हैं। मुझे लगता है कि मानिनी रूठी हुई रोहिणी चन्द्रमा के द्वारा मनाये जाने पर प्रसन्न हुई सुशोभित हो रही है। उर्मिला, माण्डवी और श्रुतिकीर्ति के साथ सुन्दर चेष्टा करती हुई सीताजी अभिमान और मद के वृक्ष को काट रही हैं। ऐसा लगता है कि जाग्रत, स्वप्न, सुषुप्ति इन तीनों अवस्थाओं के साथ तुरीयावस्था ही **गिरिधर** कवि को श्रीराम के चरणकमल की भक्ति ही प्रदान कर रही है।

## गीत संख्या-१७

पश्यत पश्यत सख्यो रामं रमणीयं हे।
सीतयानुगम्यमानं कामकमनीयं हे।।१।।
सान्द्रानन्दकन्दकञ्जश्यामलशरीरं हे।
चरणसरोजभृङ्गयोगिमुनिधीरं हे।।२।।
कटिपीतपटतूणकरशरचापं हे।
वक्षोवैजयन्तीमालं हृतजनतापं हे।।३।।
दाडिमदशनशुचिशरदिन्दुवक्त्रं हे।
कमलकपोलनेत्रं मैथिलीकलत्रं हे।।४।।
कुण्डलकनत्कपोलं वैवाहिकवेशं हे।

तिलककलितभालं मधुकरकेशं हे।।५।।
सीतामुखचन्द्रचारुचतुरचकोरं हे।
विश्वविलोचनचोरं कोसलकिशोरं हे ।।६।।
वधूक्षिप्तपिष्टगुटिका परितश्चिन्वानं हे।
कविगिरिधरहृदि प्रीतिमातन्वानं हे।।७।।

**भौमी-** हे सखी! सीताजी के द्वारा अनुगम्यमान, कोटिकाम कमनीय, रमणीय श्रीराम को देखो। घनीभूत आनन्द के बादल एवं नीलेकमल के समान श्यामल शरीर वाले और जिनके चरणकमल के योगीमुनि और धीरजन भ्रमर बन गये हैं। कटि में निषंग, हाथ में धनुषबाण धारण किये हुये, वक्षस्थल पर वैजयन्तीमाला पहने हुये, भक्तों के ताप नष्ट करने वाले श्रीराम को देखो। अनार के समान दन्तावली शरद् चन्द्रमा के समान मुख और सुन्दर कपोल एवं नेत्र वाले सीतापति श्रीराम को देखो। कुण्डल से सुन्दर कपोल, वैवाहिक वेश और तिलक से युक्त मस्तक तथा भ्रमर के समान केश, सीता मुखचन्द्र के चतुर चकोर, विश्व के नेत्रों को चुराने वाले कोसलराजकिशोर श्रीराम को देखो। सीताजी के द्वारा फेंकी जाती हुई आटा की गोलियों को चारों ओर दौड़-दौड़ के उठाते हुए और गिरिधर कवि के हृदय में प्रेम का विस्तार करते हुए श्रीराम को देखो।

## सन्दर्भश्लोकः

**अथावरुन्धे स्म महर्षिमान्यां मनस्विनीं मान्यमहीसुतां ताम्।**
**अरुन्धतीरुद्धदृगश्रुविन्दुर्मुदावतर्तुं शिविकात ईड्याम्।।१।।**

**भौमी-** इसके पश्चात् नेत्रों में उमड़ते हुये आँसुओं के बिन्दुओं को रोककर अरुन्धतीजी ने महर्षियों द्वारा सम्मानित सबके लिए स्तुतियोग्य मनस्विनी माननीय पृथ्वीपुत्री सीताजी से पालकी से उतरने का अनुरोध किया।

## गीत संख्या-१८

अवतरतु सुखं सीता साकेतपुरद्वारम्।
अनुसरतु सुखं सीता रघुचन्द्रं सुकुमारम्।।
व्रीडयतु युगलकान्तिर्घनचलितचलाशोभाम्।
क्रीडयतु गतभ्रान्तिर्भक्तिं मुनिजनलोभाम्।।
परिसरतु सुखं सीता रघुपतिमथसुखसारम्।।१।।
पश्यतु जगतीपश्यो निरुपमं युगलरूपम्।
नश्यतु ममताशस्यो ननु शुष्यतु भवकूपम्।।
संसरतु सुखं सीता रामं जितशतमारम्।।२।।
अनुभवतु रसारस्यं तव कमलपदस्पर्शम्।
परिभवतु वशावश्यं मदमोहमहोत्कर्षम्।।
परिहरतु सुखं सीता लज्जाजनितोद्गारम्।।३।।

**भवती रघुकुलकेतोर्भुजवरशुल्का जाया।**
**भवती वैदिकसेतोर्भार्या मायामाया।।**
**अपहरतु सुखं सीता कविगिरिधरभवभारम्।।४।।**

**भौमी-** हे सीताजी! अब आप सुखपूर्वक श्रीअयोध्या के सिंहद्वार पर पालकी से उतरें और सुकुमार श्रीरामजी का अनुसरण करती हुई उनके पीछे-पीछे राजभवन में पधारें। युगल सरकार की कान्ति, बादल से मण्डित, बिजली की शोभा को लज्जित करें और भ्रान्तिरहित होकर मुनियों के मन को लुभाने वाली भक्ति को क्रीड़ा की अनुमति दें और आप श्रीसीताजी सम्पूर्ण सुखों के तत्वभूत श्रीराम का परिशरण करें। इस संसार में जन्म लेने वाला जीव उपमारहित युगलरूप के दर्शन करे। ममता की खेती नष्ट हो और संसार का कूप सूख जाय। और अनेक कामदेवों को जीतने वाले श्रीराम का आपश्री सीताजी सुखपूर्वक संसरण करें अर्थात् सुखपूर्वक प्रभु का सामीप्य लाभ करें। भगवती पृथ्वी आपके रसीले चरणकमल के स्पर्श का अनुभव करें और चर्बी के वशीभूत मदमोह के उत्कर्ष को आप समाप्त कर दें। हे सीताजी! आपश्री लज्जा का उद्‌गार छोड़ दें। आप सूर्यकुल के केतु श्रीराम की पराक्रम शुल्क से जीती हुई पत्नी हैं। आप सनातन धर्म के सेतु श्रीराम की धर्मपत्नी और माया की भी माया हैं। आपश्री सीताजी **गिरिधर** कवि के भवभार को दूर करें।

## सन्दर्भश्लोकौ

**अथ सखीजनसंस्तुतसंस्तवां सततजापचलाधरपल्लवाम्।**
**नयननिर्गतवारि न रुन्धतीं जनकजाप्यनमस्यदरुन्धतीम्।।१।।**
**तां वन्दमानां रघुचन्द्रचन्द्रचकोरकाक्षीं सरसीरुहाक्षीम्।**
**अरुन्धती दिव्यगुणाशिषाभिः सम्मण्डयन्ती समगायदेतत्।।२।।**

**भौमी-** इसके अनन्तर सखियों द्वारा स्तुति के शब्दों में जिनका परिचय दिया गया है, सतत् श्रीराम-नाम जप से जिनका पल्लव जैसा अधर हिल रहा है ऐसी सीताजी के दर्शनों से उमड़े हुये प्रेमाश्रुओं को जो नहीं रोक पा रही हैं उन देवी अरुन्धतीजी को नववधू जनकतनया सीताजी ने भी प्रणाम किया। जिनके नेत्र रघुकुल के चन्द्रमा श्रीरामचन्द्र के मुखचन्द्र के चकोर बन गये हैं, उन कमलनयनी एवं स्वयं को प्रणाम कर रही जनकनंदिनीजी को अपनी दिव्य आशिषाओं से संयुक्त करती हुई गुरुमाता अरुन्धतीजी इस प्रकार गाने लगीं।

## गीत संख्या-१९

**ब्रूते स्वाशिषस्ते मातारुन्धती त्वमेधि सौभाग्यवती।।**
**भूयाद् गङ्गायमुनाधारासमं सौभगम्।**
**तावकीनमखण्डं लसत्षड्भगम्।।**
**ब्रूते स्वाशिषस्ते देवि पार्वती त्वमेधि सौभाग्यवती।।१।।**
**भूया भव्या सुनव्या सदा शोभना।**
**नित्ययौवना रघूत्तममनोलोभना।।**
**ब्रूते स्वाशिषस्ते सैन्धवी सती त्वमेधि सौभाग्यवती।।२।।**

**कलरवकलरवरसालनवरसालभवप्रवाल-**
**रसपरङ्गरसदनङ्गमनोभवदधीरे ।।३।।**
**नन्दनवनपारिजातचारिवातवारिजात-**
**व्रततिवृन्दवलितललितबकुलकुलकुटीरे ।।४।।**
**दशरथसुकृताब्धिचन्द्रो रुचिसमुद्रो रामचन्द्रो**
**मुखरितगिरिधरमरालनवलकेकिकीरे ।।५।।**

**भौमी-** पृथ्वीपुत्री सीताजी के साथ श्रीहरि भगवान राम सरयू तट पर विहार कर रहे हैं। सुन्दर भ्रमर गुंजार से युक्त, कटहल, श्रेष्ठ ढाक (टेसू) जैसे वृक्षों से सुशोभित सुन्दर छोटे-छोटे झुरमुटों से घिरे हुये, अमृत जैसे स्वादयुक्त जल से समन्वित श्रीसरयू तट पर श्रीहरि विहार कर रहे हैं। खिले और खिलते हुये कमलों से युक्त, मधुर मकरंद से भ्रमरों को मदयुक्त करने वाले मन्द-मन्द चल रहे मतवाले मलयानिल से शीतल समीरण वाले सरयू तट पर श्रीहरि विहार कर रहे हैं। सुन्दर स्वर वाली कोकिलाओं से युक्त आम के नये-नये पल्लवों से सुशोभित, शृंगार रस की रंगभूमि स्वरूप, दिव्य स्मरणात्मक काम को रसिक करने वाले और एक दूसरे से मिलने के लिए युगल सरकार के मन को भी व्याकुल कर देने वाले सरयू तट पर श्रीराम विहार कर रहे हैं। नन्दनवन के कमल, वायु के संचरण स्थल, कल्पवृक्ष पारिजात की, लताओं के समूह से आलिंगित और बकुल जैसे श्वेतवृक्षों से युक्त सुरम्य कुटीरों वाले सरयू तट पर श्रीराम विहार कर रहे हैं। जहाँ **गिरिधर** कवि राजहंस, नवीनमयूर और तोते मुखरित हो रहे हैं ऐसे श्रीसरयू तट पर दशरथजी के पुण्य, क्षीरसागर के चन्द्रमा, शोभा के महासागर, श्रीहरि भगवान रामचन्द्र, भूमिनन्दिनी सीताजी के साथ विहार कर रहे हैं।

**विशेष-** यह गीत एक ताल-१२ मात्रा के मध्य लय में निबद्ध है। इसे 'शंकरा' राग में गाना चाहिए।

## गीत संख्या-११

**विलसति शुचि सरयूतटे नवनिकुञ्जे रामः।।**
**वामभागकृतविभागभूरिभागकलितराग ।**
**शरदुडुपतिवदनवधूजितशतरतिकामः ।।१।।**
**सुविनतवनिताविनीतो विभूषणवसनपरीतो।**
**नखशिखशोभाप्रणीतो नीतलघुललामः।।२।।**
**सीताबाहुकलितकण्ठो विगतकुण्ठः कम्बुकण्ठ-**
**श्चारुचलाचलाधनुर्घनो यथा श्यामः।।३।।**
**कोटिमन्मथाभिरामः सदावाप्तसर्वकामः।**
**विगतशोकमनुजलोकलोचनाभिरामः ।।४।।**
**कामवैरिमनो रामो मैथिलीमनोऽभिरामो**
**रामोऽवतु सतः सुकविगिरिधरप्रणामः।।५।।**

**भौमी-** पवित्र सरयू तट पर वर्तमान नवीन निभृत निकुंज में भगवान राम सुशोभित हो रहे हैं। प्रभु के

वामभाग में सुन्दर अवयवों वाली बड़भागिनी, प्रभु पर रागानुगा-भक्ति करने वाली, शरदचन्द्र- वदनी, नववधू सीताजी विराज रही हैं। इस युगल माधुरी से रति सहित करोड़ों कामों को जीतने वाले प्रभु निकुंज में सुशोभित हैं। अत्यन्त विनम्र, अनुरागवती पत्नी से युक्त, अलंकार और वस्त्रों से घिरे हुये, नख से शिखापर्यन्त शोभामय रत्नों को भी हल्का बनाने वाले श्रीराम नव-निकुंज में सुशोभित हैं। सीताजी की बाहुलता से जिनका कंठ सुशोभित है, जो कुंठा से रहित और शंख जैसे कंठ वाले हैं, ऐसे प्रभु बिजली और इन्द्रधनुष से युक्त नीले मेघ के समान नव निकुन्ज में सुशोभित हैं। करोड़ों कामदेवों के समान सुन्दर, सदा समस्त कामनाओं को प्राप्त किये हुये मनुष्य लोक के नेत्रों को आनन्द देने वाले शोकरहित श्रीराम नव-निकुंज में शोभा पा रहे हैं। कामशत्रु शंकरजी के मन को रमाने वाले, मैथिलीजी के हृदय को आनन्द देने वाले, कविश्रेष्ठ **गिरिधर** के प्रणाम के आश्रय श्रीराम सन्तों की रक्षा करें।

**विशेष-** इस गीत की चलन पूर्व के गीत की भाँति है।

## गीत संख्या-१२

**वसति वसन्ते मदिरदिगन्ते विहरति अवधविहारी।**
**सीतावदनवनजचुम्बनचणभ्रमराधर इहहारी।।**
**विलसति सरयूतटे श्रीरामः।**
**जनकसुताशम्पासमलङ्कृतसुखजलधरोऽभिरामः ।।१।।**
**पनसपलाशबकुलकुलकुटजकदम्बप्रियालरसाले ।**
**प्रसृमरमिहिररुचिरप्रवालनवसौरभतरुणतमाले ।।२।।**
**सरसरसरतिमरुतिमलयाञ्चति चलति चलदलेऽधीरे।**
**पतति पतत्रिपपत्रप्रतिमे पल्लवकुसुमकुटीरे।।३।।**
**अङ्कमनङ्कममूं मदिराक्षीं समधिरोप्य रघुवीरः।**
**रचयति रुचिरमुरोरुहयुगले पाटीरं रसधीरः।।४।।**
**क्षणमथ पश्यति वनिताननवनरुहमुज्झन्स्वनिमेषम्।**
**कलितसमाधिरनाधिरसंवृतनयनयुगं प्रोन्मेषम्।।५।।**
**प्रथमसमागम आगतया लज्जया किमपि नमितांसाम्।**
**उत्तम्भयन्स्तम्भयन् दयितां कलितकपोलोत्तंसाम्।।६।।**
**अवगुण्ठयन् लुण्ठयन् ब्रीडां विरचितविविधविनोदम्।**
**कविगिरिधरगिरमलममलयति कलयति कमप्यामोदम्।।७।।**

**भौमी-** सम्पूर्ण दिगन्त को भावोन्मत्त करने वाले वसन्त के प्रकृति में निवास करते समय अर्थात् वसन्त ऋतु में सीताजी के मुखकमल के चुम्बन में निपुण भ्रमर जैसे अधर वाले काम के शत्रु शिवजी को भी आकर्षित करने वाले अवधबिहारी भगवान राम विहार कर रहे हैं। सीताजी रूप विद्युत से सुशोभित आनन्द के मेघस्वरूप चराचर को अभीष्ट रमण कराने वाले श्रीराम सरयू तट पर सुशोभित हो रहे हैं। कटहल, टेसू, बकुल समूह, श्रेष्ठ कुटज, कदम्ब, प्रियाल, आम्र के वृक्षों से युक्त, कोमल बाल सूर्य के समान सुन्दर पल्लव

वाले, नवीन सुगन्ध से युक्त नूतन तमाल से समलंकृत सरयू तट पर श्रीराम सुशोभित हो रहे हैं। मलय से सुशोभित वायु के सरसर स्वर के साथ धीरे-धीरे बहते रहने पर एवं धीर पीपल के पत्र-समूह के मलय वायु से हिलते रहने पर तथा गरुड़ देव के झड़ते हुये पंखे के समान पल्लव युक्त पुष्पों के कुटीर में श्रीराम सुशोभित हो रहे हैं। प्रेम से मदिर नत्र वाली सीताजी को निष्कलंक गोद में बिठाकर शृंगार रस में धीर रघुवीर श्रीराम सीताजी के दोनों वक्षों पर चन्दन की पाटीर रचना (चित्रावली) कर रहे हैं। एक क्षण प्रेम की समाधि में आकर परन्तु वासनारहित मन से नेत्रयुगल को खोलकर निर्निमेष होकर प्रभु सीताजी के मुखकमल को बड़ी भावुकता से निहारते हैं। प्रथम मिलन में उपस्थित लज्जा के कारण थोड़ा-सा स्कन्ध झुकायी हुई और कुण्डलों से कपोलों को स्पर्श कराती हुई प्रियतमा सीताजी को प्रेम से उठाकर स्थिर करते हुये श्रीराम सरयू तट पर सुशोभित हो रहे हैं। सीताजी का घूँघट उठाते हुये, उनका संकोच समाप्त करते हुये श्रीराम अनेक विनोद प्रस्तुत कर रहे हैं और एक अनिर्वचनीय रस की सुरभि प्रस्तुत करते हुये **गिरिधर** कवि की वाणी को भी अत्यन्त निर्मल बना रहे हैं।

## गीत संख्या-१३

**विहरति कोसलधाम्नि जनकसुतया रामः।**
**जितशतदिनकरधाम्नि विडम्बितशतकामः।।१।।**
**मलयसुरभिमहमहितसमीरे सततसनाथितसरयूनीरे।**
**कलिमलहरहरिनाम्नि भवितभौमीभामः।।२।।**
**मुखरितमधुकरमधुरकदम्बे कूजितकलकलरवनिकुरम्बे।**
**कलितकनकवरदाम्नि नवलकन्दश्यामः।।३।।**
**विमलगुणान् गायति गान्धर्वे चरणसरोरुहमर्चति शर्वे।**
**रघुवरपुरीललाम्नि दमितभवभयकामः।।४।।**
**दीपितमणिमयमङ्गलदीपे वियति विराजति निशामहीपे।**
**मुखरितगिरिधरसाम्नि वामदृग् वरवामः।।५।।**

**भौमी-** करोड़ों सूर्यों के प्रकाश को जीतने वाले श्री कोसलधाम में कोटि-कोटि कामों को भी परिहास का पात्र बना रहे श्रीराम जनकनंदिनी सीताजी के साथ विहार कर रहे हैं। जहाँ मलय के महोत्सव से सम्मानित हो रहा है, सुगन्धित वायु, जो माता सरयू के जल से निरन्तर सनाथित है, जहाँ कलिमलहारी श्रीसीताराम नाम का संकीर्तन निरन्तर होता रहता है ऐसे श्रीअवधधाम में अपनी प्रियतमा भूमिकन्या सीताजी का सम्मान करते हुये श्रीराम विहार कर रहे हैं। जहाँ भ्रमर समूह मुखरित हो रहा है, जहाँ कोकिलाओं का समूह कुहू-कुहू करके गा रहा है, जहाँ स्वर्णमय बन्दनवार लगे हैं ऐसे श्रीअवधधाम में नवीन मेघश्याम श्रीराम विहार कर रहे हैं। जहाँ गन्धर्वों का समूह प्रभु के विमल गुण-गण गा रहा है, जहाँ स्वयं शिवजी प्रभु के चरणकमल की पूजा कर रहे हैं ऐसी प्रभु की सात पुरियों में रत्नभूत श्रीअयोध्या में भवभय और काम-वासना का दमन करने वाले प्रभु श्रीराम विहार कर रहे हैं। जहाँ मणिमय मंगलदीपक प्रकाशित हो रहे हैं और जहाँ आकाश में विराजमान चन्द्रमा स्वयं प्रान्तर को धवलित कर रहे हैं, जहां **गिरिधर** कवि के सामवेद सिद्धान्तानुकूल गीत मुखरित हो रहे हैं ऐसे श्रीअवधधाम में सुन्दर नेत्रों वाली श्रेष्ठ धर्मपत्नी सीताजी के साथ भगवान राम विहार कर रहे हैं।

**विशेष-** यह गीत बुन्देलखंड की एक लोकधुन के आधार पर निबद्ध है- इसका बोल है- विहरत सीताराम पुलिन वर सरयू के।।

## गीत संख्या-१४

**विलसति रामललाम सरससरयूतीरे**
**मुखरितमुनिमुखसाम सरससरयूतीरे।।**
**कोसलपुरपयोधिसंभूतं कौसल्याशुचिसुक्तिप्रसूतम्।**
**लषदजसुतसूत्राम सरससरयूतीरे।।१।।**
**अनघमनर्घ्यमजननतशीलं मरकतमूज्वलमुत्पलनीलं।**
**जानकीकण्ठसुदाम सरससरयूतीरे।।२।।**
**विरतविमुक्तभजनधनशोभं मनसिजमनसिजरिपुकृतलोभम्।**
**सकलविमलगुणधाम सरससरयूतीरे।।३।।**
**निरुपधिनिरवधिचरितपरीतं श्रुतिकरकविवरगिरिधरगीतम्।**
**सेवकसुरतरुनाम सरससरयूतीरे।।४।।**

**भौमी-** सुन्दर सरयू तट पर श्रीराम रूपरत्न सुशोभित हो रहे हैं। जिन्हें देखकर मुनिजनों के मुख से सामवेद मुखरित हो रहा है। जो अयोध्यारूप क्षीरसागर में प्रकट हुये जिनका कौसल्यारूप पवित्र सुन्दर सीपी में आविर्भाव हुआ जिन्होंने अजनन्दन दशरथ रूप इन्द्र को विश्व में विख्यात कर दिया ऐसे रामरत्न की सरयू तट पर शोभा हो रही है। जो निष्पाप तथा बहुमूल्य हैं, जिन्हें विष्णु भी नमन करते हैं, जो मरकत के समान स्वच्छ और नीले कमल के समान श्याम हैं, जिन्हें जानकीजी ने अपने कण्ठ में हार के समान धारण किया ऐसे श्रीरामरत्न स्निग्ध सरयू तट पर विराज रहे हैं। विरक्त, विमुक्त और भगवद्‌भजन को धन मानने वाले अनुरक्त महानुभावों की जिनसे शोभा है, जिन पर काम और काम के शत्रु शिव इन दोनों का लोभ है, जो सभी निर्मल गुणों के धाम हैं ऐसे श्रीरामरत्न का श्रीसरयू तट पर विलास हो रहा है। निष्कपट निःसीम चरित्र से युक्त वेदमंत्र समूह और कविश्रेष्ठ **गिरिधर** के द्वारा गाये गये सेवकों के लिए कल्पवृक्ष स्वरूप श्रीरामरत्न प्रेमामृत पूर्ण सरयू तट पर विलसित हो रहे हैं।

## गीत संख्या-१५

**रामेन्दीवरमभितटि विलसति**
**हरगिरिशेखरसरस्सुतायां सरयूसरिति सुसुधायुतायाम्।**
**दिनकरकुलदिनकरमहमहसा महितं सहितं विभया विकसति।।१।।**
**भानुमतीमालिनीलालितं पितृवत्सलरसपयसि पालितम्।**
**अरिकरिमादकललितचरितपरिमलशालितं कदापि न विरसति।।२।।**
**नैनद् द्वेष्टि शरद्राकेशो वष्टि सदैतत् कुमुदकुलेशो।**
**मदिरचकोरयुगं प्रपीयते मधुरमरन्दमधिनिशंविहसति।।३।।**

**शिशिरितसीताप्रतपदुरोजं लसितभक्तिवरवधूशिरोजम्।**
**एतदीयगुणगणचरणात् क्षणमपि गिरिधरमधुकरो न निवसति।।४।।**

**भौमी-** सरयू नदी के समीप श्रीरामरूप नीला कमल सुशोभित हो रहा है। शिवजी के पर्वत कैलाश के मस्तक के आभूषण स्वरूप मानस सरोवर की पुत्री अमृतमय जल से युक्त श्रीसरयू नदी के समीप सूर्यकुल के सूर्य दशरथजी के यज्ञोत्सव के विमल तेज से सम्मानित शोभायुक्त यह नीलाकमल विकसित हो रहा है। जो कौसल्यारूप मालिनी से दुलराया गया है तथा पिता दशरथ के वत्सलरूप जल में पाला गया है एवं जिसका ललित चरित्र रूप सुगन्ध रावण जैसे शत्रुरूप हाथियों को भी मतवाला बना देता है और जो कभी भी रसहीन होकर अशोभनीय नहीं लगता, ऐसा श्रीराम रूप नीलकमल सरयूजी के समीप विराजमान है। इस नीलकमल से शरद् चन्द्रमा भी द्वेष नहीं करता, प्रत्युत् कुमुदकुल के स्वामी चन्द्र सदैव इसे पाने की इच्छा करता ही रहता है और इसके मधुर मकरन्द को दो प्रकार के वुभुक्षु और मुमुक्षु चकोर सदैव पीते रहते हैं। यह रात में भी हँसता रहता है अर्थात् विकसित रहता है। इस नीले कमल से सीताजी के संतप्त वक्षोरुह युगल शीतल होते रहते हैं और यह भक्तिरूपिणी श्रेष्ठ वधू के जूड़ों को सुशोभित करता रहता है और इसके गुण-गणों के गान से एक क्षण के लिये भी **गिरिधर** कवि रूप भ्रमर विश्राम नहीं लेता।

**विशेष-** यह गीत तीन ताल सोलहमात्रा में बद्ध है। इसे राग-यमनकल्यण में मध्यलय एवं विलम्बित लय में भी गाया जा सकता है।

## गीत संख्या-१६

**विहरतः श्रीसीतारामौ हे सरयूचारुकूले**
**चपलाम्बुदगौरश्यामौ हे सरयूचारुकूले।।१।।**
**रसपतिपुञ्जे निकुञ्जे विलसतः परस्परं लपतो विकशतो विहरतः।**
**जितकोटिकोटिरतिकामौ हे सरयूचारुकूले।।२।।**
**अन्योन्यमर्पयतो मञ्जुलताम्बूलं अधरासवं धयतो धर्षितदुकूलम्।**
**रसरङ्गलब्धविश्रामौ हे सरयूचारुकूले।।३।।**
**सेव्यमानशीतलसपरिमलसमीरौ मोदमानौ माध्वीकामण्डितशरीरौ।**
**कविगिरिधरनयनाभिरामौ हे सरयूचारुकूले।।४।।**

**भौमी-** श्रीसीतारामजी सरयूतटजी के सुंदर तट पर विहार कर रहे हैं। विद्युत और बादल के समान गौर-श्याम श्रीसीतारामजी सरयूजी के तट पर विहार कर रहे हैं। पुंजीभूत श्रृंगार रस से युक्त निभृत निकुंज में नव-दम्पती विलास कर रहे हैं, प्रसन्न हो रहे हैं, हास-परिहास कर रहे हैं। इन्होंने अपनी शोभा से करोड़ों-रतियों और करोड़ों रति-कामदेवों को जीत लिया है। दिव्य दम्पती करोड़ों-करोड़ों रस की लीला कर रहे हैं। अपनी बाहुलताओं से एक दूसरे के कंठ को बाँध रहे हैं अर्थात् गलबहियाँ डाल रहे हैं। आप्तकाम होकर भी अनेक-अनेक विनोद कर रहे हैं। एक दूसरे को पान की बीड़ा खिला रहे हैं और अन्योन्य का अधर सुधापान कर रहे हैं। रसरंग भूमि में विश्राम करते हुये सीतारामजी सरयू तट पर विहार कर रहे हैं। शीतल, मन्द, सुगन्ध समीर का सेवन करते हुये प्रेमरस की मदिरा से पूर्ण शरीर वाले **गिरिधर** कवि के नेत्रों के आनन्ददाता श्रीसीतारामजी सरयू तट पर विहार कर रहे हैं।

## सन्दर्भश्लोकौ

विनोदमीलन्नयनाम्बुजाभ्यां
श्रीवत्सलक्ष्माभिनिरीक्ष्य भर्तुः।
आशङ्कमाना ललनां स्वतोऽन्यां
जगाम मानं मिथिलेशपुत्री।।१।।
संरम्भदष्टाधरपल्लवा सा
घ्नती भ्रुवेव प्रणयप्रकोपा।
विकीर्यहारं भुवि सन्निषण्णा
वाचं विषण्णा दयितं बभाषे।।२।।

**भौमी–** सहसा विनोद से आधेबन्द नेत्र कमलों द्वारा प्रभु श्रीराम के वक्ष पर श्रीवत्सलांच्छन देखकर अपने से अतिरिक्त प्रभु के हृदय में वर्तमान अन्य महिला की आशंका करती हुई जनकनन्दिनी सीताजी मान कर बैठीं अर्थात् रूठ गयीं। क्रोधावेश में सीताजी ने पल्लव जैसे अधर को चबा लिया और अपनी भौहों से प्रभु पर प्रहार करती हुई प्रणय–कोप से अपना हार फेंककर पृथ्वी पर बैठी हुई खिन्न सीताजी प्राणधन प्रभु श्रीराम से यह वाक्य बोलीं–

## गीत संख्या–१७

राघव परिहर कैतवमेतम्।
तामभिगच्छ गगनगभीर या रमयतु रमानिकेतम्।१।।
मिथ्याख्यातमेकपत्नीव्रतमुज्झत इयं न लज्जा।
कोटिकोटिशतचाटुचटुलचुञ्चुना व्यधीयत सज्जा।।२।।
न श्यामलः पूर्वमेतावत् त्वं लोचनाभिरामः।
शङ्के त्वा नयनाञ्जनमञ्जुर्भासि समधिकं श्यामः।।३।।
शिथिलवसनभूषणो विराजसि त्वं दिनकरकुलकेतुः।
शङ्के त्वया समधिकमरंस्था गज इव सातितसेतुः।।४।।
शुच्यसि समुच्छ्वशिषि सीतांशुवदनभयवेपितदेहः।
संभ्रमलुलितचिकुरनिकुरम्बकदर्थितसुसलिलगेहः।।५।।
त्वया पीतसेधुःसुखसिन्धुः कुरुषे मुधावहित्थाम्।
गिरिधरहृदयनिलयमावादीस्तामनुसर हृदयस्थाम्।।६।।

**भौमी–** हे राघव! यह कपट छोड़ दीजिए। हे आकाश के समान गँभीर! अर्थात् मिथ्या शब्दाडंबर करने वाले! अब तो आप उसी महिला का अनुसरण कीजिये जो आप लक्ष्मीपति को रमा सके। झूठ–झूठ, प्रसिद्ध एक पत्नीव्रत छोड़ते हुये आपको लज्जा नहीं आयी? करोड़ों–करोड़ों चंचल चाटुकारी वाक्यों में कुशल

आपने यह व्यर्थ की सज्जा उपस्थित की। हे नेत्रों को आनन्द देने वाले रघुवर! पहले आप इतने श्यामल नहीं थे, जितने अब हैं। मुझे शंका ये है कि जिस महिला को आपने अपने हृदय में निवास दिया है उसी के नेत्रों के काजल से आप अधिक श्याम हो गये हैं। हे सूर्यकुल के केतु! आज आपके वस्त्र और आभूषण शिथिल हो गये हैं। मुझे शंका हो रही है कि मतवाले हाथी की भाँति प्रतिबन्ध रूप सेतु को तोड़कर आप मुझसे अन्य किसी महिला के साथ बहुत अधिक रमे। हे चन्द्रमुख! आपका शरीर भय से काँप रहा है। आप पसीने-पसीने हो रहे हैं, आप ऊँचा श्वाँस ले रहे हैं। उतावलेपन के कारण बादलों को भी लज्जित करने वाले आपके केश बिखर गये हैं। हे सुख के सागर! उस अन्य महिला द्वारा आपके अधरासव का पान किया गया है। फिर भी आप झूठी अवहित्था कर रहे हैं। अर्थात् मुझसे सत्य छिपा रहे हैं। हे **गिरिधर** कवि के हृदय में निवास करने वाले राघव! अब मुझसे मत बात कीजिये। जो आपके हृदय में स्थित है, उसी महिला के पास जाइये।

**विशेष-** यह गीत त्रिताल में निबद्ध है। इसे राग-शिवरंजनी तथा भैरवी में भी गाया जा सकता है।

## गीत संख्या-१८

**याहि रघुवर याहि रघुवर याहि श्रीवर याहि**
**तां रमय रमयत्प्रकाण्डहृदीश्वरी तव याहि।।**
**रघुवर याहि श्रीवर याहि।।१।।**
**धनं मे परिमुष्य भो त्वदुरसि विराजति का हि**
**चलेवाब्द इवातिसौ किल कली सर्षपिका हि।।**
**रघुवर याहि श्रीवर याहि।।२।।**
**क्षमाभूरपि न क्षमे तां मम सपत्नी सा हि।**
**सेव सीतां नवलनलिनीं तुदति तुहिननिशा हि।।**
**रघुवर याहि श्रीवर याहि।।३।।**
**मानिनीकुलमुकुटमणि मान्यास्मि पतिव्रता हि।**
**किमु सहे त्वान्या रमणकं त्वदभिचरणरता हि।।**
**रघुवर याहि श्रीवर याहि।।४।।**
**यदि शमिच्छसि तदामुष्यै सद्मदूरं राहि।**
**मैथिलीगृहहृदयविरुदं गिरिधरेश्वर पाहि।।**
**रघुवर याहि श्रीवर याहि।।५।।**

**भौमी-** हे रघुवर! जाइये, जाइये। हे श्रीवर! जाइये, जाइये। हे रमण कराने वालों में श्रेष्ठ। श्रीराघव! अब तो आप उसी को रमाइये जो आपके हृदय की ईश्वरी है। अरे! मेरा धन लूटकर यह कौन बादल में बिजली की भाँति, तीसी के फूल में सरसों की कली के समान आपके हृदय में सुशोभित हो रही है? मैं क्षमा (पृथ्वी) की पुत्री होकर भी उसे नहीं क्षमा करूँगी। क्योंकि वह मेरी सौतन है। वह मुझे उसी प्रकार दुःखी कर रही है जिस प्रकार हेमन्तऋतु की रात्रि कमलिनी को दुःखी करती है। मैं मानिनियों की शिरोमणि महिलाओं की भी सम्मान्या पविव्रता हूँ। मैं अन्य महिला के साथ रमण करने वाले आपको कैसे सहन करूँ? क्योंकि मैं आपकी

सेवा में निरत रहती हूँ और आपका अभीष्ट चाहती हूँ। हे **गिरिधर** कवि के स्वामी श्रीराघव यदि आप कल्याण चाहते हैं तो इसको अपने हृदय से दूर स्थान दीजिए और आपका मैथिली गृह-हृदयरूप जो विरुद है उसका पालन कीजिए।

**विशेष-** यह गीत रूपक ताल में निबद्ध है। इसे राग-गुर्जरी अथवा तोड़ी में गाना अधिक श्रेयस्कर है।

## गीत संख्या-१९

**सीता पुनर्गायति-**

**रघुवर वरविरुदं मा परिहर।।**
**हे हरहृदयसरोरुहमधुकर सरसिजचरणशरणभवभयहर।**
**त्रिभुवनमहितमेकपत्नीव्रतमभिनवजलदसुभगशुभमनुहर।।१।।**
**निखिलहेयपरिपन्थिगुणार्णव मा साधारणगुणान् समभिहर।**
**भूमिभारहर भौमीवेणीं विनैवान्यसीमन्तं संहर।।२।।**
**वक्षसि वहसि दहसि मम चेतो वामामस्यै विषं समुपहर।**
**सौरभपल्लवदधरसीधुना सुखसिन्धो मे व्यथां समपहर।।३।।**
**अलमनुनीय मामनघदयितां धीरोदात्तसुगुणान् समाहर।**
**गिरिधरहृदयनिकुञ्जे विहरन् स्वजनमनः सीतया सदाहर।।४।।**

**भौमी-** सीता जी पुनः गा रही हैं-हे रघुवर! आप अपना श्रेष्ठ विरुद मत छोड़िये। हे शंकरजी के हृदय-कमल के भ्रमर! हे श्रीचरण कमल शरणागतों के भवभय हरने वाले! नीलमेघ के समान सुन्दर श्रीराघव! तीनों लोकों में ख्यात् कल्याणकारी! अपने एक पत्नीव्रत का अनुसरण कीजिये। हे समस्त हेयप्रत्यनीक गुणों के महासागर! आप इनसे जनसाधारण के गुण मत मिलाइये। हे भूमिभारहारी! अन्य जूड़ों के बिना ही मुझ सीता की वेणी गूँथिये और किसी की नहीं। इस ललना को आप अपने वक्ष में धारण कर रहे हैं और मेरा चित्त दुःखा रहे हैं। इसे दूर कीजिये। इसको विष दे दीजिये । आम्रपल्ल्व के समान अधर के आसव द्वारा मेरी व्यथा हर लीजिये। हे सुख-सिन्धो! तभी आपका नाम चरितार्थ होगा। हे निष्पाप! मेरा अनुनय करने से कोई लाभ नहीं, मैं तो अपकी प्रियतमा हूँ परन्तु आप अपने धीरोदात्त गुणों को प्रयोग में ले आयें। **गिरिधर** कवि के हृदय निकुंज में विहार करते हुये मुझ सीता के साथ सज्जनों के मन को हरें।

## गीत संख्या-२०

**रघुवर खलु छलयित्वा सीताम्।**
**जानेऽहं त्वत् क्रियाकलापं मा वञ्चय प्रतीताम्।।१।।**
**रतिरसरभसलुलितपटभूषणमृदितकुसुमकरलोलम्।**
**विघटितपीतनिचोलरदव्रणकल्पितकमलकपोलम्।।२।।**
**पीतसेधुनवपल्लवाधरं तिलकविलुण्ठितभालम्।**
**शंके तत्र भवन्तमिवार्चितलतं नवीनतमालम्।३।।**

**उपरतशकलकलापमुदञ्चित नयनयुगं सुश्रान्तम्।**
**गिरिधरहृदयकुटीरे मन्ये त्वामधुना विश्रान्तम्।।४।।**

**भौमी-** हे रघुवर! अब मुझ सीता को मत छलें। मैं आपका क्रियाकलाप जानती हूँ। मुझ विश्वस्त-गृहिणी को मत ठगें। रमणरस के वेग से आपके वस्त्राभूषण तितर-बितर हो गये हैं और पुष्पों के समूह भी मसल उठे हैं और अस्त-व्यस्त हो गये हैं और आपका पीला उत्तरीय भी तितर-बितर हो गया है। आपके सुन्दर कपोलों पर दाँतों के व्रण दिख रहे हैं। आपके अधर-पल्लव का आसव किसी के द्वारा पिया गया है। आपके मस्तक का तिलक भी मिट गया है। मैं आपको उसी प्रकार देख रही हूँ जैसे सुन्दर तमाल लता से आलिंगित है। रसों के नायक, शृंगार के संग्राम से सनाथित, शरीर के श्रम से आप पसीने-पसीने हो चुके हैं। मुझे आशंका है कि निर्भीक उस महिला के साथ आप अनेक विहार सम्पन्न कर चुके हैं। सम्पूर्ण कलापों से विरत, थके हुये, खुले हुये दो नेत्रों वाले आपको मैं **गिरिधर** कवि के हृदयकुटीर में विश्राम किये हुये समझ रही हूँ।

**विशेष-** यह गीत राग-हमीर एवं त्रिताल में निबद्ध है।

## सन्दर्भश्लोकौ

**अथ प्रियां प्रियपरिवादवादिनीं रुषा स्फुरत् किसलयबन्धुराधराम्।**
**महीसुतामनुनयति स्म राघवो वरावरे ह्यनुनयचाटुचुञ्चुता।।१।।**
**समुन्नयन्नयननिसृष्टनीरजस्त्रजावलीप्रतिमसदश्रुशालिनीम् ।**
**विमार्जयन्मुखसरसीरुहं शनैः करोद्भवैर्भवभव आह भामिनीम्।।२।।**

**भौमी-** इस प्रकार प्रियतम श्रीराम के प्रति मिथ्या आरोप से अपवादमय वचन करने वाली क्रोध से काँपते हुये अधरपल्लव से युक्त पृथ्वीनन्दिनी प्रियतमा सीताजी का श्रीराघव अनुनय करने लगे, क्योंकि वर की अनुनय, चाटुकारिता की कुशलता रसवृद्धि की दृष्टि से श्रेष्ठ होती है। भवभव अर्थात् शिवजी का भी कल्याण करने वाले भगवान राम नेत्र से बहती हुई कमलमाला जैसी अश्रुमुक्ता से युक्त प्राणप्रिया सीताजी को भूमि पर से उठाते हुये अपने करकमल की ऊँगुलियों से सीताजी का मुखकमल पोंछते हुये इस प्रकार बोले-

## गीत संख्या-२१

**मनस्विनि मैथिलि मयि प्रसीद।।**
**परिहर शङ्कां कलितकलङ्काम् परिसरकाङ्कां मृडितमृगाङ्काम्।**
**मा मा प्रहर कटाक्षशरैर्मां निकटे निजं निषीद।।१।।**
**सज्जय सुमुखि सरसशृङ्गारं लज्जय रतिमथ रचय विहारम् ।**
**मज्जय रमा कोटिमदसारं शोभाब्धौ परिषीद।।२।।**
**मा कुरु कोपं मिथ्यारोपं रमय रहसि मां कलिताटोपम्।**
**प्रणयिनि शमय विषमशरबाधां सस्मितमुखमासीद।।३।।**
**विहर मया सह शिशिरसमीरे गिरिधरमानसकुञ्जकुटीरे।**
**परमात्मानं कलितगुणं मां श्रुतिरिव समुपनिषीद।।४।।**

**भौमी-** हे मनस्विनी मैथिली! मुझ पर प्रसन्न हो जाइये। कलंक से युक्त शंका छोड़ दीजिये और शिवजी को प्रसन्न करने वाली भक्ति का परिशरण कीजिये। मुझको कटाक्ष के बाणों से घायल मत कीजिये। मेरे निकट बैठिये। हे सुमुखि! सुन्दर शृंगार से सज्जित होइये। रति को भी लज्जित कीजिये। विहार की रचना कीजिये। अपने शोभा सागर में कोटि-कोटि लक्ष्मियों के मदसार-सर्वस्व को डुबो दीजिये, विराजिये। हे प्रणयिनी! मुझ पर कोप और मिथ्या-आरोप मत कीजिये। उत्साहित मुझ राम को एकान्त में रमण कराइये और मेरे मन की स्मरणात्मक कामबाधा को समाप्त कीजिए एवं मुस्कुराती हुई मेरे वामभाग में विराजिये। हे सीते! मुझ राम के साथ शीतल वायु से युक्त **गिरिधर** कवि के मनरूप कुंज कुटीर में विहार कीजिए। सम्पूर्ण गुणों से युक्त मुझ परमात्मा के पास उपनिषद् की भाँति सटकर बैठिए।

**विशेष-** यह गीत मध्यलय त्रिताल में बद्ध है। इसे जोग राग में गाना अधिक समुचित होगा।

## गीत संख्या-२२

**अद्य दृष्टं ते सुमुखि कुपिताननं सुखकारि।**
**प्रातररुणलसद्द्विरेफमिवाम्बुरुहमतिहारि ।।**
**पतत्पक्ष्मनयनयुगलमथ नवनलिनमिव भाति।**
**मिलन्मधुकरपवनचलितसुकोषमिव प्रतिभाति।।१।।**
**रोषभरविस्फुरितमधुररदच्छदं विचकास्ति।**
**शिशुमिहिरकरकलितसुबिम्बमिव प्रचकास्ति।।२।।**
**भ्रूविजृम्भं ससंरम्भकमेणिलोचनि भाति।**
**मदनधनुरपि यन्निरीक्ष्य निजं मदं विजहाति।।३।।**
**किमुत कविगिरिधरस्वामिनि मृषा रुषं तनोषि।**
**वृथा शङ्काशङ्कुभिर्वरकमलमलं दुनोषि।।४।।**

**भौमी-** हे सुमुखि! अरुण और भ्रमर से सुशोभित प्रातःकालीन सुन्दर कमल के समान तुम्हारा सुखद मुख मैंने आज देखा। पलक गिरा रहे तुम्हारे दोनों नेत्र कमल के समान शोभित हो रहे हैं मानों वे कमल युगलभ्रमर से मिलकर वायु के द्वारा कम्पित हुये सुन्दर कोषयुक्त हैं। क्रोध के कारण कँपता हुआ तुम्हारा मधुर अधर बहुत सुन्दर लग रहा है जो बालसूर्य की किरणों से युक्त बिम्बाफल के समान प्रतीत हो रहा है। हे मृगनयनी! तुम्हारा क्रोधपूर्ण भौंहों का तानना भी बहुत सुन्दर लग रहा है। इसे देखकर कामदेव का धनुष भी अपना अहंकार छोड़ रहा है। हे **गिरिधर** कवि की स्वामिनी आप व्यर्थ का क्रोध क्यों कर रही हैं और अपने प्राणधन मुझ राम रूप कमल को व्यर्थ की आशंकारूपी कीलों से क्यों घायल कर रही हैं?

## गीत संख्या-२३

**न कुरु क्रोधं मुधाबोधं सुमुखि सीते प्रसन्ना स्याः।**
**विसृज रोषं सुसृज तोषं सुमुखि सीते प्रसन्ना स्याः।।**

**त्यजाशङ्कां मुधातङ्कां कलितभवभीतिमलपङ्काम्।**
**विभज दीने दयाकोषं विगतभीते प्रसन्ना स्याः।।१।।**
**अलं परितप्य तापघ्ने अलं परिलप्य मामग्ने।**
**समाव्रज देवि परितोषं सदा प्रीते प्रसन्ना स्याः।।२।।**
**सदा विश्वसिहि मयि रामे समाश्वसिहि प्रणतकामे।**
**परित्यज सन्मनःशोषं प्रणयनीते प्रसन्ना स्याः।।३।।**
**सदाऽहं ते सदा त्वं मे न भेदो ह्यावयोः परमे।**
**वितर गिरिधरमनसि पोषं निगमगीते प्रसन्ना स्याः।।४।।**

**भौमी-** हे सुमुखि सीते! निराधार संज्ञान से युक्त क्रोध मत करो। प्रसन्न हो जाओ। रोष छोड़ दो। सन्तोष की सर्जना करो। प्रसन्न होओ। हे भयरहित सीते! झूठे आतंकवाली कल्पित भय के मल से युक्त आशंका छोड़ दो। मुझ दीन पर दया का कोष बाँट दो। प्रसन्न हो जाओ। हे ताप को नष्ट करने वाली! व्यर्थ का परिताप मत करो। हे अपने में लक्ष्मी को समाहित करने वाली! व्यर्थ का प्रलाप मत करो। हे देवी! हे प्रियतमे! अब परितोष को प्राप्त करो। प्रसन्न हो जाओ। हे प्रणय से प्राप्त की गई सीते! मुझ राम पर निरन्तर विश्वास करो। आश्वस्त हो जाओ। हे प्रणतों की कामना पूर्ण करने वाली! अपने मन को सुखाना छोड़ दो तथा प्रसन्न हो जाओ। वेदों द्वारा गान का विषय बनाई गई हे सीते! हे परमशक्ति! मैं सदैव तुम्हारा हूँ तुम सदैव मेरी हो। हम दोनों में कोई भेद नहीं है। अब गिरिधर कवि के मन में अनुग्रहरूप पोष प्रदान करो एवं प्रसन्न हो जाओ।

## गीत संख्या-२४

**भामिनि ते शङ्का निर्मूला।**
**गृहलक्ष्मि मा मा विषीद मयि प्रसीद भवानुकूला।।**
**मा प्रमाद्य सम्माद्य मदालसदृग् भव मा प्रतिकूला।**
**मा भूः मयि प्रतीपसुचरिता मिथ्या संशयशूला।।१।।**
**जानानापि सदा स्वानन्यां मम निरुपधिकां प्रीतिम्।**
**केन हेतुना कलयसि कमलविलोचनि मिथ्याभीतिम्।।२।।**
**नान्या गतिर्यथा मुनिसप्तेः काचित् स्वकप्रभातः।**
**यथा नास्ति गतिरथानवद्या काचित् विधोर्विभातः।।३।।**
**तथा नास्ति रामस्य गतिरहो सीतातः काप्यन्या।**
**रामो नित्यं त्वयास्म्यनन्यो रामेण त्वमनन्या।।४।।**
**सीतारामाभेदमविद्वान् विन्दति सततं कष्टम्।**
**लभते शं गिरिधराराध्ययोरैक्यं विदन्न नष्टम्।।५।।**

**भौमी-** हे सुलक्षणे! आपकी शंका निर्मूल है। हे गृहलक्ष्मी! मन में दुःखी मत होओ, मुझ पर प्रसन्न हो जाओ और मुझ प्राणपति के लिए अनुकूल हो जाओ। हे प्रेममद से अलसाये नेत्र वाली सीते! मुझ पर प्रमाद

मत करो, प्रसन्न होओ। मेरे विषय में प्रतिकूल मत बनो और मेरे प्रति विरुद्ध विचार मत लाओ। तुम्हारा संशयात्मक कष्ट मिथ्या है। हे कमलनयनी! अपने प्रति मेरी अनन्य निष्कपट प्रीति जागती हुई भी तुम किस कारण से यह झूठा भय धारण कर रही हो? हे मुनियों द्वारा प्रशंसित सीते! जिस प्रकार सात घोड़ों वाले सूर्यनारायण की प्रभा से अतिरिक्त कोई गति नहीं है और जिस प्रकार चन्द्रमा की चन्द्रिका से अतिरिक्त कोई सत्ता नहीं है। उसी प्रकार मुझ राम की भी तुमसे अतिरिक्त कोई गति नहीं है। मैं राम तुमसे अनन्य हूँ, तुम सीता मुझसे अनन्य हो। इस प्रकार सीताराम का अभेद न जानता हुआ व्यक्ति कष्ट पाता है। **गिरिधर** कवि के आराध्य हम दोनों सीताराम का ऐक्य समझकर भक्त कभी न नष्ट होने वाला कल्याण प्राप्त कर लेता है।

## गीत संख्या-२५

**जहि जहि रोषमलीकं हे मा व्रज प्रतीपम्।**
**नहि नहि ब्रूहि व्यलीकं हे समागच्छ समीपम्।।**
**संहर चिकुरकरम्बं हे संहर निजरोषम्।**
**वितरममाप्यवलम्बं हे अनुहर परितोषम्।।१।।**
**निगडय बाहुव्रतत्या हे मामरसमरसालम्।**
**प्रकटय स्वर्लताललितं हे लास्यं तामालम्।।२।।**
**परिरभस्व मामनघं हे मा वितनु विलम्बम्।**
**संरभस्व मा निरघं हे कुरु सुखकादम्बम्।।३।।**
**भावय वरमकलङ्कं हे मां निर्मलमत्या।**
**गिरिधरहृदयनिकुञ्जे हे विहर मया पत्या।।४।।**

**भौमी-** श्रीराम पुनः सीताजी से कहते हैं–हे सीते! आप व्यर्थ का रोष छोड़ दीजिए और विपरीत भाव को मत प्राप्त कीजिए और निराधार मत बोलिए मेरे समीप आइये। हे सीते! अपने बिखरे केशों को समेट लो और अपने क्रोध को भी, मुझे भी अवलम्बन दो और परितोष का अनुसरण करो। मुझ नीरस व्यक्ति को रसमय रीति से अपनी बाहुलता में बाँध लो। और कल्पलता से अलंकृत, तमाल वृक्ष का आनन्द प्रकट कर दो। मुझ निष्पाप को हृदय से लगा लो, विलम्ब मत करो। मुझ निर्दोष पर क्रोध मत करो और सुखसमूह का संचार करो। अपने निर्मल बुद्धि से मुझ निष्कलंक वर का सम्मान करो और **गिरिधर** कवि के हृदय निकुंज में मुझ प्राणपति राम के साथ विहार करो।

## गीत संख्या-२६

**सीते मिथ्या मानं परिहर।।**
**मयि विश्वसिहि समाश्वसिहि त्वमुदञ्चितकोपमिमं किल संहर।**
**भव सहिष्णुरथ हे क्षामेयि सपदि मुग्धा निसर्गमुपसंहर।।१।।**
**क्ष्मापय मा ग्लापय मामनघं दक्षे दाक्षिं मुदा समनुसर।**
**मुहुर्याचमानाय सुमुखि मे मधुराधरशुचिसुधां त्वमुपहर।।२।।**

**त्यज वैक्लवमकारणं सुभ्रूर्मन्मनसा निजमनः समभिहर।**
**गिरिधरहृदयनिभृतनिकुञ्ज इह मया रामचन्द्रेण सह विहर।।३।।**

**भौमी-** हे सीते! यह मिथ्या मान छोड़ दो। मुझ पर विश्वास करो। आश्वस्त हो जाओ और अपने उठ रहे कोप को समेट लो। हे क्षमापुत्री! तुम सहिष्णु बनो। मुग्धानायिका के स्वभाव को छोड़ दो। मुझे क्षमा करो। कष्ट मत दो। हे चतुरे! चतुरता का अनुसरण करो। बार-बार याचना करते हुए मुझे अपने अधरामृत का उपहार दो। हे सुन्दर भौंहों वाली सीते! बिना कारण के विकलता छोड़ दो। अपने मन को मेरे मन के साथ मिला लो और **गिरिधर** कवि के हृदयरूप निभृत निकुंज में मुझ रामचन्द्र के साथ विहार करो।

## गीत संख्या-२७

**सत्यमेतद् ब्रुवे त्वां विना भूमिजे देववर्गोऽपि स्वर्गो न मे रोचते।**
**मन्मनो मन्दिरस्येष्टतमदेवते त्वां विना बन्धुवर्गो न मे रोचते।।१।।**
**त्वां विना सर्वमेतद्धि शून्यायितं सार्वभौमं त्रिलोकीसुखं वैभवम्।**
**त्वां विना विश्वमेतत्तमिस्त्रावृतं प्राज्य साम्राज्यसर्गो न मे रोचते।।२।।**
**न्यस्तनैजप्रभो भास्करोऽयं यथा अस्तज्योत्स्नो यथा निट्करोऽयं वृथा।**
**तद्विधोऽहं त्वया वर्जितो हे शुभे त्वां विनायं निसर्गो न मे रोचते।।३।।**
**आत्मना प्रोज्झितं वै शरीरं यथा माधुरीवर्जितं नीचनीरं यथा।**
**तद्वदेष त्वया त्याजितोऽहं प्रिये त्वां विनासौ नृसर्गो न मे रोचते।।४।।**
**पातु मां पापतो गिरिधरस्वामिनी रातु मे स्वां क्षमायाचिने भामिनी।**
**त्वां विनाऽहं निरर्थो गतोत्साहकः त्वां विनैषोपवर्गो न मे रोचते।।५।।**

**भौमी-** श्रीराम कहते हैं- हे भूमिनन्दिनी! मैं यह सत्य कह रहा हूँ कि तुम्हारे बिना देववर्गों वाला स्वर्ग भी मुझे नहीं अच्छा लगता। हे मेरे मनमन्दिर की ईष्टदेवी! तुम्हारे बिना बन्धुवर्ग भी मुझे अच्छा नहीं लगता। आपके बिना यह सब कुछ मेरे लिये शून्य हो गया है। यहाँ तक कि सम्पूर्ण पृथ्वी का राज्य, त्रिलोकी का सुख और वैभव, सुवर्णादि सम्पत्ति से युक्त साम्राज्य का सर्ग मुझे तुम्हारे बिना नहीं भाता। हे कल्याणी! जिस प्रकार प्रभा के बिना सूर्यनारायण और जिस प्रकार चन्द्रिका के बिना चन्द्रमा व्यर्थ है, उसी प्रकार तुम्हारे बिना मेरी कोई सत्ता नहीं आपके बिना यह प्रकृति भी मुझे नहीं भाती। जिस प्रकार आत्मा से रहित शरीर और जिस प्रकार माधुर्य के बिना जल निरर्थक है उसी प्रकार आपके बिना मैं निरर्थक हूँ और तुम्हारे बिना यह मनुष्य-सृष्टि भी मुझे नहीं भाती। हे **गिरिधर** कवि की स्वामिनी! आप मेरी पाप से रक्षा करें। मुझ भिक्षुक को क्षमादान दे दें। आपके बिना मैं निरर्थक उत्साहहीन हूँ और आपके बिना यह मोक्ष भी मुझे नहीं भाता।

## गीत संख्या-२८

**सीते शृणु शृणु मम प्रतिज्ञाम्।**
**समाश्वसिहि विश्वसिहि विदित्वा विदितां विगतावज्ञाम्।।१।।**

स्वभां जातु जहातु चन्द्रमा हिमवांस्त्यजतु हिमानीम्।
जह्यां नो विहितां प्रतिश्रुतिं रामोऽहमपि तदानीम्।।२।।
त्यजतु कदाचित् प्रभां भास्करो वेलां वा कूपारः।
सन्धां नो त्यक्ष्यामि तथापि सुमुखि रामो धृतसारः।।३।।
रामो द्विर्न भाषते मैथिलि द्विर्न शरं सन्धत्ते।
द्विर्न ददाति सेवकावासं कथमपि द्विर्न विधत्ते।।४।।
त्वदधरसुधया शपे सुवदनेऽहं नैवावज्ञेयः।
गिरिधरप्रभुस्त्वेकपत्नीव्रतधरस्सदा विज्ञेयः।।५।।

**भौमी-** भगवान राम हवेली पद्धति में गाते हुए पुनः कहते हैं–हे सीते! आप मेरी प्रतिज्ञा सुनिये। आप आश्वस्त होइये और अपमान से रहित इस मेरी प्रतिज्ञा को जानकर मुझ पर विश्वास कीजिये। हे सीते! भले ही चन्द्रमा अपनी शोभा छोड़ दें कदाचित् हिमाचल अपनी बर्फ की राशि का त्याग कर दें, उस समय भी मैं राम अपनी प्रतिज्ञा नहीं छोड़ सकता। हे सुमुखी सीते! भले ही सूर्यनारायण अपनी प्रभा छोड़ दें, चाहे समुद्र अपनी तट की मर्यादा से हट जाये फिर भी दृढ़ निश्चय वाला मैं राम अपनी प्रतिज्ञा नहीं छोड़ सकता। हे मैथिलि! यह राम दो बार बात नहीं करता अर्थात् जो कहता है उस पर दृढ़ रहता है। वह दो बार बाण का सन्धान नहीं करता। दो बार याचक को दान नहीं देता और अपने सेवक को दो बार स्थापित नहीं करता। अर्थात् इन चार विषयों में मैं पूर्णदृढ़ रहता हूँ। हे सुमुखि! मैं आपके अधरामृत की शपथ करके कहता हूँ कि आप अन्यथा न लें और मेरा अपमान न करें। गिरिधर कवि का स्वामी मैं राम एक पत्नीव्रत धारण करने वाला हूँ। इस प्रकार आप निश्चय कर लें।

## गीत संख्या-२९

तवाहं मुखविधुरुचा शपामि।
सत्यसन्ध इह सत्यं भाषे मिथ्या न प्रलपामि।।१।।
नो स्वप्नेऽपि मया किल दृष्टा योषा शुभे त्वदन्या।
विस्मृत्यापि मया न स्पृष्टा त्वदृते काचिदधन्या।।२।।
किमुत विहाय पद्मिनीं चुम्बति कामप्यपरां भानुः।
स्वाहां विना कथय कां श्लिष्यति कच्चित्क्षणं कृशानुः।।३।।
इदं त्रिकालसत्यमिह सीते प्रतिश्रुत्य कथयामि।
त्वदृते काञ्चन श‍ृण्वन्नपि मनसा विग्नो व्यथयामि।।४।।
नित्यं मनोमन्दिरे दीव्यसि देवीव त्वं सीते।
नैव जिहासति भवतीं रामः क्षणमपि गिरिधरगीते।।५।।

**भौमी-** भगवान राम पुनः हवेली पद्धति में ही गा रहे हैं। हे सीते! मैं आपके चन्द्रमुख की शोभा की शपथ करता हूँ मैं सत्य-प्रतिज्ञ हूँ अतः सत्य ही बोल रहा हूँ, झूठ नहीं कह रहा हूँ। हे सीते! मैंने स्वप्न में भी

आपके अतिरिक्त किसी नारी का दर्शन नहीं किया और भूलकर भी मैंने आपके अतिरिक्त किसी असभ्य महिला का स्पर्श नहीं किया। सीते! बताओ, क्या सूर्यनारायण कमलिनी को छोड़कर किसी अन्य का चुम्बन करते हैं? क्या स्वाहा को छोड़कर अग्नि क्षण भर भी किसी का आलिंगन कर सकते हैं? हे सीते! यह त्रिकाल सत्य है जिसे मैं प्रतिज्ञापूर्वक कह रहा हूँ कि तुम्हारे अतिरिक्त किसी महिला की चर्चा सुनता हुआ भी मैं मन से व्याकुल होकर व्यथित हो जाता हूँ। हे सीते! आप देवी की भाँति मेरे मन मन्दिर में निरन्तर बिराजती रहती हैं। हे **गिरिधर** कवि के द्वारा गायी हुई सीते! आपको मैं राम क्षणभर के लिये भी अपने से दूर नहीं करना चाहता।

## गीत संख्या-३०

**अवनिजे मयि नित्यं प्रत्येहि।**
**त्वां प्रार्थयेऽभ्यर्थये क्षणमपि मत्तो नैवाप्येहि।।१।।**
**किमुत माधुरीवर्जं क्षणमपि तिष्ठति सलिलं शान्तम्।**
**किमात्मानमतिहाय विराजति क्षणं शरीरं क्लान्तम्।।२।।**
**किमर्चिषा विरहितो निमिषमपि त्रिशिखो न भवति दीनः।**
**क्षणमपि जातु कथं तिष्ठति विभया विभाकरो हीनः।।३।।**
**सीते त्वामतिरिच्य विभाव्या क्षणमपि मम नो सत्ता।**
**कथय गुणं परिहृत्य कथं स्यान्ननु गुणिनो गुणवत्ता।।४।।**
**या सीता स एव किल रामो यो रामः सा सीता।**
**सीतारामाभिधानवद्या श्रुतिकविगिरिधरगीता।।५।।**

**भौमी–** हे अवनिपुत्री सीते! मुझ पर आप नित्य विश्वास कीजिये। मैं आपसे प्रार्थना करता हूँ, अभ्यर्थना करता हूँ कि आप एक क्षण के लिये भी मुझसे दूर मत जाइये। क्या मधुरता को छोड़कर जल एक क्षण भी शान्त रह सकता है? क्या जीवात्मा के बिना क्षणभर के लिये भी शरीर की स्थिति सुन्दर रह सकती है? क्या ज्वाला के रहित होकर अग्नि एक क्षण भी स्थिर रह सकता है? क्या सूर्यनारायण अपनी प्रभा के बिना एक क्षण भी टिक सकते हैं? हे सीते! आपके बिना एक क्षण के लिये भी मेरी सत्ता की कल्पना नहीं की जा सकती। भला बताओ, कहीं गुण के बिना गुणवान की गुणवत्ता निश्चित की जा सकती है? जो सीता हैं, वही राम हैं और जो राम हैं वही सीता हैं। इस प्रकार यह सीताराम नाम निष्पाप निष्कलंक और निर्दोष है। इसे श्रुतियों (वाल्मीकि आदि) कवियों और **गिरिधर** कवि ने भी गाया है।

## सन्दर्भश्लोकः

**इति निगदितवन्तं भानुमद्भानुमन्तं**
**रुचिरुचितदिगन्तं भाविभान्तं स्वकान्तम्।**
**परममुदितचेता जानकीकं समेता**
**रघुपतिमतिगाढं श्लिष्यमाना चुचुम्ब।।१।।**

**भौमी–**अब कवि सन्दर्भश्लोक के द्वारा कथा को क्रमबद्ध कर रहे हैं। सीताजी के समक्ष इस प्रकार

अपनी स्पष्टता किये हुए सूर्य के भी सूर्य, अपनी शोभा से सभी दिगन्तों को प्रकाशित करते हुए और अपने प्रकाश से प्रकाशित होते हुए अपने प्राणधन रघुपति श्रीराम को परम प्रसन्न मन वाली सुख से युक्त होती हुई जनकनन्दिनी सीताजी ने अत्यन्त मधुरभाव से उन्हें गाढ़ आलिंगन करते हुए चूम लिया।

## गीत संख्या-३१

**सीता रामसमेता विहरति।**
**मानससुता मनोहरपुलिनेरतिशतकोटिसौभगं निहरति।।१।।**
**परमप्रेमरभसारसविवशा स्ववशवरं भुजान्तरे गूहति।**
**स्मेरशरद्राकेशवदनमथ चुम्बति हृदिजपटेऽथ समूहति।।२।।**
**अञ्चलसंवृतनयनकोणतो मुहुरथ रहसि रसेशं पश्यति।**
**लुम्पति निखिलनिलिम्पपूजितं पुनरपि निमिषमिषेण विपश्यति।।३।।**
**मुहुरथ ललितपयोधरमण्डनकुङ्कुमतो वरवदनं लिम्पति।**
**मुहुरपि कुम्बति मुहुरपि चुम्बति मुहुरपि हृन्मन्दिरे निलिम्पति।।४।।**
**नीरजनयननिलीनमलिनमिव नीलकुन्तलाहरिं समस्यति।**
**निर्द्वन्दं हृदिजद्वन्द्वस्थं गिरिधरेश्वरं कमिवाभ्यस्यति।।५।।**

**भौमी-** सीताजी सरयूजी के सुन्दर तट पर श्रीराम के साथ विहार कर रही हैं। वे करोड़ों-करोड़ों रतियों के सौन्दर्य को भी चुरा रही हैं। परम दाम्पत्य-प्रेम के वेग और आनन्द के वश में हुई सीताजी अपने वश में हुए प्रियतम को हृदय से लगा लेती हैं। शरदकालीन चन्द्रमा के समान सुन्दर मुख वाले मुस्करा रहे प्रभु को अपने वक्ष के वस्त्र में छिपा लेती हैं। अपने रसिक प्रियतम को एकान्त में आँचल से ढके नेत्र के कोने से बार-बार निहार रही हैं। सम्पूर्ण देवताओं से पूजित प्रभु को अपने ही आँचल में छिपा लेती हैं फिर पलक गिराने के बहाने से विवेचनापूर्वक देखती हैं। पुनः अपने वक्षोरुह को सुशोभित करने वाले कुमकुम से अपने वर श्रीराम के मुख को रंग देती हैं और कभी वस्त्र से उन्हें ढँकती हैं तो कभी चूमती है तो कभी अपने मन मन्दिर का देवता बना कर हृदय में रख लेती हैं। नीलकमल में छिपे हुए भ्रमर की भाँति श्रीहरि को नीले केशों वाली सीताजी बार-बार छिपा लेती हैं और निर्विघ्न रूप से अपने दोनों वक्षोरुहों के मध्य प्रभु को विराजमान करके **गिरिधर** कवि के स्वामी श्रीराम को उसी प्रकार सँजो रही हैं, मानों प्रयत्न से प्राप्त ब्रह्मानन्द को समेट रही हों।

**विशेष-** यह गीत सोलह मात्रा त्रिताल में निबद्ध है। इसे यमन आदि आनन्द के रागों में गाया जा सकता है।

## गीत संख्या-३२

**मैथिली विहरति सरयूतटे।।**
**स्ववरमानीय निजे निकटे।।१।।**
**निगडमालिङ्ग्य निजं कान्तं विजितशतकोटिचलाकान्तम्।**
**परमरमणीयकलाकान्तं मदनसखमञ्जुप्रभाप्रकटे।।२।।**

निर्निमेषदृक् पश्यति रामं सुरपमणिनीलघनश्यामम्।
तनुविभाविजितविपुलकामं निगूहन्ती कुचविमलपटे।।३।।
उदञ्चन्मञ्जुलभ्रूलतिका विराजति सती स्ववशपतिका।
रामपदपद्ममधुपमतिका मनोभवमन्दिरमधूत्कटे।।४।।
हसति गायति नृत्यति प्रीता लसति रघुचन्द्रमनो नीता।
निधुवने लसति सुखं सीता विहितकविगिरिधरगीतघटे।।५।।

**भौमी–** अपने वर श्रीराम को अत्यन्त निकट ले आकर मिथिलाधिराजकन्या सीताजी सरयू तट पर विहार कर रही हैं। करोड़ों-करोड़ों मेघों को जीतने वाले अत्यन्त रमणीय शृंगाररस की कला में निपुण अपने प्राणधन श्रीराम का प्रगाढ़ आलिंगन करके काम के मित्र वसन्त की सुंदर और प्रकट शोभा से युक्त सरयूतट पर श्रीसीताजी विहार कर रही हैं। अपने वक्ष के निर्मल वस्त्र में श्रीराम को छिपाती हुई इन्द्रनीलमणि और मेघ के समान श्यामल अपनी शोभा से कोटिकामों को जीतने वाले प्रभु श्रीराम को सीताजी अपलक नयनों से निहार रही हैं। वसन्त से उद्दीप्त काम के मन्दिर में सुन्दर भृकुटि लता को ऊपर करती हुई श्रीराम के चरणकमल में अपनी बुद्धि को भ्रमरी के समान तन्मय की हुई तथा अपने अलौकिक माधुर्य से प्राणधन श्रीराम को भी अपने वश में करके आज सती शिरोमणि सीताजी बहुत सुन्दर लग रही हैं। श्रीरामचन्द्र के हृदय में विराजमान सीताजी प्रसन्न हो रही हैं। हँस रही हैं, गा रही हैं, नाच रही हैं और **गिरिधर** कवि के गीतों की छटा से युक्त रहस्य विहार की बार-बार इच्छा कर रही हैं।

**विशेष–** यह गीत ब्रज के आँचलिक लोकधुन में निबद्ध है इसका बोल है–"आरती कुंजविहारी की श्री गिरिधर कृष्ण मुरारी की"

## गीत संख्या-३३

राघवपरिष्वङ्गप्रीता विराजति निधुवने सीता।।
श्रीमद्वसिष्ठमुनितनयातीरे प्रवहति शीतलसुरभितसमीरे
परमप्रेमपयसा प्रणीता विराजति निधुवने सीता।।१।।
चलाचारुचम्पकचामीकरवर्णा मकरकेतुकुन्डलकलितकम्रकर्णा।
पतिव्रतापावनी पुनीता।।२।।
कन्दावदातनीलवारिजातवसना रामनाममञ्जुसुधापानरसिकरसना
विश्वविरुदविश्रुतिविनीता ।।३।।
सुरपुरपुरन्ध्रिप्रणतनलिनचरणा रमणी शिरोमणिर्महितशुभाचरणा।
गिरिधरगदितगाथागीता विराजति निधुवने सीता।।४।।

**भौमी–** श्रीराघव के समालिंगन से प्रसन्न हुई सीताजी आज रहस्यविहारस्थल में बिराज रही हैं। शीतल, मन्द, सुगन्ध वायु से युक्त वसिष्ठ मुनि की कन्या सरयू के तट पर जनकनन्दिनी सीता ऐसी प्रतीत हो रही हैं मानों उनका दाम्पत्यप्रेम के दुग्ध से ही निर्माण हुआ है। सीताजी वर्ण विद्युत, सुवर्ण और चम्पा के समान हैं।

सीताजी के सुन्दर कानों में काम के ध्वज, मछली के आकार के कुण्डल विराज रहे हैं। ऐसी स्वयं पवित्र और पतिव्रताओं को भी पावन कर रही जानकीजी निधुवन में विराज रही हैं। सीताजी ने मेघ और नीले कमल के समान नीली साड़ी धारण कर रखी हैं और मैथिलीजी की रसना श्रीरामनामरूप मधुरामृत के पान में रस की अनुभूति कर रही है, ऐसी सम्पूर्ण सतियों के निर्मल यश की ख्याति से युक्त सीताजी निधुवन में सुशोभित हो रही हैं। देववधुओं के द्वारा जिनके चरणकमलों को प्रणाम किया जा रहा है। जिनके कल्याणमय आचरणों की आज भी पूजा हो रही है जिनकी यशोगाथाओं को **गिरिधर** कवि ने अपने विविध गीतों में गाया है, ऐसी सती–शिरोमणि सीताजी प्रभु श्रीराम के साथ निधुवन में विराज रही हैं।

## गीत संख्या–३४

**रघुवररसरङ्गमही संविभाति जानकी।।**
**सरयूवरसरसतीरे मलयितशीतलसमीरे।**
**विलसितरघुवंशवीरे रसं राति जानकी।।१।।**
**विहरति हरिणासमेता मनसि महितमानिकेता।**
**शीलरूपगुणोपेताऽघं लुनाति जानकी।।२।।**
**दर्शं दर्शं रामघनं निजजनसारङ्गधनम्।**
**नटन्ती मयूरवधूर्यथा भाति जानकी।।३।।**
**ललिता ललना लसन्ती पुरटनूपुरं रणन्ती।**
**क्वणन्ती कुमुद्वतीव कुम्पुनाति जानकी।।४।।**
**कविवरगिरिधरस्वामिनी देहविजितसौदामिनी।**
**रामभद्रभामिनी भयाभिभाति जानकी।।५।।**

**भौमी–** रघुश्रेष्ठ श्रीराम के शृंगाररस की रंगभूमि स्वरूप श्रीजानकीजी सुशोभित हो रही हैं। मलय शीतल वायु से युक्त रघुवंश के वीर्य श्रीराम से सुशोभित सुन्दर सरयू के तट पर विराजमान होकर सीताजी प्रभु को आनन्द दे रही हैं। मन में अपने प्राणधन श्रीराम का सम्मान करतीं हुई रूप, चरित्र और गुणों से युक्त सीताजी श्रीहरि के साथ विहार कर रही हैं और भक्तों के पापों को नष्ट कर रही हैं। अपने भक्त रूप चातकों के जीवन–धनस्वरूप श्रीराम मेघ को निहार–निहार कर मयूरिणी की भाँति नर्तन करती हुई सीताजी बहुत सुशोभित हो रही हैं। स्वर्णनूपुर में वीणा का निनाद प्रस्तुत करती हुई सुशोभित हो रही श्रेष्ठ महिलाशिरोमणि सीताजी शरत्पूर्णिमा की भाँति पृथ्वी को पवित्र कर रही हैं। अपने शरीर से विद्युत को जीतने वाली कविश्रेष्ठ **गिरिधर** की स्वामिनी, श्रीरामभद्र की प्राणप्रिया सीताजी अपनी प्रभा से अनुकूलतापूर्वक शोभा पा रही हैं।

**विशेष–** यह गीत एक ताल में निबद्ध है। इसे वागेश्वरी ललित और यमन आदि रागों में सानन्द गाया जा सकता है।

## गीत संख्या–३५

**सरयूतटे विलसति जानकी।।**
**तरुघननिविडितनिभृतनिकुञ्जे कलितसुकोमलकिसलयपुञ्जे।**

रसमयमदिरमधुव्रतगुञ्जे सुखमथ विहसति जानकी।।१।।
अशरणशरणनवनलिनचरणा परिहितसुमहितवसनाभरणा।
निजतनुविभया रतिशतशतमथ विदिता विरसति जानकी।।२।।
चुम्बति हरिविधुमुखमालिङ्गति भुजलतया रघुवरमथ रिङ्गति।
नवनलिनीव रामनवमिहिरं दृष्ट्वा विकसति जानकी।।३।।
तनुते तन्वी विविधविहारं रचयति नवनवमथ रससारम्।
गिरिधरप्रभुमपि हृतभवभारं रभसा विवशति जानकी।।४।।

**भौमी–** श्रीसीताजी सरयू तट पर सुशोभित हो रही हैं। जिसमें सुन्दर पल्लवों के समूह विद्यमान हैं। जहाँ आनन्द से मतवाले भ्रमर गुंजार कर रहे हैं। ऐसे घने वृक्षों से घिरे निभृत निकुंज में सीताजी सुखपूर्वक प्रभु से हास–परिहास कर रही हैं। जिनके नवीन चरणकमल निराश्रितों को भी आश्रय देने वाले हैं। जिन्होंने सुन्दर वस्त्र और अलंकार धारण किए हैं। ऐसी सर्वप्रसिद्ध सीताजी अपने शरीर शोभा से करोड़ों–करोड़ों रतियों को भी नीरस बना रही हैं। सीताजी प्रभु का चन्द्रमुख चूमती हैं और उन्हें अपनी भुजालता में जकड़कर गले लगाती हैं, नाचती हैं तथा श्रीरामरूप नवीन सूर्य को देखकर नवीन कमलिनी की भाँति विकसित हो उठती हैं। तन्वंगी सीताजी अनेक विहार प्रस्तुत करती हैं और नवीन–नवीन रससार स्वरूप शृंगारों की रचना करती हैं। किंबहुना भवभार दूर करने वाले **गिरिधर** कवि के स्वामी प्रभु राम को भी सीताजी अपने आनन्दोद्रेक से विवश कर लेती हैं।

## गीत संख्या–३६

रामो रमते सह रामया।
सरयूतटे परिलसति निधुवने कमनकदम्बितबकुलकुलघने।
ऋतुपतिपरिरञ्जितसखीजने रघुवरमनोऽभिरामया।।१।।
विहरति हरिरिह जनककिशोर्या रामचन्द्रमुखचन्द्रचकोर्या।
रतिरभसापतिचेतश्चोर्या महितो मध्यक्षामया।।२।।
क्रीडति कुबलयकमनकदम्बे मुखरितवरमधुकरनिकुरम्बे।
विकसितबकुलकदम्बकरम्बे दूरितभवभवकामया।।३।।
शशिनो द्वादश्येव निसर्गे कलयान्वितो द्वादशे सर्गे।
गिरिधरगीते लसदपवर्गे हरिहृतहृदयारामया।।४।।

**भौमी–** सुन्दर बकुल वृक्षों के समूह से युक्त वसन्त की वासन्तिकता से प्रसन्न हुए सखीजनों से विभूषित श्रीसरयू तट पर एकान्तिक विहार के वातावरण में श्रीराम के मन को आनन्द देने वाली प्राणप्रिया सीताजी के साथ भगवान् श्रीराम रम रहे हैं। श्रीरामचन्द्र के मुखचन्द्र की चकोरी शृंगार रस के स्थायी भाव रति के उद्रेक से प्राणपति श्रीराम के चित्त को चुराने वाली मध्यक्षामा जनकनन्दिनी सीताजी के साथ श्रीहरि विहार करते हुए

सुशोभित हो रहे हैं। श्रेष्ठ भ्रमरसमूहों के गुंजार से युक्त वकुल वृक्षों के सुन्दर विकास से शोभायमान नीलकमल वन के समूह में भक्तों के भवभय और काम को दूर करने वाली श्रीसीताजी के साथ प्रभु क्रीड़ा कर रहे हैं। इस प्रकार **गिरिधर** कवि के द्वारा गाये हुए मोक्ष के उपायों से सुशोभित गीतरामायणम् के बारहवें सर्ग में श्रीराम को अपने हृदय उद्यान में चुरा लेने वाली चन्द्रमा की बारहवीं कला जैसी श्रीसीताजी के साथ श्रीराम सानन्द विहार करते हुए विहार कर रहे हैं।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये अयोध्याकाण्डे गीतनवदम्पतिविहारो नाम प्रथमः सर्गः।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के अयोध्याकाण्ड में गीतनवदम्पतिविहार नामक प्रथम सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये

# अयोध्याकाण्डे

## गीतसीतारामहोलीविहारो नाम

# द्वितीयः सर्गः

### सन्दर्भश्लोकौ

श्रीवासिष्ठीविमलपुलिने कामकान्ते वसन्ते
विभ्रत्प्रातर्मिहिरवसनं कम्रकन्दावदातः।
होलीं खेलन् विलसतितरां मानयन् माननीयो
भौमी भव्यो रविकुलरविर्गीतसीताभिरामः।।१।।
पाटीरं प्रथयन् पयोदपटले श्रीखण्डमाखण्डलो
धीरोदात्तनृणां विदेहदुहितुर्लिम्पन् कपोले कलम्।
आवीरं च गुलालकं विलसयन् सिञ्चन् दृती रागकैः
सीतां खेलति होलिकां रसिकराड् रामो रसेशं श्रयन्।।२।।

**भौमी-** अब कवि कथा को क्रमबद्ध करते हुए सन्दर्भश्लोक प्रस्तुत करते हैं– वसिष्ठपुत्री सरयू के निर्मल तट पर काम की उपस्थिति के कारण कमनीय वसन्त ऋतु में बालसूर्य के समान सुन्दर पीताम्बर धारण किये हुए सभी के लिए माननीय सूर्यकुल के सूर्य सीताजी के साहचर्य से सुन्दर लग रहे गीतसीताभिराम महाकाव्य के प्रतिपाद्य प्रभु श्रीराम सम्मानपूर्वक होली खेलते हुए बहुत शोभा पा रहे हैं। रसराज शृंगार का आश्रय करते हुए धीरोदात्त नायकों के शिरोमणि रसिकराज भगवान् श्रीराम जनकराजतनया सीताजी के वक्षोरुहों पर चन्दन से पाटीर की रचना करते हुए तथा उनके कपोलों पर अबीर का लिम्पन करते हुए और गुलाल को सुशोभित करते हुए पिचकारी के रंगों से सीताजी का अभिषेक करते हुए होली खेल रहे हैं।

### गीत संख्या-१

होलीं खेलति रघुवीरः सरयूतटे होलीं खेलति रघुवीरः।।
श्रीमिथिलेशकिशोरीसहितः जलदश्यामशरीरः सरयूतटे।
होलीं खेलति रघुवीरः।।१।।
एकतः सीतासखीगणो धावति अपरतो लक्ष्मणवीरः सरयूतटे।
होलीं खेलति रघुवीरः।। २।।

**लिम्पति कोऽपि कोऽपि परिसिञ्चति रामो रसति रसधीरः सरयूतटे।**
**होलीं खेलति रघुवीरः।।३।।**
**सीताकरे भाति कनकदृतीरङ्गः भाति रामहस्ते अबीरः सरयूतटे।**
**होलीं खेलति रघुवीरः।।४।।**
**होलीरमणीयो जयति श्रीरामः श्रितगिरिधरहृत्कुटीरः सरयूतटे।**
**होलीं खेलति रघुवीरः।।५।।**

**भौमी–** सरयू के तट पर श्रीराम होली खेल रहे हैं। मेघवर्णी श्रीराम मिथिलेशनन्दिनी श्रीजानकी के साथ होली खेल रहे हैं। एक ओर से सीताजी की सखीगण दौड़ रही हैं, और दूसरी ओर से वीर लक्ष्मणजी दौड़ रहे हैं। कोई सखी किसी सखा के कपोल पर गुलाल लगा रही है तो कोई सखा किसी सखी को रंग से भिगो रहा है और आनन्द में सुस्थिर रहने वाले श्रीराम प्रसन्न हो रहे हैं। सीताजी के हाथ में स्वर्ण पिचकारी में रंग सुशोभित हो रहा है तथा श्रीराम के हाथ में अबीर। इस प्रकार **गिरिधर** कवि के हृदय की कुटी में विराजमान होली महोत्सव में रमणीय लगने वाले श्रीराम सर्वश्रेष्ठ हो रहे हैं।

**विशेष–** यह गीत अवधी लोक धुन की ढाल में निबद्ध है। इसका बोल है–''होली खेलत रघुवीरा अवध में''।

## गीत संख्या–२

**अद्य सरयूतीरे रामो रमते।।**
**होलीं रामो रमते सुहोलीं रामो रमते।।१।।**
**वसति वसन्ते लसति दिगन्ते सुषमाविजितशतकामो रामो रमते।।२।।**
**सुरभिसमीरे कुटजकुटीरे सुधितसुनीरे घनश्यामो रामो रमते।।३।।**
**सीताकपोले गुलालमबीरं निलिम्पन्निलिम्पललामो रामो रमते।।४।।**
**प्रियादृतीरागरञ्जितवसनाङ्गो भवभयविषयविरामो रामो रमते।।५।।**
**वशन् वसन्तमहोत्सवमानं गिरिधरनयनाभिरामो रामो रमते।।६।।**

**भौमी–** आज श्रीराम सरयू तट पर होली खेल रहे हैं। सुन्दर होली खेल रहे हैं। वसन्त ऋतु के विराजमान रहने पर सम्पूर्ण दिग्दिगन्तों के सुशोभित होते समय अपनी परम शोभा से करोड़ों कामदेवों की शोभा को जीतने वाले भगवान् श्रीराम होली खेल रहे हैं। सुगन्ध वायु से युक्त अमृत के समान जल से सींचे हुए कुटज पुष्प की कुटी में घनश्याम श्रीराम होली खेल रहे हैं। सीता जी के कपोल पर गुलाल और अबीर लगाते हुए देवताओं के रत्न श्रीराम होली खेल रहे हैं। सीताजी की पिचकारी के रंग से प्रभु के अंग और वस्त्र लाल हो गये हैं, ऐसे संसार के भय और विषयों को नष्ट करने वाले श्रीराम होली खेल रहे हैं। वसन्त महोत्सव के सम्मान की इच्छा करते हुए **गिरिधर** कवि के नेत्रों को आनन्द देने वाले श्रीराम होली खेल रहे हैं।

**विशेष–** यह गीत ब्रजभाषा के होली गीत की ढाल में निबद्ध है। इसका बोल है– ''आज विरज में होली रे रसिया''।

## सन्दर्भश्लोकः

**सैरध्वजीदर्शमपारहर्षं सोत्कर्षमाविष्कृतभावतर्षम्।**
**चिक्रीडिषुर्मञ्जुलरागकेलिं रामः प्रियां प्राह रसाभिरामाम्।।१।।**

**भौमी-** सीताजी को निहार कर उत्कर्ष के साथ अपार हर्ष तथा भावतृष्णा को प्रकट करते हुए रंग खेलने की इच्छुक श्रीराम आनन्दमग्न प्राणप्रिया सीताजी से बोले–

## गीत संख्या-३

**होलीकेलौ मा कुरु विलम्बं सीते रसिके।।**
**प्रीते सीते रसिके विनीते सीते रसिके।।१।।**
**दिशि दिशि विलसति सरसवसन्तो विरमय ब्रीडाकदम्बं सीते रसिके।।२।।**
**नृत्यति गायति विबुधवरूथो ऋतुपतिरागकरम्बं सीते रसिके।।३।।**
**सज्जय सुमुखि सुभगशृङ्गारं रचय चिकुरनिकुरम्बं सीते रसिके।।४।।**
**गिरिधरहृदयनिकुञ्जे लसन्ती मया सह वितरावलम्बं सीते रसिके।।५।।**

**भौमी-** हे प्रसन्नरसिक सीते! होली खेलने में विलम्ब मत कीजिये। देख रही है–यह रसीला बसन्त प्रत्येक दिशा में सुशोभित हो रहा है। आज आप अपनी लज्जा का समूह छोड़ दीजिये। देखिये, देवताओं का समूह नाच रहा है और वसन्त सम्बन्धी अनेक राग गा रहा है। हे सुमुखि! सुन्दर शृंगार सजाइये और अपनी चोटी बाँध लीजिये और **गिरिधर** कवि के हृदय निकुञ्ज में मेरे साथ विराजमान होती हुई आप सज्जनों को अवलम्ब दीजिये।

## गीत संख्या-४

**सरयूतटे लसति मधुरहोली सरयूतटे।।**
**एकतो राजति रसिकराघवः एकतो विराजति सीतागौरी सरयूतटे।।१।।**
**उड्डीयते गुलालमवीरं मवति परस्परनयनचोरी सरयूतटे।।२।।**
**सिञ्चत उभौ परस्परमद्भिः सुभगरसेश्वररसमौली सरयूतटे।।३।।**
**उत्सवमिमं गिरिधरो गायति जयति दिव्यदम्पतीहोली सरयूतटे।।४।।**

**भौमी-** आज सरयूजी के तट पर मधुर होली सुशोभित हो रही है। एक ओर रसिक राम सुशोभित हो रहे हैं और एक ओर गौरवर्णा सीताजी विराज रही है। गुलाल और अबीर उड़ रहा है। दोनों एक दूसरे से आँख–मिचौनी कर रहे हैं। नव–दम्पती परस्पर रंग से भिगो रहे हैं। दोनों ही रसिकेश्वर श्रीराम और रसराज शृंगार अद्भुत शोभा प्राप्त कर रहे हैं। इस उत्सव को **गिरिधर** कवि गीत में गा रहे हैं। दिव्य दम्पती की यह होली निरन्तर विराजमान रहे। होली महोत्सव की जय।

**विशेष-** यह गीत बहुप्रचलित होली–गीत के ढाल में बद्ध है। इसका बोल है–

**''मिथिला में आज मची होली''**

## गीत संख्या-५

**होल्यां नहि मर्यादा बन्धो होल्यां नहि।।**
**सीते पश्य लक्ष्मणश्चपलः सङ्कोचस्य न सम्बन्धो होल्यां नहि।।१।।**
**दीव्यति तव देवरस्त्वया सह हसति त्यक्तलज्जाबन्धो होल्यां नहि।।२।।**
**क्षिपति मुखं निरीक्ष्य दृतीरागं लसति विषमरसमनोबन्धो होल्यां नहि।।३।।**
**प्रजावतीमभिषिञ्चति रागैर्गिरिधरगिरिश्रुतनिर्बन्धो होल्यां नहि।।४।।**

**भौमी–**भगवान् श्रीराम सीताजी से कह रहे हैं– देख रही हैं, होली में मर्यादा का कोई बन्धन नहीं रहता। सीते! देखिये। आज लक्ष्मण कितने चञ्चल हो गये हैं। इनके मन में संकोच का कोई सम्बन्ध ही नहीं रहा। आज आपके देवर लक्ष्मण लज्जा का बन्धन छोड़कर आपके साथ होली खेल रहे हैं और हँस रहे हैं। आपके मुख को ही निशाना बनाकर लक्ष्मण पिचकारी से रंग फेंक रहे हैं। आज विषम रस में लक्ष्मण के मन का लगना बहुत अच्छा लग रहा है। **गिरिधर** कवि की वाणी सुनने का ही जिनका हठ है ऐसे कुमार लक्ष्मण अपनी भाभी माँ को रंग से भिगो रहे हैं।

**विशेष–** यह गीत भी हिन्दी में प्रचलित होली गीत के ढाल पर निबद्ध है। इसका बोल है–

''होली में लाज न कर सीते''

## गीत संख्या-६

**दृशि मा क्षिप गुलालं राम विजयतां रसहोली।**
**वदति जनकजासखी किशोरी श्रीराघवमुखचन्द्रचकोरी।।**
**मानय मनोऽभिराम विजयतां रसहोली।।१।।**
**दिशि दिशि विलसति होलीरागः भवति विलोक्य विरागविरागः।**
**विलस सुखं श्रीराम विजयतां रसहोली।।२।।**
**अधिनयनं मे क्षिपसि गुलालं रसिक वितनुषे रसालवालम्।**
**हे नवनीरदश्याम विजयतां रसहोली।।३।।**
**सिञ्चति मां लक्ष्मणोऽप्यभीतः सङ्केतात्तव हासपरीतः।**
**विरमति नहि सुखधाम विजयतां रसहोली।।४।।**
**भ्रुवा निवारय बन्धुमनन्तं होलीमहं विस्तारय सन्तम्।**
**गिरिधरहृदयाराम विजयतां रसहोली।।५।।**

**भौमी–** हे श्रीराम! मेरी आँख में गुलाल मत डालिये। रसमयी होली की जय हो। श्रीराम के मुखचन्द्र की चकोरी श्रीसीताजी की सखी प्रार्थना करके कहती हैं। हे मन को रमाने वाले श्रीराम! मान जाइये। रसमय होली की जय हो। हे सीताजी को रमाने वाले प्रभु! यह होली महोत्सव दिशा-दिशा में सुशोभित हो रहा है। उसे देखकर वैराग्य को भी वैराग्य हो रहा है। आप इस उत्सव में सुखपूर्वक विराजिये। हे मेघवर्णी प्रभु राम! आप मेरे आँखों के बीच गुलाल फेंक रहे हैं। हे रसिकशेखर! आप आनन्द के जन्म स्थल की रचना कर रहे हैं। हे

सुख के मंदिर श्रीराम! देखिये, आपका ही संकेत पाकर परिहास में निपुण लक्ष्मण मुझे रंग से भिगोये जा रहे हैं। शान्त ही नहीं हो रहे हैं। हे **गिरिधर** कवि के हृदय रूप उद्यान में निवास करने वाले प्रभु! आप भौंहों के संकेत से परम सन्त शेषावतार लक्ष्मणजी को मना कर दीजिये और होली महोत्सव का विस्तार कीजिये। रसमयी होली की जय हो।

## गीत संख्या-७

**होल्यामिह नो रोषः कार्यो होल्यामिह।।**
**दिशि दिशि विलसति वशी वसन्तो मधुर विनोदोऽप्यनिवार्यो होल्यामिह।।१।।**
**सङ्क्रीडन्तां कलं देवराः सङ्कोचो न त्वया धार्यो होल्यामिह।।२।।**
**वर्षतु रसो होलिकारूप्यः स किल भवत्या नो वार्यो होल्यामिह।।३।।**
**गिरिधरप्रभ्वनुनीतसीतया होलिकोत्सवः शृङ्गार्यो होल्यामिह।।४।।**

**भौमी-** श्रीराम सीताजी का अनुनय करते हुए कहते हैं– सीते! इस होली में आपको क्रोध नहीं करना चाहिये। देखिये सबको वश में करने वाला यह वसन्त इस समय सभी दिशाओं में सुशोभित हो रहा है। अतः मधुर विनोद भी तो अनिवार्य है। आपके देवर आपके साथ प्रेम से होली खेलें तो आपको संकोच धारण नहीं करना चाहिये। होलिका के कारण प्रशान्त सुन्दर आनंद बरसे। आपको उसे नहीं मना करना चाहिये। इस प्रकार **गिरिधर** कवि के स्वामी मुझ राम द्वारा मनायी हुई सीताजी को भी होली महोत्सव का श्रृंगार करना चाहिये।

## गीत संख्या-८

**होल्यामिह नो लज्जा कार्या होल्यामिह।।**
**सङ्क्रीडेवहि सरयूपुलिने चेतसि नो व्रीडा धार्या होल्यामिह।।१।।**
**स्वच्छन्दं क्रीडन्तु सखायस्त्वया न रसकेलिर्वार्या होल्यामिह।।२।।**
**दिशि दिशि लसतु रसिकसङ्गीतं हृदि प्रीतिस्ते सन्धार्या होल्यामिह।।३।।**
**रञ्जय मामपि दृतीपयोभिः दुस्त्यज भीतिः संवार्या होल्यामिह।।४।।**
**श्रुत्वा मोदं ययौ जानकी स्मिता गिरिधरप्रभुभार्या होल्यामिह।।५।।**

**भौमी-** हे सीते! आपको होली में लज्जा नहीं करनी चाहिये। हम दोनों सरयू के तट पर होली खेलें। हमें किसी प्रकार की संकोच भावना नहीं धारण करनी चाहिए। हमारे मित्र भी स्वच्छन्द होली खेलें। आप इस सरस क्रीड़ा को न रोकें। सभी दिशाओं में रसिक संगीत सुशोभित हो और आप मन में प्रसन्न हों और मुझे भी पिचकारी के रंग भरे जल से भिगो दें। अपने मन का दुस्त्यज भय छोड़ दें। इस प्रकार प्रभु की वाणी सुनकर **गिरिधर** कवि के स्वामी श्रीराम की धर्मपत्नी सीताजी प्रसन्न हुईं और मुस्कुराईं।

## गीत संख्या-९

**विहरतः सीतारामौ सरयूतटे।।**
**अन्योन्यं सिञ्चतो दृतीभिश्चपलाधनगौरश्यामौ।।१।।**

त्याग करते हुए सुखपूर्ण मुख के दर्शन कराते हुए वन को पधार गये, उन्हीं सुखचन्द्र श्रीराम का मंगलमय संदेश सुनाओ। जो राज्य श्रवण से प्रसन्न नहीं हुये और अपने सुख की आहुति स्वरूप वनवास सुनकर दुःखी नहीं हुए, उन्हीं समत्व में स्थित, अपने मुखचन्द्र की कान्ति से चन्द्रमा को भी लज्जित करने वाले, परब्रह्म श्रीराम का सुन्दर संदेश सुनाओ। बैर छोड़कर बैरी भी जिनकी प्रशंसा करते हैं और निषिद्ध आचरण करने वाले स्वेच्छाचारी भी जिनकी निन्दा नहीं करते, उन्हीं लोकोत्तर आनंद को जन्म देने वाली मुस्कान वाले राजचन्द्र श्रीराम का श्रेष्ठ संदेश सुनाओ। जाते हुए श्रीराम ने क्या संदेश दिया और सुख को छोड़कर शोकाकुल लक्ष्मण ने क्या निर्देश दिया और सीताजी ने क्या कहा? यह सब गिरि (**गिरिधर** की वाणी में) उन बालक श्रेष्ठ श्रीराम का दिव्य संदेश सुनाओ।

## सन्दर्भश्लोकः

सुमन्त्रः दशरथं प्रति–

**गच्छन्नावा मुनिपटधरो मैथिलीशेषसध्र्यङ्**
**मध्येगङ्गं गगनकमनः पृष्ठतो भूयभूयः।**
**मां संबोध्य प्रथितयशसः संस्मरंस्तेऽतिनम्रो**
**बाष्पं रुद्ध्वा ननु रघुपतिर्व्राचिकं वक्तुमैषीत्।।१।।**

**भौमी**–हे महाराज! बल्कल वस्त्र धारण करके सीताजी एवं लक्ष्मणजी को साथ लेकर, नाव द्वारा गंगा पार करते हुए, गंगाजी के मध्य में आकर, फिर पीछे मुड़कर, मुझे संबोधित करते हुये, निर्मल यश वाले आपका स्मरण करते हुये, आकाश के सदृश श्याम और गंभीर, अत्यन्त विनम्र रघुकुल के स्वामी, प्रभु राम ने विनम्रतापूर्वक संदेश कहने की इच्छा की।

## गीत संख्या–१९

**वाच्यः पिता मे प्रणामैः सुखदाम प्रणामैः शीलधाम मदीयं कुलकौशलं वने।।**
**भवन्निदेशाद् वनेऽप्युषित्वा यावच्चतुर्दशाब्दम्**
**आयाताश्वो नभोनभस्याविव भूयो वर्षाब्दम्।**
**वाच्यः पिता मे प्रणामैरभिराम मदीयं कुलकौशलं वने।।१।।**
**निष्प्रत्यूहं वने निवासो भविता भवत्प्रसादात् ।**
**मा खिद्येथाः शर्म लभेथा राजन् विरम विषादात्।**
**वाच्यः पिता मे प्रणामैरभिकाम मदीयं कुलकौशलं वने।।२।।**
**भवदाशिषा लक्ष्मणेनाहं समं सीतया साकम्**
**भोजं भोजं मोदिष्ये विपिनेऽपि मूलफलशाकम्।**
**वाच्यः पिता मे प्रणामैराप्तकाम मदीयं कुलकौशलं वने।।३।।**
**भवदाज्ञया सेवमानो निर्मानः प्रखरसमीरम्**

**सुरपतिसदनायिष्येऽहं गिरिधरहृत्पर्णकुटीरम्।**
**वाच्यः पिता मे प्रणामैः पूर्णकाम मदीयं कुलकौशलं वने।।४।।**

**भौमी-** हे सुमन्त्र! प्रणामपूर्वक सुखद बंधन स्वीकारने वाले शील के गुण मेरे पिताजी से वन में मेरा सम्पूर्ण कुशल सुनाना और उनको यह मेरा संदेश दे देना। आपके निर्देश से चौदह वर्षपर्यन्त वन में निवास करके हम दोनों भाई राम-लक्ष्मण उसी प्रकार अयोध्या आ जायेंगे जैसे वर्षाकालीन मेघ के पास सावन-भादों आ जाते हैं। सुमन्त्र! प्रणामपूर्वक मेरे पिताश्री से मेरा सुन्दर कुशल समाचार सुनाना। हे पिताश्री! आपके प्रसाद से हमारा वन का निवास भी निर्विघ्न सम्पन्न होगा। हे महाराज! आप दुःखी न हों, सुख प्राप्त करें और विषाद से विरत हो जायँ। सुमन्त्र! मेरे पिताजी से प्रणाम के साथ मेरे वन का अभिप्सित कुशल समाचार सुनाना। आपके आशीर्वाद से मैं लक्ष्मण और सीता के साथ वन में भी कन्द, मूल, फल, शाक खा-खाकर प्रसन्न रहूँगा। सुमन्त्र! प्रणामपूर्वक मेरे पिताश्री से सम्पूर्ण कामनाओं की पूर्ति के साथ मेरा कुशल समाचार सुना देना। हे पिताश्री! आपकी आज्ञा से मानरहित होकर, कठोर वायु का सेवन करता हुआ, मैं **गिरिधर** कवि के हृदय रूप पर्णकुटी को इन्द्रपुर जैसा मानकर निवास कर लूँगा। सुमन्त्र! प्रणामपूर्वक मेरे पिताश्री को मेरे वन का पूर्ण कुशल समाचार सुना देना।

**विशेष-** यह गीत उत्तरप्रदेश की पूर्वांचल के कहरवा धुन की ढाल में निबद्ध है। इसका बोल है-

**''बाटै रामजी की वाटि अबै बयानिया धनुषिया इनसे कैसे टूटी।''**

## गीत संख्या-२०

**श्रीसीता श्वश्रूः प्रति-**

**वाच्यौ श्वशुरौ वै शुभौ शमत्र भवता मदीयमनामयं विपिने।।**
**भवत्प्रसादादगणयमाना घोरारण्यविपत्तिम्।**
**गतप्रमादा मंस्ये तृणभवनेऽपि सकलसम्पत्तिम्।**
**वाच्यौ श्वशुरौ वै शुभौ समत्र भवता मदीयमनामयं विपिने।।१।।**
**श्वश्रूजनो जनितपरितापो मा भूद् वधूनिमित्तम्।**
**सुखिन्यहं नहि विपत्कलापो मा विषादयतु चित्तम्।**
**वाच्यौ श्वशुरौ शुभौ स्वधर्ममवता मदीयमनामयं विपिने।।२।।**
**पृथिवी कुसुमकोमला पङ्कजपद्भ्यां वनं व्रजन्त्याः।**
**कुटी प्रसादं कुरुते मे प्रासादं सुखं त्यजन्त्याः।**
**वाच्यौ श्वशुरौ शुभौ स्वशीलमवता मदीयमनामयं विपिने।।३।।**
**प्राणेश्वरदेवरदोर्भिः सततं सुरक्षिता सीता।**
**आयातास्मि पुरं पुरहरनयनाब्दे गिरिधरगीता।**
**वाच्यौ श्वशुरौ शुभौ स्वभावमवता मदीयमनामयं विपिने।।३।।**

**भौमी-** श्रीसीता अपने सासुओं के प्रति सुमन्त्र को सन्देश दे रही हैं-हे आदरणीय सुमन्त्र! आपके द्वारा शुभसंकल्पी सासु श्रीकौसल्या और श्वसुर चक्रवर्ती जी से वन में मेरा अनामय (कुशल) कहा जाय। आपके प्रसाद से घोर वन की विपत्ति की कोई चिन्ता न करती हुई मैं सीता प्रमादरहित होकर घास के भवन में भी सम्पूर्ण सम्पत्ति जैसा आनन्द करूँगी। आदरणीय मेरे सासु-ससुर को मेरा अनामय (कुशल) अवश्य सुनाना। हे आदरणीय! मुझ बहू के लिए मेरी सासु जन किसी प्रकार का परिताप अनुभव न करें। मैं इस वन में सुखपूर्वक रह रही हूँ मुझे किसी प्रकार का कष्ट नहीं है। आप लोग अपने चित्त को दु:खी न करें। मंत्रीवर! अपने धर्म की रक्षा करते हुए आप मेरे सासु-ससुर को वनवासी सीता का अनामय (कुशल) सुना देना। कमलचरणों से वन में जाती हुयी मेरे लिए पृथ्वी पुष्प के समान कोमल बन रही हैं और राजमहल का सुख छोड़ती हुई मुझ सीता पर पर्णकुटी भी प्रसन्नता की वर्षा कर रही है। अपने शील की रक्षा करते हुए मंत्रीवर! आप मेरे सासु-ससुर को मुझ अरण्य वाली सीता का अनामय (कुशल) सुना देना। अपने प्राणपति श्रीराघव और देवर लक्ष्मण की भुजाओं से सुरक्षित और **गिरिधर** कवि के गीता का विषय बनी हुयी, मैं सीता पुरहरनयनाब्द अर्थात् शंकर भगवान के नेत्रों की संख्या वाले पन्द्रहवें वर्ष में श्रीअयोध्या आ जाऊँगी। अपने भाव की रक्षा करते हुए मन्त्री-प्रवर! आप मेरे सासु-ससुर से मुझ आरण्यक सीता का अनामय अर्थात् क्षेम कुशल समाचार सुना देना।

## गीत संख्या-२१

सन्देशं श्रुत्वा मुमुर्षुर्महाराजो विलपन्-

**अयोध्यामहह कथं द्रक्ष्यामि।।**
**ऋते रामलक्ष्मणसीताभ्यः पृथग् वाद्यमङ्गलगीताभ्यः।**
**विगतप्रभां श्मशानमहीमिव मृतकोऽहं स्प्रक्ष्यामि।।१।।**
**पुरजनपरिजनमयांश्च पूतान् विकलान् यथा विवर्णान् भूतान्।**
**निरानन्दको भूतराज इव भुवि भूत्यै वक्ष्यामि।।२।।**
**नारीगिरा प्रवास्य पुत्रकान् निरागसो धृतधर्मसूत्रकान्।**
**निरंहसो लोकान् प्रदिधक्षुर्प्रलयाग्निं स्त्रक्ष्यामि।।३।।**
**वितथमनोरथमिमं दशरथं हा हा धिङ् नरनाथ कापथम्।**
**गिरिधरप्रभुमविलोक्य लोलधी: कान् लोकान् प्रक्ष्यामि।।४।।**

**भौमी-** सन्देश सुनकर मरणासन्न महाराज विलाप करते हुए-अहह! मैं अब अयोध्या को कैसे देखूँगा? श्रीराम, लक्ष्मण, सीताजी के बिना बाद्य और मंगल गीतों से विहीन शोभारहित, इस पुरी को श्मसान भूमि की भाँति मैं आसन्न मरण स्पर्श करूँगा। अरे पवित्र पुरजनों और परिजनों को विवर्ण व्याकुल भूतों के समान देखता हुआ मैं आनन्द से रहित भूतराज शिव की भाँति इस पृथ्वी पर केवल मुर्दे की राख ढोऊँगा। अरे! केवल कैकेयी के कहने से निरपराध धर्मसूत्र धारण करने वाले अपने पुत्रवधू-सीता एवं दोनों पुत्रों राम-लक्ष्मण को वनवास देकर निरपराध समस्त प्राणियों को जलाने का इच्छुक मैं प्रलयाग्नि की रचना करूँगा। अरे! भ्रष्ट

मनोरथ कुत्सित शासक मुझ दशरथ को धिक्कार है, धिक्कार है। हाय-हाय **गिरिधर** कवि के स्वामी श्रीराम को न देखकर मैं किससे क्या पूछूँगा, कौन बतायेगा मुझे श्रीराम कहाँ हैं?

## गीत संख्या-२२

**त्यजसि किमु मां पितरं हे नाथ।।**
**केनागसा विहाय ह्रीमतीं भुवं प्रियामिव श्रियं श्रीमतीम् ।**
**विरहसागरे तातं क्षिप्त्वा क्षिपसि जनान् श्रीनाथ।।१।।**
**सरयूं किं युञ्जन्न दूयसे विरहपीडया किं न दीयसे।**
**क्वापि लीयसे निविडनिकुञ्जे रसिकराज सीतानाथ।।२।।**
**हा हा राम राम रणरोचन हा पितृवत्सल मम ऋणमोचन।**
**हा हा नवराजीवविलोचन भयमोचन नरनाथ।।३।।**
**हा सीतावर राघव रघुवर हा गिरिधरचातकनवजलधर।**
**क्वासि यासि हा कुत्र धनुर्धर रामभद्र रघुनाथ।।४।।**

**भौमी-** हे नाथ! मुझ पिता को क्यों छोड़ रहे हैं? किस अपराध से शोभा सम्पन्न लज्जावती प्रिया की भाँति पृथ्वी और राज्य लक्ष्मी को छोड़कर विरह-सागर में मुझ पिता दशरथ को डालकर सभी लोगों को छोड़ रहे हैं? हे रसिक शिखर सीतापति! सरयूजी को विरह की पीड़ा से युक्त करते हुए आप क्यों नहीं दुःखी हो रहे हैं और क्यों नहीं पीड़ा का अनुभव कर रहे हैं? आप किस वन (निविड़) निकुंज में छिप गये हैं? परशुराम को भी युद्ध में प्रसन्न करने वाले, हा मुझ पिता पर वात्सल्य करने वाले, हा मेरा ऋण भार उतारने वाले, हा मेरे राजीव लोचन, हा मनुष्यों के नाथ, हा भयमोचन, हा सीतावर, हा राघव, हा रघुबर, हा **गिरिधर** चातक के नवीन बादल, हे धनुर्धर, हे रामभद्र, हे रघुनाथ! आप कहाँ हैं, आप कहाँ जा रहे हैं?

## सन्दर्भश्लोकः

**इत्थमयं विलपन्नजपुत्रो नासहमान उदूढवियोगम्।**
**श्रीरघुचन्द्रमसो व्यरमद्धा जीवनतो ननु मङ्गलभूत्यै।।१।।**

**भौमी-**इस प्रकार श्रीरघुकुल के चन्द्रमा राघवजी के उद्दीप्त वियोग को न सहते हुये नाना प्रकार से विलाप करते हुए अज महाराज के पुत्र दशरथ जी मंगल-विभूति के लिए अपने जीवन से विरत हो गये, अर्थात् प्रभु के स्मरण में प्राण छोड़कर मरण को मंगलमय बना लिया।

## सन्दर्भश्लोकः

**मृते महीपे विरहे खरद्विषो**
**रुदत्यशेषे भुवने सकोसले।**

जना विलेपुर्नयनाश्रुधारया
धरामिवार्द्रां सकलां विधित्सवः।।१।।

**भौमी–**इस प्रकार प्रभु श्रीराम के वियोग में महाराज के प्राण त्याग देने पर अयोध्यासहित सम्पूर्ण संसार के रो–रोकर करुणा में मग्न हो जाने पर, सम्पूर्ण पृथ्वी को अपनी अश्रुधारा से गीली करने की इच्छा करते हुए से लोग विलाप करने लगे।

## गीत संख्या–२३

राज्यं को नु चालयेत भद्रं भरतं विना।
भद्रं भरतं विना भ्रातरं भरतं विना।
अस्मान् कः सम्भालयेत भद्रं भरतं विना।।१।।
कान्तालका गताः कान्तारं राघवलक्ष्मणसीताः।
सहमाना वनकृच्छ्रमपारं राज्ञो वचः प्रतीता।
लोकान् को नु लालयेत भद्रं भरतं विना।।२।।
जातो रामराजरसभङ्गो दूरः स्वाहाकारः।
कुहू निशा दिशि विदिशि तमिस्रा क्रूरो हाहाकारः।
दीपं को नु ज्वालयेत भद्रं भरतं विना।।३।।
कैकय्या वञ्चितो नरपतिश्चक्रेऽमरपुरियानम्।
विधवा सर्वा राजमातरो जातं पुरं श्मशानम्।
धर्मं को नु पालयेत भद्रं भरतं विना।।४।।
किंकर्तव्यविमूढा गुरवः सचिवा जनाः सुजन्यः
कौसल्याप्रमुखा विलपन्ति विषण्णा रामजनन्यः।
विश्वं कः सुकालयेत भद्रं भरतं विना।।५।।
भ्रातृत्वं भक्तिं प्रेमाणं कः शिक्षयेत जगत्याम्
गिरिधरसदृशान् कोटिवैष्णवान् को दीक्षयेत प्रपत्त्याम्।
नियमं को निभालयेत भद्रं भरतं विना।।६।।

**भौमी–** भद्र–भरत के बिना, भैया भरत के बिना यह राज्य कौन चला सकेगा? भैया भरत के बिना हम सबको कौन संभालेगा? महाराज दशरथजी के वचन पर विश्वास करके, वन का अपार कष्ट सहन करते हुए, सुन्दर केशों वाले राम–लक्ष्मण–सीता वन को पधार गये। अब भरत–भद्र के बिना इस लोक का लालन–पालन कौन करेगा? श्रीराम का राज्य रस–भंग हो गया अर्थात् राज्याभिषेक में विघ्न पड़ गया। स्वाहाकार अर्थात् यज्ञ बहुत दूर चला गया। अमावस्या की रात आ गयी। दिशाओं और विदिशाओं में अंधकार छा गया। सर्वत्र क्रूर हाहाकार मच गया है। अहो! अब भैया भरत के बिना दीपक कौन जलाये? कैकेयी से ठगे हुये

महाराज दशरथ ने तो इन्द्रलोक में प्रयाण कर लिया और सभी राजमाताएँ विधवा हो गयीं। अयोध्या श्मसान बन गयी, अब बिना भरत-भद्र के धर्म का पालन कौन करेगा? आज गुरुजन, मंत्रीजन, अवध के पुरुषगण और महिलाएँ सभी किंकर्तव्यविमूढ़ हो गये हैं और कौसल्या आदि सभी श्रीराम-माताएँ व्याकुल होकर रो रही हैं। अरे! भावते भरत के बिना इस संसार को दुष्काल से कौन दूर करे? भातृत्व-भक्ति और प्रेम की संसार में कौन शिक्षा देगा और **गिरिधर** कवि जैसे करोड़ों वैष्णवों को प्रपत्ति में कौन दीक्षित करेगा? भरत-भद्र के बिना नियम का पालन कौन करेगा?

**विशेष-** यह गीत ''रजिया कौन अब चलावे भैया भरत के बिना।'' इस गीत की ढाल में निबद्ध है।

## सन्दर्भश्लोकः

**अथानयन् वीशजविष्ठभृत्या मातामहावासत ईड्यकीर्तिम् ।**
**भ्रात्रा समेतं भरतं निकेतं वायुर्यथामोदमरण्यदेशम्।।१।।**

**भौमी-**इसके अनन्तर गरुड़ 'वीश' अर्थात् गरुड के समान वेगशाली धावक दूत ननिहाल से भाई शत्रुघ्न के साथ पवित्र कीर्तिवाले श्रीभरत को उसी प्रकार श्रीअवध ले आये, जैसे वायु सुगन्ध को वन प्रदेश में ले आता है।

## गीत संख्या-२४

**भरतः कैकयीं प्रति-**

**जननि वद कुत्र ममास्ते रामः।**
**क्वास्ते नृणां प्राणप्रियतमस्त्रिभुवनललितललामः।।१।।**
**क्वास्ते प्रत्यगात्मसर्वस्वं तनुरुचिजितशतकामः।**
**क्वास्ते सीतानयनचकोरचन्द्रमाः सततमकामः।।२।।**
**क्वास्ते दशरथमञ्जुमनोरथरथरथिको निष्कामः।**
**क्वास्ते भरतजीवजीवातु पतितपावनगुणग्रामः।।३।।**
**क्वास्ते भारतवर्षप्रजाजनशस्यनीरदः श्यामः।**
**क्वास्ते लक्ष्मणमूर्तभाग्यमिह कविगिरिधराभिरामः।।४।।**

**भौमी-** ननिहाल से आये हुए भरत कैकेयी से पूछते हैं-हे माँ! बताओ, मेरे भैया राम कहाँ हैं? मनुष्यों के प्राणों के प्रियतम तीनों लोकों के सुन्दर-रत्न श्रीराम कहाँ हैं? हे माँ! अपनी शरीर शोभा से अनेक कामों को जीतने वाले जीवात्माओं के सर्वस्वरूप श्रीराम कहाँ हैं? सीताजी के मित्र चकोरों के चन्द्रमा तथा निरन्तर काम-वासनाओं से बहुत दूर श्रीराम कहाँ हैं? चक्रवर्ती दशरथजी के मनोरथरूप रथ के रथी निष्काम श्रीराम कहाँ हैं और जिनका गुणग्राम पतितपावन है ऐसे मुझ भरत की जीवात्मा की औषधि स्वरूप श्रीराम कहाँ हैं। भारतवर्ष की प्रजारूप खेती के नीले बादल श्रीराम कहाँ हैं और लक्ष्मण जी के मूर्तिमान भाग्यस्वरूप तथा **गिरिधर** कवि को आनन्द देने वाले मेरे प्रभु राम कहाँ हैं?

## गीत संख्या-२५

**कैकेयी भरतं प्रति-**

**अलं ते परिदेवनया पुत्र विपिनमभियातो वै रामः।**
**समाश्वसिहि त्वं श्रितसुखसूत्र विहितभयधातो वै रामः।।**
**पिता तेऽचिरं गतः स्वर्गं तृणीकृतमागतमपवर्गं यथा स्वं भुक्तं त्रैवर्गम्।**
**रामविरहेण सदा सुसहेन कष्टनिवहेन भवात् परिपातः परिणामः।।१।।**
**त्वदर्थं कोसलपुरराज्यं समाप्नुहि पुत्रक वै राज्यं भुङ्क्ष्व निष्कण्टकसत्प्राज्यम्।**
**भयं परिहाय व्यथां च विहाय चिरस्य सुखाय मया सन्त्रातस्त्वं श्यामः।।२।।**
**प्रोषितेऽरण्यं रघुवीरे सानुजे वसितवल्कचीरे जनकतनयासहिते धीरे।**
**सुखी भव तात प्राप्तसुविभात भुवनविख्यात सुखेनायातः स्वारामः।।३।।**
**गिरिधरेशे दूरं याते गते त्रिदिवं वै त्वत्ताते विदेशात् भवति समायाते।**
**मुहुर्हृष्यामि मनसि मृश्यामि मनाक् क्लिश्यामि सुदूरं यातः सङ्ग्रामः।।४।।**

**भौमी-** अब कैकेयी भरत जी से कहती हैं-हे पुत्र! यहाँ तुम्हारा विलाप व्यर्थ है, क्योंकि राम तो वन को जा चुके हैं। हे सुख के सूत्रों का आश्रय करने वाले पुत्र! तुम समास्वस्त हो जाओ, क्योंकि रामजी ने तुम्हारे भय का भी घात कर दिया है अर्थात् तुम्हें निर्भय करके निष्कंटक राज्य देकर वे वन को चले गये हैं। हे बेटे! तुम्हारे पिताश्री मर्यादा के अनुसार त्रैवर्ग अर्थात् अर्थ, धर्म,काम का उपभोग करके आये हुए मोक्ष को तिनके के समान ठुकराकर निरन्तर असहनीय कष्ट से युक्त राम विरह के कारण शरीर छोड़कर अभी-अभी स्वर्ग को पधार गये हैं और मैंने परिणाम की संसार के विघ्नों से रक्षा कर ली है। यह अयोध्या का साम्राज्य तुम्हारे लिए है। हे पुत्र! इसको स्वीकारो। हे पुत्र! भय छोड़कर व्यथा को दूर करके, इस निष्कंटक धन-धान्यपूर्ण राज्य का भोग करो। मैंने चिरकालीन सुख के लिए श्यामवर्ण वाले तुम भरत की रक्षा कर दी है। वल्कल वस्त्र धारण किये हुये छोटे भाई लक्ष्मण सहित जनकनन्दिनी सीता के साथ परमधीर रघुबीर श्रीरामजी के वन में भेज दिये जाने पर, हे भुवन में प्रसिद्ध जीवन का स्वर्णिम प्रभात प्राप्त करने वाले भरत! अब तुम सुखी हो जाओ। आत्मीयों का यह उद्यान अर्थात् मंगलमय बगीचा तुम्हारा राज्य-वैभव, सुखपूर्वक तुम्हें प्राप्त हो गया। इस प्रकार **गिरिधर** कवि के प्रभु श्रीराम के दूर चले जाने पर तुम्हारे पिता के स्वर्गवासी हो जाने पर और विदेश से तुम्हारे आ जाने पर मैं बहुत प्रसन्न हो रही हूँ। बार-बार विचार कर रही हूँ, तुम्हारी पिता की मृत्यु पर थोड़ी दुःखी हो रही हूँ, पर कोई बहुत बड़ी बात नहीं है, जन्म लेने वाले के लिए तो मृत्यु अनिवार्य है। हर्ष की बात यह है कि संग्राम अर्थात् युद्ध दूर चला गया। तात्पर्य कि बिना रक्तपात के ही तुम्हें राज्य प्राप्त हो गया।

## गीत संख्या-२६

**भरतः कैकयीं प्रति-**

**कैकयि त्वं किमकार्षीः कष्टं विना रामं सकलं नष्टम्।**
**कुमतभ्राष्ट्रे मम कं भ्रष्टं विना रामं सकलं नष्टम्।।१।।**

**गतो विपिनं ज्येष्ठभ्राता स्वनुजवनिताभ्यां सत्त्राता सकलसुरनरमुनिसुखदाता।**
**अयोध्याधाम्नि सुपावननाम्नि महार्घ्यललाम्नि दुर्जरामयं समादिष्टम्।।२।।**
**गतस्त्रिदिवं विलपंस्तातः अमर्षोत्कर्षः सञ्जातः हर्षसंहर्षोऽप्यायातः।**
**कलङ्काकुलं विपत्सङ्कुलं व्याकुलं कुलं भयं सन्निरयं निर्दिष्टम् ।।३।।**
**न वा भवितासि राजमाता दुर्गतिं गमितास्यख्याता पतिघ्नी पापमयी जाता।**
**माममारयो न वा वारयो सते धारयो विषादं देवैः संसृष्टम्।।४।।**
**अदृष्ट्वा गृहे गिरिधरेशं न सोढुं क्षमे बहुक्लेशं यीथाशुर्द्रुतं जीवितेशम्।**
**निजं स्वच्छामि स्वकं यच्छामि वनं गच्छामि जनकजादयितसमाश्लिष्टम्।।५।।**

**भौमी-** अब भरत जी कैकेयी से कहते हैं। अरे कैकेयी! तुमने यह क्या कष्ट उपस्थित कर दिया? बिना राम जी के सब कुछ नष्ट हो गया। तुम्हारे कुत्सित भय के भाड़ में मेरा सम्पूर्ण सुख जल भुन गया। सभी देवता मनुष्यों को सुख देने वाले प्राणियों के रक्षक मेरे ज्येष्ठ भ्राता श्रीराम, भाई लक्ष्मण और धर्मपत्नी सीताजी के साथ वन चले गये। बहुमूल्य रत्नों से युक्त पवित्र नाम वाले अयोध्याधाम में तुमने कभी न नष्ट होने वाले रोग को ही आदेश देकर उपस्थित कर दिया। मेरे पिताश्री रोते-रोते स्वर्ग चले गए। यहाँ क्रोध का उत्कर्ष हो गया और हर्ष का संघर्ष आया, अर्थात् इस घटना ने हर्ष को कुचल दिया। कैकेयी यह कुल कलंक से युक्त हो गया, विपत्ति में डूब गया और व्याकुल हो गया, हमारे लिए नरक और भय निर्दिष्ट हो गया। तुम राजमाता नहीं होने वाली हो, तुम कुख्यात होकर दुर्गति को प्राप्त होगी और तुम पति की हत्यारिन और पापिनी हो गयी हो। तुमने मुझे मार डाला और तुमने रोका भी नहीं और सन्तों के लिए देवताओं से निर्दिष्ट कष्ट उपस्थित कर दिया। भवन में **गिरिधर** कवि के स्वामी श्रीराम को न देखकर मैं बहुत क्लेश सहन नहीं कर सकूँगा। इसलिए अब मैं अपने जीवन के ईश्वर श्रीराम के शरणों में जाने को इच्छुक हो रहा हूँ। मैं अपने को स्वच्छ करूँगा और अपना सब कुछ प्रभु को अर्पित कर दूँगा और जनकनन्दिनी सीताजी के प्राणधन श्रीराम के द्वारा समालिङ्गित श्रीचित्रकूट वन को जाऊँगा।

## गीत संख्या-२७

**अरे अरे केकयकुलपांशिनि दूरं मत्तो दूरं याहि।**
**केकयि यावन्मम दृष्टिरत्र मूर्च्छति ततोऽपि विदूरं याहि।।१।।**
**अरे अरे केकयनृपक्रन्दिनि दूरं मत्तो दूरं भव।**
**केकयि यावदत्र जीवति भरतो न तावत्त्वया भाषिष्यते।।२।।**
**अरे अरे भानुवंशघातिनि दूरं मत्तो दूरं व्रज।**
**केकयि निलीयस्व क्वचिद् गहनकुञ्जे न भरतो दिदृक्षते।।३।।**
**अरे अरे पतिप्राणपातिनि दूरं मत्तो दूरं गच्छ।**
**केकयि गिरिधरप्रभुपदसेवको भरतो न तव सुतः।।४।।**

**भौमी-** हे केकय कुल की कलंकिनी! अब दूर जाओ, मुझसे दूर जाओ। कैकेयी! जहाँ तक मेरी दृष्टि

जा रही है। वहाँ से भी दूर जाओ। हे कैकेयी! कुल को क्रन्दित करने वाली कैकेयी तुम मुझसे दूर हो जाओ और कैकेयी जब तक यह भरत जीवित रहेगा, तब तक तुमसे भाषण नहीं करेगा और सूर्यकुल को नष्ट करने वाली कैकेयी मुझसे दूर जाओ, दूर जाओ। कैकेयी किसी झाड़ी में छिप जाओ, भरत तुम्हें नहीं देखना चाहता। अरे पति के प्राणों को नष्ट करने वाली कैकेयी! मुझसे दूर जाओ, दूर जाओ। कैकेयी **गिरिधर** कवि के प्रभु श्रीराम के चरणों का सेवक भरत तुम्हारा बेटा नहीं है।

## गीत संख्या-२८

**अरे अरे कोसलपुरो गावो विदूरं यान्तु दूरं यान्तु।**
**गावः पथानेन रामो वनं यातो भवत्यो न न्यवारयन्त।।१।।**
**अरे अरे वनमार्गदूर्वा विशुष्यन्तु विशुष्यन्तु।**
**दूर्वाः पथानेन रामो वनं यातो भवत्यो न न्यबन्धयन्त।।२।।**
**अरे अरे वनवृक्षलतिका भवत्यो भष्मभूता सन्तु।**
**लतिकाः पथानेन रामो वनं यातो भवत्यो न न्यषेधन्।।३।।**
**अरे अरे निष्ठुरविधातः कं भरतो विक्रोशतु।**
**यो वै गिरिधरस्वामिनमपश्यन् सुखेन पापी जीवति।।४।।**

**भौमी-** हे अयोध्यापुर की गौवों! दूर चली जाइये, दूर चली जाइये। गौएँ इसी मार्ग से श्रीराम वन को गये और आप लोगों ने भी नहीं रोका। अरे-अरे वन मार्ग की दूर्बाओं (घास)! तुम सूख जाओ, सूख जाओ। दूर्बाओं, इसी मार्ग से श्रीराम वन को गये और आप लोगों ने भी चरणों में लपेटकर उन्हें नहीं रोका। अरे-अरे वन की लताओं, तुम जल जाओ जल जाओ। लताओं, इसी मार्ग से श्रीरामजी वन को गये और आप लोगों ने भी नहीं रोका। अरे निष्ठुर विधाता! भरत किसको कोसे। जो पापी भरत **गिरिधर** के प्रभु श्रीराम को न देखता हुआ भी सुख से जी रहा है।

**विशेष-** ये दो गीत अवध की एक आँचलिक लोक धुन की ढाल में निबद्ध है। उसका बोल है- ''अरे अरे बनवों की गैया तुम दूरी फराके जाहु गैया, यहि वन राम मोर गइले तुहहु न बरजलू।''

## सन्दर्भश्लोकः

**अथ विधिवदनुज्ञां प्राप्य संस्कृत्य तातम्**
**नलिनजननसूनोर्बाष्पसंक्लिन्ननेत्रः ।**
**अधिसभमृषिवर्यै राज्यकार्ये नियुक्तो**
**भरत इदमवोचत् प्राञ्जलिः सर्वसभ्यान्।।१।।**

**भौमी-**इसके अनन्तर कमलजन्मा ब्रह्माजी के पुत्र वसिष्ठजी की आज्ञा पाकर पिताश्री दशरथ का विधिवत संस्कार करके ऋषिगणों द्वारा राज्य में नियुक्त किये हुये भरतजी नेत्रों में अश्रु भरकर हाथ जोड़कर सम्पूर्ण सभासदों से राजसभा में इस प्रकार बोले।

## गीत संख्या-२९

भरतः पौरान् प्रति-

**अथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।**
**श्लथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।।**
**यथा देहं विना प्राणं यथा गेहं विना त्राणम्।**
**तथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।।१।।**
**यथा ज्वालां विना दीपं यथाऽम्मालां विना द्वीपम्।**
**तथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।।२।।**
**यथा पीवा विना शक्तिं यथा जीवा विना भक्तिम्।**
**तथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।।३।।**
**अतो गत्वा वनं गिरिधरप्रभुं भक्त्या भजिष्येऽहम्।**
**वृथाऽयोध्यामवन् भरतो विना रामं करिष्ये किम्।।४।।**

**भौमी-** अब भरत नगरवासियों के प्रति कहते हैं। अब मैं भरत बिना रामजी के इस अयोध्या की रक्षा करता हुआ भी क्या कर लूँगा? मैं भरत इस शिथिल अयोध्या को मूर्तरूप देता हुआ भी बिना श्रीराम के क्या करूँगा? जैसे प्राण के बिना शरीर, जैसे रक्षक के बिना घर, उसी प्रकार श्रीराम के बिना इस अयोध्या को प्राप्त करके भी मैं क्या करूँगा? जिस प्रकार ज्वाला के बिना दीपक और जिस प्रकार जल की तरंग, अम्भाला के बिना द्वीप (टापू), उसी प्रकार बिना श्रीराम के इस अयोध्या का पालन करता हुआ भी मैं क्या करूँगा? जिस प्रकार स्थूल शरीर वाला व्यक्ति बिना शक्ति के निरर्थक, और भक्ति के बिना जीव उसी प्रकार श्रीराम के बिना मैं भरत अयोध्या को पालता हुआ भी क्या करूँगा? इसलिए अब वन जाकर मैं **गिरिधर** कवि के प्रभु श्रीराम की भक्ति से भजन करूँगा। क्योंकि श्रीराम के बिना इस व्यर्थ अयोध्या का रक्षण करता हुआ भी मैं क्या करूँगा?

**विशेष-** इस गीत में प्रयुक्त 'भजिष्ये' शब्द निश्चित रूप से वैयाकरणों के लिए विस्मयाष्पद हो सकता है क्योंकि 'भज्' धातु अनिट् कारिका में पढ़े जाने के कारण इट् भिन्न होने से ऌट् लकार में भी इट् से रहित ही रहेगा और वहाँ भक्ष्ये प्रयोग बनेगा। जबकि मैंने जानबूझकर भजिष्ये शब्द का प्रयोग किया है यह अपाणिनीय नहीं है और न ही पाणिनीय व्याकरण से विरुद्ध है, यहाँ भज् धातु से भाव से अच् प्रत्यय करके पुनः आचार में क्विप् प्रत्यय करके पुनः कर्म व्यतिहार में आत्मने पद करके ऌट् लकार उत्तम पुरुष एकवचन में 'भजिष्ये' पद निष्पन्न हो जायेगा। व्युत्पत्ति इस प्रकार होगी- भजनं भजः भजं करिष्ये इति भजिष्ये। यदि कर्म में अच् प्रत्यय करें तो भज्यते इति भजः। भजं करिष्ये अर्थात् भजनं विषयम् करिष्ये इति भजिष्ये। इसी प्रकार अव धातु के अनेक अर्थो के कारण मैंने इस गीत में छः बार अयोध्यामवन् शब्द का प्रयोग करके यमक अलङ्कार प्रस्तुत किया है।

## गीत संख्या-३०

अन्यच्च-

यथा शर्वरी सर्वशोचिः प्रहीणा, यथाऽशाऽम्बरी चण्डरोचिर्विहीना।
यथा सुन्दरी नायकेनाथहीना, तथैवान्तरा राघवं रौत्ययोध्या।।१।।
यथा भामिनी भग्नधम्मिल्लभाला, यथा यामिनी कापि कुह्वां कराला।
यथा दामिनी दूरवारिदरसाला, तथैवान्तरा राघवं रौत्ययोध्या।।२।।
यथोषा विना नोरुसूतप्रकाशं, यथैन्द्री विना दिक्दिनेशार्यहासम्।
यथा देवभाषा विना शब्दकाशं, तथैवान्तरा राघवं रौत्ययोध्या।।३।।
यथा सत्तनुः प्राणवर्जं विवर्णा, यथा सन्मनुर्नष्टमन्त्रार्यवर्णा।
यथा सज्जनुर्जातसाङ्कर्यकर्णा, तथैवान्तरा राघवं रौत्ययोध्या।।४।।
ततश्चित्रकूटं वयं भो व्रजाम, प्रयत्नैः कुकूटं त्रिकूटं त्यजाम।
गिरा गिरिधरस्यापि गीतं सृजाम, सदैवान्तरा राघवं रौत्ययोध्या।।५।।

**भौमी-** और भी–जैसे रात्रि सर्व अर्थात् शंकर जी को भी प्रकाश देने वाले चन्द्रमा से रहित होकर नहीं शोभित होती। जिस प्रकार आशा अम्बर अर्थात् आकाश दिशा सूर्यनारायण से रहित होकर अशोभनीय लगती है। जिस प्रकार सुन्दरी महिला पति के बिना अशुभ लगती है उसी प्रकार श्रीराम के बिना यह अयोध्या रो रही है। जिस प्रकार महिला सिन्दूर या बिंदिया के बिना सुन्दर नहीं लगती और जिस प्रकार अमावस्या को पाकर रात्रि भयंकर लगती है जिस प्रकार बरसाती मेघ के बिना बिजली अर्थहीन होती है उसी प्रकार मेरे राघव के बिना अयोध्या रो रही है। जिस प्रकार प्रभात बेला अरुण के प्रकाश के बिना भयंकर लगती है जिस प्रकार सूर्यनारायण के मुस्कान के बिना पूर्व दिशा भयंकर लगती है जिस प्रकार देवभाषा व्याकरण बोध के बिना शोभा नहीं पाती, उसी प्रकार राघवजी बिना यह अयोध्या रो रही है। जिस प्रकार प्राण के बिना सुन्दर शरीर विवर्ण हो जाता है जिस प्रकार श्रेष्ठ मन्त्र स्वर और वर्ण के बिना निस्तेज हो जाता है और जिस प्रकार सुन्दर जाति वर्ण-सांकर्य से नष्ट हो जाती है, उसी प्रकार यह अयोध्या राघवजी के बिना रो रही है। इसलिए हे सभासदों! अब हम चित्रकूट चलें और प्रयत्न करके इस कपट के कूट त्रिकूट को छोड़ दें और **गिरिधर** कवि की वाणी में प्रभु श्रीराम के गीतों को रच-रचकर गायें। राघव के बिना यह अयोध्या सदैव रोती रहेगी, अतः इसे प्रसन्न करने के लिए श्रीराघव को लायें और भविष्यत् काल में भी श्रीराम का उन्हीं की जन्मभूमि पर भव्य मंदिर बनायें।

## गीत संख्या-३१

भरतो मार्गवासिनः प्रति-

दीनबन्धुर्धुन्वन्धनुः केनापि मम रामो दृष्टः।
कृपासिन्धुर्धुन्वन्धनुः केनापि सीतारामो दृष्टः।।

सीतालक्ष्मणानुचरो जटाजूटधारी केन पथा गतो मम दण्डकविहारी।
दण्डेन दाम्यद्दनुः केनापि पूर्णकामो दृष्टः।।१।।
कटिलसन्मुनिपटः काण्डचण्डचापः सनिषङ्गो गतसङ्गो द्युमणिप्रतापः।
दृढव्रत प्रसीदन्मनुः केनापि लोकरामो दृष्टः।।२।।
अनुपानम्पादपद्मोऽप्यञ्चन्भूमिभागं मण्डयन्नमण्डनोऽपि सज्जनानुरागम्।
गुणैः परिरञ्जयन् जनुः केनापि जनारामो दृष्ट।।३।।
तमालः प्रदर्शयतु सुतमालनीलं रसालो निदर्शयतु रसरम्यशीलम्।
नवकन्दतुल्यत्तनुः केनापि श्यामाश्यामो दृष्टः।।४।।
कोला भिल्ला भणत भणत रघुवीरं श्रितगिरिधरकविसुमनःकुटीरम्।
छविजिततपनसूनुः केनापि स्वाभिरामो दृष्टः।।४।।

**भौमी**–भरतजी मार्गवासियों से पूछ रहे हैं–हे मार्गवासियों! तुम में से किसी ने धनुष को फेरते हुए दीनबन्धु श्रीराम को देखा है। तुममें से किसी ने धनुष को घुमाते हुए श्रीराम को देखा है। श्रीसीता एवं श्रीलक्ष्मण जिनके अनुचर हैं, ऐसे पीताम्बरधारी दण्डकबिहारी मेरे श्रीराम किस मार्ग से गये हैं? दण्ड से दनुवंशियों का दमन करने वाले मेरे श्रीराम को तुममें से किसी ने देखा है। कटि तट पर बल्कल वस्त्र धारण किये हुए, हाथ में बाण और भयंकर धनुष लिये हुये तरकश धारण किये हुए, आसक्तिरहित सूर्य के समान प्रतापी अपने दृढ़ व्रत से मनु को भी प्रसन्न करने वाले ऐसे लोकाभिराम श्रीराम को तुममें से किसी ने देखा है? चरणकमल में पदत्राण न पहने हुए पृथ्वी पर चलते हुए, आभूषण रहित होकर भी सज्जनों के स्नेह को सुशोभित करते हुए और अपने गुण से मानव जन्म को सुखी करते हुए, भक्तों को आनन्द करने वाले श्रीराम को तुममें से किसी ने देखा है? हे तमाल वृक्ष! आप तमाल नील श्रीराम के दर्शन करा दीजिए। हे आम्र! आनन्द से रमणीय स्वभाव वाले श्रीराम का निदर्शन अर्थात् संकेत करा दीजिए। नवीन मेघ के समान श्याम–विग्रह श्रीराम को तुममें से किसी ने देखा है। हे कोल भीलों! **गिरिधर** कवि के मनरूप कुटीर में विराजमान श्रीराम के विषय में बताओ, बताओ। अपनी छवि से सूर्यपुत्र अश्विनी कुमारों को जीतने वाले आत्मीय जनों को रमाने वाले श्रीराम को तुममें से किसी ने देखा है।

## गीत संख्या–३२

**कोलकिराताः श्रीभरतं प्रति–**

मनसि धर धैर्यं राजकुमार।।
न चिराद् द्रक्ष्यसि सीतारामौ तनुसुषमाजितशतरतिकामौ।
स्रक्ष्यसि परमानन्दजनितनयनाश्रुस्रजं सुकुमार।।१।।
न चिराद् द्रक्ष्यसि पर्णकुटीरं परिमण्डितमन्दाकिनीतीरम्।
चित्रकूटकाननकमनीयसमीरं सज्जनहार।।२।।

न चिराद् भद्र भरिष्यसि भावं ललितलक्ष्मणे हतदवदावम्।
न चिरात् परिरप्स्यसे सुमित्रासुतं सुजनशृङ्गार।।३।।
न चिरान् मैथिलीचरणसरोजे परिलुण्ठिष्यसि मथितमनोजे।
सीताकरसरसिजस्पर्शसुखमेष्यसि परमोदार।।४।।
न चिरात्त्यक्ष्यसि विरहजतापं गिरिधरेशपदहतपरितापम्।
भरत गीतसीताभिरामहृदि विहर सदा सुखसार।।५।।

**भौमी-** अब कोल-किरात श्रीभरत के प्रति कह रहे हैं-हे राजकुमार! आप मन में धैर्य धारण कीजिए। हे भरत-भद्र! आप शीघ्र ही अपनी शोभा से करोड़ों कामों को जीतने वाले सीतारामजी के दर्शन करेंगे और हे सुकुमार! आप बहुत शीघ्र ही श्रीराम दर्शन से उत्पन्न परमानन्द से उदभूत आँसुओं की माला का भी सृजन करेंगे। हे सज्जनों के हार! आप शीघ्र ही चित्रकूट वन के कमनीय वायु से युक्त मन्दाकिनी के अलंकार स्वरूप श्रीराम के पर्णकुटीर के दर्शन करेंगे। हे सज्जनों के शृंगार भरतजी! संसार के आचार्य श्रीलक्ष्मण पर भव-दावाग्नि को नष्ट करने वाला दिव्य-भाव दर्शन आप शीघ्र धारण करेंगे और शीघ्र ही सुमित्रा पुत्र लक्ष्मण का आलिंगन भी करेंगे। हे परम उदार भरतजी! आप शीघ्र ही कामवासना को नष्ट करने वाले सीताजी के चरणकमल पर लोटेंगे और शीघ्र ही जनकनन्दिनीजी के करकमल के स्पर्श सुख का आनन्द प्राप्त करेंगे। हे भजन सुख के सारसर्वस्व भरत! आप शीघ्र ही **गिरिधर** कवि के ईश्वर श्रीराम के चरण से जहाँ जीव का समस्त ताप नष्ट हो गया है ऐसे विरह से उत्पन्न ताप को शीघ्र छोड़ देंगे और हे भरत! गीतसीताभिराम श्रीराम के हृदय में आप शीघ्र विहार करेंगे।

## गीत संख्या-३३

**भरतो दण्डवद् प्रणमन् श्रीरामं प्रति-**

राम राघव भरतमेनं पाहि पापात् पाहि।
कलितलाघव भरतमेनं त्राहि तापात् त्राहि।।१।।
चित्रकूटे मां निवास्य प्रभो अयोध्यां याहि।
मनाङ्नाथ समातृविहिते न खलु रुषमायाहि।।२।।
देव यदि नहि रोचते मदनुचरितः पुरमेहि।
राम राजा भव त्रिलोक्याः मङ्गलं भुवि धेहि।।३।।
मा प्रहिणु मां दीनबन्धो दीनतां विदुनीहि।
क्रन्दतो गिरिधरस्यापि भवाटवीं प्रलुनीहि।।४।।

**भौमी-** अब भरत दण्डवत प्रणाम करके श्रीराम के प्रति कहते हैं-हे राम, हे राघव! इस भरत को पाप से बचा लीजिए, बचा लीजिए। हे हस्तलाघव से युक्त प्रभु! इस भरत की तीनों तापों से रक्षा कीजिए। हे नाथ! चित्रकूट में मुझे प्रवासित करके आप अयोध्या पधारें और कैकेयी माँ के कुकृत्यों पर कुछ भी क्रोध न करें। हे देव! यदि आपको यह पथ न भाता हो तो आप मेरे सेवकत्व में अयोध्या चलिए। हे श्रीराम! आप तीनों

लोकों के राजा बनें पृथ्वी का मंगल करें। हे दीनबंधों! मुझे मत भेजिए, मेरी दीनता को नष्ट कीजिए और क्रन्दन करते हुए **गिरिधर** कवि की भी भवाटवी को काट डालिए।

## गीत संख्या-३४

**श्रीरामो भरतं प्रति-**

**भरतभद्र मा चित्ते सङ्ग्लाय।।**
**स्मारं स्मारं जननिकृतं भो मा विकलो विग्लाय।**
**मा परिताप्य तपनकुलमण्डन मनाङ् मनसि माम्लाय।।१।।**
**गच्छायोध्यां शिरषि पादुके त्वं मामिके निधाय।**
**राज्यं शाधि साधिकारं न्यक्कारं समं विहाय।।२।।**
**भ्रातर्भरत भातृभक्त्या भक्तः सततं मां ध्याय।**
**गिरिधरगिरा गीतसीताभिराममिह गीतैर्गाय।।३।।**

**भौमी-** अब श्रीराम भरत के प्रति कहते हैं- हे भरत-भद्र! तुम अपने चित्त में ग्लानि मत करो। माँ के कुकृत्य का स्मरण कर करके विकल होकर व्याकुल मत होओ। हे सूर्यकुल के आभूषण! पछतावा मत करो और मन में थोड़ा-सा भी दुःखी मत होओ। मेरी पादुका को सिर पर लेकर अयोध्या जाओ और सभी तिरस्कारों को छोड़कर साधिकार राज्य शासन करो। हे भैया भरत! मुझे भातृ-भक्ति से ही कुशल भक्त बनकर ध्यान का विषय बनाओ और मुझ गीत सीताभिराम को **गिरिधर** कवि की वाणी द्वारा गाये हुए गीतों से निरन्तर गाते रहो।

## गीत संख्या-३५

**पादुके गृहीत्वा भरतः श्रीरामं प्रति-**

**रघुपते यामि पुरीं निरुपायः।।**
**किं कर्तुं शक्नोमि नाथ पातकी प्रकटितापायः।**
**शिरसादेशं वहन्नहह प्रेये पादुकासहायः।।१।।**
**विधिना कुजननिजठराज्जनितस्त्वद्वनवासनिमित्तम्।**
**धिङ् मां पापमहाकूपारं किमाश्वासये चित्तम्।।२।।**
**यावदवधि ते वचः पालयन् प्राणान् प्रभो धरिष्ये।**
**पश्चादनालोकयंस्तव पदमग्निं गतिं करिष्ये।।३।।**
**इत्युक्त्वा सीताभिराममथ नत्वाऽयोध्यां यातः।**
**प्रभुविरहेण मुमुर्षू रामपादुकाभ्यां वै त्रातः।।४।।**
**नन्दिग्रामे कुटीं कृतवतो गर्तो वसतिर्जाता।**
**भणति गिरिधरो नहि त्रिकाले भरतसमो भुवि भ्राता।।५।।**

**भौमी-** पादुका ग्रहण करके भरतजी अब श्रीराम के प्रति कहते हैं-हे रघुपते! अब मैं उपायहीन होकर श्रीअयोध्या जा रहा हूँ। हे नाथ! मैं कर ही क्या सकता हूँ क्योंकि दोषों को प्रकट करने वाला मैं पापी हूँ और पादुका को ही सहायक मानकर आपका आदेश सिर पर धारण करते हुए अब मैं चल रहा हूँ। विधिवशात् दुष्ट माता के गर्भ से जन्म लेने के कारण आपके वनवास का निमित्त बने हुए मुझ पाप समुद्र को धिक्कार। मैं अपने चित्त को क्या आश्वासन दूँ? आपकी वाणी का पालन करते हुए चौदह वर्ष अवधिपर्यन्त अपने प्राणों को धारण करूँगा। इसके पश्चात् आपके दर्शन न पाकर अग्नि में प्रवेश कर जाऊँगा। इस प्रकार सीताभिराम श्रीराम से कहकर श्रीभरत अयोध्या को पधारे। प्रभु के विरह में आसन्न मरण होते हुए भी भरतजी की श्रीराम चरणपादुकाओं ने रक्षा कर ली। नन्दी ग्राम में कुटी बनाकर नीचे खोदा हुआ भू सेना गड्ढा (भूमि में खोदी हुई गुफा) भरत जी का निवास स्थली बनी। **गिरिधर** कवि कहते हैं कि भरत के समान तीनों कालों में, तीनों लोकों में कोई भ्राता नहीं है।

## गीत संख्या-३६

**माण्डवी स्वगतम्-**

**राघवो मैथिलीलक्ष्मणाभ्यां युतः कान्त मात्रा निरागाश्च विप्रोषित-**
**श्चक्रवर्ती पुरन्दरपुरं प्रापितो हे हरे ह्रीमती किं लपेन्माण्डवी।।१।।**
**द्यौर्यदा कर्मनाशां समासावयेत् गौर्यदा निर्जराणां विषं च्यावयेत्।**
**नौश्च पान्थान् यदा पाथसि प्रावयेत् हे हरे ह्रीमती किं रपेन्माण्डवी।।२।।**
**यद्धि मान्या भवेद्धव्यवाट् वर्षणं चेत् क्षमा यातु मन्युं सुदुर्मर्षणम्।**
**ज्योत्स्नया दीयते चेद् गराकर्षणं हे हरे ह्रीमती किं चपेन्माण्डवी।।३।।**
**चेत् सुधादीर्घिका कालकूटं वहेत् यद्यसौ शीतरश्मिश्चकोरं दहेत्।**
**दुर्लिपिं लेखितुं धाता चेदुत्सहेत् हे हरे ह्रीमती किं जपेन्माण्डवी।।४।।**
**आर्यपुत्रो वनात् कोसला नागतः पादुकासन्नतो गिरिधरेशं श्रितः।**
**नान्दनीवाटिका विषफलोत्पादिनी हे हरे ह्रीमती किं वपेन्माण्डवी।।५।।**

**भौमी-** माण्डवी अपने मन में कह रही हैं-श्रीराघव मेरे पति की माँ कैकेयी की हठ-धर्मिता से निरपराध होने पर भी सीताजी एवं लक्ष्मण जी के साथ वनवास भेज दिए गए। चक्रवर्ती श्वसुर दशरथजी शरीर छोड़कर इन्द्रलोक चले गए। हे भगवान लज्जावती माण्डवी! किसको क्या कहे? यदि स्वर्ग के अभिमानी देवता गंगा के बदले कर्मनाशा को उत्पन्न करने लग जाये और यदि देवताओं की गौ कामधेनु अमृत दुग्ध के बदले विष चुआने लग जाए और यदि नौका यात्रियों को जल में डुबो दे तो इस स्थिति में लज्जावती माण्डवी किसको क्या कहे? यदि हिमानी अर्थात् बर्फ के समूह से अग्नि की वर्षा होने लग जाए और यदि स्वाभाविक क्षमाशील पृथ्वी भयंकर क्रोध कर ले और यदि चन्द्रमा की चाँदनी अमृत को छोड़कर विष का आकर्षण स्वीकार ले तो हे हरे! ऐसी परिस्थिति में माण्डवी क्या बोले? यदि अमृत की बावली विष को प्रवाहित करने लग जाए यदि चन्द्रमा चकोर को भस्म करने लगे, यदि विधाता ही मस्तक पर दुर्भाग्य की रेखा लिखने का मन बना ले, तो हे हरे! इस परिस्थिति में माण्डवी किसका जप करे? अब मेरे आर्यपुत्र भरत जी पादुका जी को लेकर वन से श्रीअवध पधार आए हैं। वे निरन्तर पादुकाजी की पूजा कर रहे हैं और **गिरिधर** कवि के स्वामी श्रीराम के नाम

रूप लीला धाम का चिन्तन करते हुए उन्हीं को आश्रय बनाकर प्राणों को रखें हुए हैं। यदि नन्दनवन की वाटिका विषफल को उत्पन्न कर रही हो तो हे हरे! माण्डवी उसमें किसका बीज बोए। माण्डवी सब श्रीसीताराम जी पर छोड़ रही है। परिणाम मंगलमय होगा।

## उपसंहारश्लोकः

**इत्थं सीतावरविरहजं तापमालम्बमानो**
**नन्दिग्रामे तरुणजटिलो वल्कली गर्तशायी।**
**यावत् सिन्धुद्विगुणशरदो गीतसीताभिरामं**
**रामं ध्यायन्निहह भरतो भक्तिभव्यो व्यनैषीत्।।१।।**

**भौमी–**इस प्रकार श्रीसीतापति रामचन्द्र के विरह से उत्पन्न ताप को स्वीकार करते हुए भक्ति के कल्याण से युक्त श्रीभरत नन्दीग्राम में तरुण होकर भी जटाधारण करके वल्कल वस्त्र धारण किए हुए भूमि में खुदे हुए गड्ढे में शयन करते हुए चौदह वर्ष की अवधि गीतसीताभिराम का स्मरण करते हुए बिता दिये।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये अयोध्याकाण्डे गीतायोध्यकविरहालम्बनो नाम अष्टमः सर्गः।।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के अयोध्याकाण्ड में गीतायोध्यकाविरहालम्बन नामक अष्टम सर्ग सम्पन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।। नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये
# अयोध्याकाण्डे
## गीतचित्रकूटमण्डनो नाम
# नवमः सर्गः

## मङ्गलाचरणम्

**मन्दाकिनीकाननकुञ्जचारी**
**सीतामनोऽरण्यरहोविहारी ।**
**भग्नत्रिकूटः श्रितचित्रकूटः**
**श्रीराघवो मङ्गलमातनोतु।।१।।**

**भौमी-** अब महाकविजी अयोध्याकाण्ड के समापन सर्ग का प्रस्ताव करते हुए आशीर्वादात्मक मंगलाचरण उपस्थित करते हैं। मंदाकिनी नदी के तट पर विराजमान वन के कुञ्जों में भ्रमण करने वाले सीताजी के मनरूप वन में एकान्त विहार करने वाले भक्तों के तीनों काम, क्रोध, लोभात्मक कूटों को नष्ट करने वाले श्रीचित्रकूट विहारी राघव सरकार हम सबका मंगल करें।

## सन्दर्भश्लोकौ

**अथ गते भरते भरते पुरं**
**पुरपुरन्ध्रिविवर्णकृदीडितः ।**
**रघुवरो रमयन् जनकात्मजाम्**
**सुरसरित्पुलिनानि समाश्रयत्।।१।।**
**स विजहार विहारविधाचण-**
**श्चरणजातटकुञ्जगृहेष्वथ ।**
**वनितयाऽनितयाऽनितयाऽनितः**
**सुमनसां वनिता नितया श्रिया।।२।।**

**भौमी-** इसके अनन्तर भगवद्-भाव में निरत भरतजी के श्रीअवध पधार जाने पर पुरांगनाओं को विवर्ण करने वाली देववधूओं के द्वारा स्तुत्य भगवान श्रीराम, जनकनंदिनी सीताजी को रमाने के लिए

स्वर्गगंगा की धारा मंदाकिनी जी की तटों का आश्रय लिये। इसके पश्चात् देवताओं की वनिताएँ जिन्हें नहीं प्राप्त कर सकीं और जो श्रीराम के अतिरिक्त और किसी पुरुष द्वारा प्राप्त नहीं की जा सकीं तथा जिन्होंने श्रीराम के अतिरिक्त और किसी का स्वप्न में भी अनुगमन नहीं किया। ऐसी युवावस्था संपन्न, प्रभु में पूर्ण अनुरागवती श्रीसीताजी के साथ अपनी चरण से प्रकट मंदाकिनी जी के तटों पर विराजमान कुंजगृहों में विहारकला में कुशल भगवान राम विहार करने लगे।

## गीत संख्या-१

**कविर्गायति-**

**विहरति चित्रकूटभुवि रामः।।**
**मन्दाकिनी पुलिनकुञ्जेषु वामदिशि वामितवामः।**
**आरामे जितविवुधारामे व्रीडितशतरतिकामः।।१।।**
**मधौ मधुमथनमहितमाधुरी मदनमधुरपरिणामः।**
**परीरम्भसंरम्भदम्भविश्रम्भमनसिजोद्दामः ।।२।।**
**दशनवसनशुचिचषकसमर्पितसीधुमोदितश्यामः।**
**मुक्तहाससुविलासरासरसरञ्जितदयिता क्षामः।।३।।**
**किसलकमलदलकल्पिततल्पसमाकल्पितविश्रामः।**
**जयति गीतसीताभिरामरामो गिरिधराभिरामः।।४।।**

**भौमी-** अब स्वयं महाकवि गा रहे हैं–श्रीचित्रकूट की भूमि पर श्रीराम विहार कर रहे हैं। अपने वाम भाग में विराजमान अन्य सुंदरियों को भी प्रतिकूल करने वाली सीताजी के साथ मंदाकिनी तटवर्ती कुंजों में श्रीराम विहार कर रहे हैं। देवताओं के उद्यान को भी जीतने वाले, सुंदर उद्यान में कोटि-कोटि रति-काम पर विजय प्राप्त किये हुए श्रीराम विहार कर रहे हैं। वसन्त के समय मधुसूदन विष्णु के द्वारा भी जिनकी माधुरी की पूजा की गई है, जिनका परिणाम कामदेव के लिये भी मधुर है, ऐसे प्रभु आलिंगन के प्रारंभ द्वारा दंभ के विश्राम से युक्त अलौकिक उन्मुक्त काम कला से सम्पन्न श्रीराम चित्रकूट में विहार कर रहे हैं। रामजी दन्तावली के वस्त्रस्वरूप अधररूप पवित्र पात्र से समर्पित सीधु रस द्वारा मुग्धानायिका सीताजी को प्रसन्न करने वाले उन्मुक्त हास, शोभन और मर्यादित विलास तथा निन्यानवे महारासों की शृंखला से, वन के क्लेश से दुर्बल प्रियतमा सीताजी का रञ्जन करते हुए श्रीचित्रकूट में विहार कर रहे हैं। पल्लव और कमलदल से रचित शैय्या पर विश्राम करते हुये, **गिरिधर** कवि को आनन्द देने वाले गीतसीताभिराम सदैव सभी से उत्कृष्ट रूप में विराज रहे हैं।

**विशेष-** यह गीत हवेली पद्धति में निबद्ध है।

## गीत संख्या-२

**विहरति चित्रकूट इह सीता।।**
**अभिरामेण समं रामेण प्राणप्रियप्रेमप्रतीता।**

मन्दाकिनीललिततीरेषु समाश्रितभावमभीता।।१।।
अदूषणाश्रितकुसुमभूषणा दूषणरिपुहृदि नीता।
खेलति दयितशुभाङ्कमङ्कमधिरूढा विनयविनीता।।२।।
धातुरागरक्ताङ्गी मृद्वङ्गी सत्सङ्गसुनीता।
मैथिलयागापूर्वमयतनुः वैदिकधर्मप्रणीता।।३।।
तनु सुषमाजितमनसिजवामा प्रियतमप्रीतिपरीता।
सौदामिनीस्वर्णवरवर्णा वर्णिनी जगति सुप्रीता।।४।।
श्रीरामं रमयन्ती दमयन्ती कलिमलं पुनीता।
रामचन्द्रमुखचन्द्रचकोरी विलसति गिरिधरगीता।।५।।

**भौमी-** अभिरमण कराने वाले भगवान श्रीराम के साथ, प्राणप्रिय प्रभु के प्रेम और विश्वास की पात्र सीताजी इसी चित्रकूट में विहार कर रही हैं। मन्दाकिनी के सुंदर तटों पर दिव्य भावों को प्राप्त करके निर्भीकता से सीताजी विहार कर रही हैं। सीताजी निर्दोष होती हुई, पुष्पों के आभूषणों से सजी हुई, दूषण के शत्रु श्रीराम के हृदय में विराजमान होती हुई, विनय से प्रशिक्षित होकर सुंदर लक्षणों से युक्त श्रीराम के अङ्क में अधिरूढ़ होकर खेल रही हैं। सीताजी के सभी अंग आज धातु के रंग से रंग गये हैं। वे सत्संग के भाव में निरन्तर मग्न रहती हैं। मिथिलापति जनक के यज्ञ का अपूर्व फल ही उनका शरीर है और वे वैदिक-धर्म की रक्षा के लिये ही आविर्भूत हुई हैं। अपने शरीर की शोभा से कामदेव की पत्नी को जीतने वाली और प्रभु की प्रीति से व्याप्त स्वर्ण वर्ण वाली बिजली जैसी तथा श्रेष्ठ वर्णिनीयों के जगत में सम्मान प्राप्त सीताजी श्रीचित्रकूट में विहार कर रही हैं। श्रीराम को रमाती हुई कलियुग के मल नष्ट करती हुई परम पवित्र व्यक्तित्व वाली श्रीराम के मुखचंद्र की चकोरी, **गिरिधर** कवि द्वारा गायी जाने वाली जनकनंदिनी सीताजी सुशोभित हो रही हैं और विहार भी कर रही हैं।

## गीत संख्या-३

रमयति सुरामा रामं हे चित्रकूटे वसन्तम्।
विश्रमयति सुश्रामं हे जटाजूटे लसन्तम्।।
मन्दाकिनीतीरे राजन्निकुञ्जे सौरभसुकिलयकलितसुखपुञ्जे।
शमयति दयितमकामं हे चित्तशान्तिं कषन्तम्।।१।।
लक्ष्मणकलितलघुलाघवकुटीरे मलयमञ्जुमारुतसुरभिनदीनीरे।
सुखयति सुखितनिजारामं हे मन्दं मन्दं हसन्तम् ।।२।।
बद्धवरवाहुबल्लीप्राणपतिकण्ठे लब्धहरिमनोमल्ली रमेव वैकुण्ठे।
मृडयति मृडसुप्रणामं हे वन्यवेषं सुसन्तम्।।३।।
भावभव्यभाषया भवं च भाषयन्ती पुरविप्रयोगव्यथां प्रभोर्नाशयन्ति।
सदा गीतसीताभिरामं हे गिरिधरेशं रसन्तम् ।।४।।

**भौमी-** आज चित्रकूट में निवास कर रहे श्रीराम को उनकी प्राणप्रिया सीताजी रमा रही हैं। जटाजूट से सुशोभित होते हुए मृगया से श्रांत श्रीराम को सीताजी विश्राम करा रही हैं। आम्र के पल्लवों से जहाँ सुख पुंजीभूत हो रहा है, ऐसे मंदाकिनी तट पर विराजित कुंज में चित्त की शान्ति चाह रहे श्रीराम के श्रम को सीताजी दूर कर रही हैं और शान्त्यभिलाषी श्रीराम को रमा रही हैं। जहाँ मलय के मधुर वायु द्वारा मंदाकिनी का जल भी सुगंधित कर दिया गया है ऐसे लक्ष्मण द्वारा रचित सुंदर पर्णकुटी में अपने भक्तों को सुख देने वाले मन्द-मन्द मुस्कुरा रहे श्रीराम को सीताजी सुखी कर रही हैं। प्रभु के मनोमल्लिका को प्राप्त की हुई वैकुण्ठवासिनी रमा की भाँति अपने प्राणपति श्रीराम के गले में बाहुलता को डालकर गलबहियाँ दी हुई सीताजी शिव के द्वारा प्रणत श्रीराम को प्रसन्न कर रही हैं। अपने भाव से भव्य भाषा द्वारा प्रभु को भाषित करती हुयी और प्रभु के नगर वियोग दु:ख को नष्ट करती हुई और निरन्तर **गिरिधर** कवि के स्वामी आनंदानुभव कर रहे गीतसीताभिराम श्रीराम को जानकीजी आनंदित कर रही हैं।

## गीत संख्या-४

**मलयसमीरे मन्दाकिनीतीरे किसलयपर्णकुटीरे।**
**मधुकरमुखरकरम्बितकूजति कोकिलमञ्जुलकीरे।।**
**विपिने लसत सीतारामौ धृतमुनिवेषौ**
**हरिहरशेषौ छविनिन्दितरतिकामौ।।१।।**
**क्वचिल्लसन्तौ क्वचिद्धसन्तौ क्वचिद्रहो रममाणौ।**
**क्वचिदभिबद्धकण्ठभुजलतिकौ वनकुञ्जं क्रममाणौ।।२।।**
**क्वचिदज्ञातसुखाम्बुधिमग्नौ विस्मृतपौरवियोगौ।**
**क्वचिदनुकूलदम्पती नव्यौ कलितसरससंयोगौ।।३।।**
**क्वचिदथ किसलयसुमदलशयने परिश्रमेण शयानौ।**
**क्वचिदनुकृतकोकिलाकाकली कल्पितमङ्गलगानौ।।४।।**
**क्वचिन्नवलवनसुषमादर्शनमुदितौ जनाभिरामौ।**
**गिरिधरकविभवभयं हरन्तौ जगदगविपद्विरामौ।।५।।**

**भौमी-** अनेक भ्रमरों के सुंदर स्वर से समुहित और कूँजते हुए कोकिला तथा तोतों से युक्त मलयमारूत से झंकृत मंदाकिनी तट पर पल्लव और पत्तों से बनी हुई कुटी में मुनिवेशधारी भगवान विष्णु और शंकर के स्वामी कोटि-कोटि रतिकामों को जीतने वाले श्रीसीतारामजी चित्रकूट में विराज रहे हैं। कहीं सुशोभित होते हुए, कहीं हँसते हुए, कहीं एकान्त में रमण करते हुए, कहीं गलबहियाँ डालकर कुंज में धीरे-धीरे चलते हुए श्रीसीताराम जी सुशोभित हो रहे हैं। कहीं पर पुरजनों का वियोग भूलकर अज्ञात सुखसागर में डूबे हुए कहीं पर नवीन अनुकूल दम्पती मधुरतम संयोग स्वीकार कर वन में शोभित हो रहे हैं। कहीं पर परिश्रम से थककर पल्लव और पुष्प की शैय्या पर शयन करते हुए कहीं पर कोकिला के स्वर का अनुकरण करते हुए परस्पर मंगलगान करके विहार कर रहे हैं। कहीं पर नवीन वन की शोभा को देखकर प्रसन्न हुए भक्तों को आनन्द दे रहे

**गिरिधर** कवि के भवभय को हरण कर रहे जड़-चेतनों के विपत्ति को नष्ट करने वाले श्री चित्रकूट विहारी विहारिणी जू श्रीसीताराम जी वन में सुशोभित हो रहे हैं।

## गीत संख्या-५

**विहरति श्रीरघुवीरस्तटे मन्दाकिन्याः।**
**लालितलक्ष्मणवीरस्तटे मन्दाकिन्याः।।**
**सीताऽभिवर्धितवामविभागः।**
**चरणसरोरुहशर्वानुरागः।।**
**नवलपयोधरशरीरस्तटे मन्दाकिन्याः।। १।।**
**लसितनिषङ्गललितशरचापः।**
**मुनिपटधरो धृतजटाकलापः।।**
**सागरगगनगभीरस्तटे मन्दाकिन्याः।।२।।**
**नततरुशाखार्चितनवनलिनचरणः।**
**अशरणशरणशीलो भीमभयहरणः।।**
**यशोमुखरकोकिलालिकीरस्तटे मन्दाकिन्याः।।३।।**
**मुनिवर्यतपःफलं योगिजनध्येयः।**
**कान्तारकवृन्दारकबुधगणज्ञेयः।।**
**श्रितशीतलपरिमलसमीरस्तटे मन्दाकिन्याः।।४।।**
**अतिरथो दशरथराजकिशोरः**
**सीतावदनचारुचन्दिरचकोरः।।**
**कवि गिरिधरहृदयकुटीरस्तटे मन्दाकिन्याः।।५।।**

**भौमी-** श्रीसीतारामजी मंदाकिनी के तट पर विहार कर रहे हैं। वीर लक्ष्मण को दुलारने वाले प्रभु मंदाकिनी के तट पर विहर रहे हैं। सीताजी के द्वारा जिनके वाम भाग का सम्मान हुआ है और जिनके चरणों में शिवजी का भी अनुराग है, ऐसे नवीन बादल के समान शरीर वाले श्रीराम मंदाकिनी के तट पर विहार कर रहे हैं। सुंदर तरकस और धनुषबाण धारण किए हुए, मुनिपटधारी, जटाजूट से सुशोभित, सागर और आकाश के समान गंभीर श्रीराम मंदाकिनी के तट पर विहार कर रहे हैं। झुकी हुई वृक्ष शाखाओं के द्वारा जिनके नवीन कमल चरण का अर्चन किया जा रहा है जिनका शील अशरण शरण है तथा जो भयंकर भव भय को हरने वाले हैं और जिनके यश को कोयल, भ्रमर और तोते गा रहे हैं, ऐसे श्रीराम मंदाकिनी तट पर विहार कर रहे हैं। मुनियों के तपस्या के फलस्वरूप योगिजनों के ध्यान के विषय, वन के देवता और बुधजनों के कान के विषय बने हुए श्रीराम शीतल मलयसमीर का आश्रय करके मंदाकिनी के तट पर विहार कर रहे हैं। अतिरथी दशरथ के राजकिशोर, सीतामुखचन्द्र के चकोर तथा **गिरिधर** कवि के हृदय कुटीर में विराजमान श्रीराम मंदाकिनी तट पर विहार कर रहे हैं।

## गीत संख्या-६

लसति सीतारामो गिरौ चित्रकूटे।
लषति रामारामो गिरौ चित्रकूटे।।
सीताकण्ठकन्दलीकलितबाहुबन्धो ।
मन्दाकिनीतटे रामो रमते मधुरबन्धो।।
वसति वामावामो गिरौ चित्रकूटे।।१।।
कोककोकनदलोकशोकश्रमहारी ।
मानसमृणालमञ्जुसरसिजविहारी ।।
चलति पूर्णकामो गिरौ चित्रकूटे।।२।।
दर्शं दर्शं युगलशोभां हरिणा हरिण्यः।
प्रमोदन्ते स्पर्शं स्पर्शं करिणः करिण्यः।।
जयति कन्दश्यामो गिरौ चित्रकूटे।।३।।
तापसाः परिव्राजो मुनिवरकिशोरा।
गिरिधरेशवदनचन्द्रचक्षुश्चकोराः ।।
न्यसति नरललामो गिरौ चित्रकूटे।।४।।

**भौमी-** श्रीसीताराम चित्रकूट में विराज रहे हैं और रामा अर्थात् सीताजी को आनंदित करने वाले श्रीराम चित्रकूट पर्वत के प्रति लसति अर्थात् इच्छुक हो रहे हैं। सीताजी के कण्ठ रूप कदली पर अपने बाहुबन्ध से सुशोभित अर्थात् गलबहियाँ डाले हुए मधुर बन्धन को स्वीकार किए हुए श्रीराम मन्दाकिनी तट पर रम रहे हैं और वामबामा अर्थात् अनुकूल पत्नी सीताजी के साथ चित्रकूट में निवास कर रहे हैं। चकवे, कमल और संसार के शोकश्रम को हरने वाले मानस सरोवर के कोमल दंड वाले कमल के विहारी पूर्णकाम श्रीसीताराम चित्रकूट में विचरण कर रहे हैं। इस प्रकार युगल शोभा को देखकर हरिन-हरिनियाँ एवं प्रभु को छू-छूकर हाथी और हथनियाँ भी प्रसन्न हो रहे हैं और ऐसे बादल के समान सुंदर श्रीराम चित्रकूट पर्वत पर विजयी हो रहे हैं। इस प्रकार तपस्वी, परिव्राजक और मुनिकुमार ये सभी **गिरिधर** कवि के स्वामी श्रीराम के मुखचंद्र के चकोर बनकर नेत्रों को धन्य कर रहे हैं और मनुष्य-रत्न श्रीराम चित्रकूट पर्वत पर धीरे-धीरे चरण रख रहे हैं।

## गीत संख्या-७

श्रीसीता स्वगतम्-

अहं व्यस्मार्षमयोध्यां श्वशुरधाम मह्यं चित्रकूटो रोचते।
अहं नास्मार्षं मिथिलां मातृधाम मह्यं चित्रकूटो रोचते।।
यत्र मन्दाकिनीसुधामयीधारा वहति।
यत्र चानसूया तपोऽनलं दुरितं दहति।।

यत्र खगोऽपि रटति सीताराम स मह्यं चित्रकूटो रोचते।।१।।
यत्र कामदः सकलशैलमणी राजते।
यत्र मुनिरत्रिस्तपःशिखामणिर्भ्राजते।।
यत्र साधवो जपन्ति रामनाम स मह्यं चित्रकूटो रोचते।।२।।
यत्र तापसास्तपस्यन्ति संशितव्रता।
यत्र योगिनो युञ्जते योगं संयमरता।।
यत्र नित्यं शोभां धत्ते चतुर्धाम स मह्यं चित्रकूटो रोचते।।३।।
यत्र तरवोऽपि तरुणतपसि सुस्थिरा।
यत्र सीताराम चरणाङ्किताश्च प्रस्तराः।।
यत्र रामभक्तिर्भनक्ति कुदाम स मह्यं चित्रकूटो रोचते।।४।।
यत्र शान्तिरेव राज्ञी विवेको नृपो।
यत्र वैराग्यं केसरिणा जितः कलिद्विपो।।
यत्र गिरिधरेशप्रेमाललाम स मह्यं चित्रकूटो रोचते।।५।।

**भौमी–** सीताजी अपने मन में कह रही हैं– मैं अपने श्वसुरजी का धाम अयोध्या भूल गयी। मुझे चित्रकूट अच्छा लगता है। मैं अपना माइका मिथिला भी भूल गयी, मुझे चित्रकूट भाता है। जहाँ मन्दाकिनी की अमृतमयी धारा बहती रहती है, जहाँ अनुसूइया जी का तपरूप अग्नि सभी पापों के परिणामों को जला डालता है, जहाँ पक्षी भी सीताराम–सीताराम रटते हैं, वह चित्रकूट मुझे बहुत भाता है। जहाँ सम्पूर्ण पर्वतों के शिरोमणि कामद (कामतानाथ भगवान) विराज रहे हैं, जहाँ तपस्वियों के शिखा–मणि अत्रिमुनि देदीप्यमान हैं, जहाँ साधुजन रामनाम का जप करते हैं, वह चित्रकूट मुझे बहुत भाता है। जहाँ दृढ़–व्रत धारण करके तपस्वीजन तपस्या करते हैं, जहाँ योगीजन ध्यान, धारणा समाधि में लगे हुए योगाभ्यास करते हैं, जहाँ चार धाम अनुसूइया, स्फटिक शिला, गुप्त गोदावरी, जानकी कुण्ड दिव्य शोभा पाते हैं, वह चित्रकूट मुझे बहुत भाता है। जहाँ वृक्ष भी तीव्र तपस्या में सुस्थिर रहते हैं, जहाँ के पत्थर भी सीतारामजी के चरण–चिह्न से अंकित हैं, जहाँ रामभक्ति संसार बंधनों को काट डालती है, वह चित्रकूट मुझे बहुत प्रिय लगता है। जहाँ शान्ति रानी और विवेक राजा हैं, जहाँ वैराग्य रूप सिंह ने कलियुगरूप हाथी को जीत लिया है, जहाँ **गिरिधर** कवि के प्रभु श्रीराम का प्रेम ही सभी साधनों का रत्न है, वह चित्रकूट मुझ सीता को बहुत प्रिय लगता है।

## गीत संख्या-८

**लक्ष्मणः** स्वगतम्

अन्तरेण प्रभू श्रीसीतारामौ न स्वर्गोऽपि मे रोचते।
अन्तरेण विभू विपदां विरामौ न स्वर्गोऽपि मे रोचते।।
नाहं वाञ्छामि पारमेष्ठ्यं पृष्ठं दिवः।
नाहं काङ्क्षामि रसां नाधिपत्यं भुवः।।

**अन्तरेण विद्युद्घनगौरश्यामौ न स्वर्गोऽपि मे रोचते।।१।।**
**नो जनन्यै न चोर्मिलायै स्पृहये क्वचिद्**
**यौवराज्याय न चोत्साहं वृहये स्ववित्।**
**अन्तरेण विभाजितरतिकामौ न स्वर्गोऽपि मे रोचते।।२।।**
**भग्नकूटश्चित्रकूटोऽप्ययोध्यायते ।**
**नो कदाचिन् मया राज्यसौख्यं ध्यायते।**
**अन्तरेण भूरिभुवनललामौ न स्वर्गोऽपि मे रोचते।।३।।**
**मातापितरौ च सीताराघवौ वत्सलौ।**
**मां पुत्रीयतो लक्ष्मणं सदा सद्बलौ।**
**अन्तरेण गिरिधरनयनाभिरामौ न स्वर्गोऽपि मे रोचते।।४।।**

**भौमी-** अब लक्ष्मणजी अपने मन में कह रहे हैं– प्रभु श्रीसीतारामजी के बिना मुझे स्वर्ग भी नहीं भाता तथा सर्वव्यापी, विपत्तियों के अभाव स्थान सीतारामजी के बिना मुझे स्वर्ग भी नहीं अच्छा लगता। मैं ब्रह्मलोक नहीं चाहता और न ही स्वर्गलोक का उच्चासन। मैं पातालसुख नहीं चाहता और न ही पृथ्वी का स्वामित्व। मुझे तो बिजली और मेघ के समान गौरश्याम सीतारामजी के बिना स्वर्ग भी नहीं भाता। मैं कभी भी माँ सुमित्रा और पत्नी उर्मिला की स्पृहा नहीं करता और यौवराज्य के लिए भी अपना मनोराज्य कभी नहीं बढ़ाता। मुझको तो अपनी शोभा से करोड़ों रतिकाम को जीतने वाले सीतारामजी के बिना स्वर्ग भी नहीं प्रिय लगता। भक्तों का त्रिकूट नष्ट करने वाला यह चित्रकूट भी मेरे लिये अयोध्या बन गया है। मैं कभी भी राजसुख का ध्यान नहीं करता। अनन्त कोटि लोकों के रत्न सीतारामजी के बिना मुझे स्वर्ग भी नहीं भाता। श्रीसीताराघव वात्सल्य करने वाले मेरे माता-पिता हैं, उन्हीं से सन्तों को बल मिला है और वे मुझ लक्ष्मण को अपना पुत्र ही मानते हैं। **गिरिधर** कवि के नेत्रों के सुखदाता उन श्रीसीतारामजी के बिना मुझे स्वर्ग भी नहीं भाता है।

## सन्दर्भश्लोकः

**रामः प्राह लता प्रिये बहुमता सम्भूषयन्ती तरुं**
**सीतोवाच लताश्रयस्तरुरयं धन्यो न चैषा लता।**
**सौमित्रिर्निजगाद राजतु तरू राराज्यतां वै लता**
**छायामाप्य ययोः सदैव पथिको मोमुद्यमानोऽवति।।१।।**

**भौमी-** एक बार श्रीराम ने सुंदर लता से आलिंगित पुष्प वृक्ष को देखकर श्रीसीताजी से कहा– ''प्रिये! ये लता बहुत सम्मान पात्र है जो अपने आलिंगन से इस वृक्ष की शोभा बढ़ा रही है। सीताजी ने कहा– नहीं नाथ! धन्यवाद का पात्र तो यह वृक्ष है, जो निराधार लता को अवलंब दे रहा है।'' इसके पश्चात् ही परिसंवाद के बीच में लक्ष्मण जी बोल पड़े– ''कोई बात नहीं, प्रभु के कथनानुसार शोभित होती रहे यह लता और भाभी माँ की इच्छानुसार सदैव देदीप्यमान रहे यह वृक्ष, जिन दोनों लता और वृक्ष की छाया को पाकर पथिक निरंतर प्रसन्न होता हुआ प्रकाशमान होता रहता है।''

**विशेष-** इस प्रसंग पर एक दोहा द्रष्टव्य है-

"राम कहा धनि बेलि यह, सिय कहेउ तरु धन्य।
लखन कहेउ धनि पथिक यह, गिरिधर मुदित अनन्य।।"

## गीत संख्या-९

**कथयतां पथिकसुभाग्यं भवन्तौ।**
**यं सुखयतश्च छायया नित्यं व्रततितरू विलसन्तौ।।१।।**
**चण्डरश्मिघर्मार्तमनशनं श्रान्तमभीप्सितनीरम्।**
**विश्रमयतो यमाप्य किसलसच्छायां शिशिरसमीरम्।।२।।**
**अन्योन्यं समर्प्य शृङ्गारं मिथो महितमाधुर्यौ।**
**पथि पथि पथिकमहो मृडयन्तौ रुचिररसिकरसधुर्यौ।।३।।**
**धन्याविमौ दम्पती दिव्यौ लक्ष्मणसुखपरिणामौ।**
**रातां सद्भ्यः सदा मुदं श्रितगिरिधरहृदयारामौ।।४।।**

**भौमी-** लक्ष्मणजी कहने लगे- "हे भाभी माँ और हे बड़े भैया राघव! आप दोनों उस पथिक के सौभाग्य की चर्चा करें, जिसको शोभित होते हुए लता और वृक्ष अपनी छाया से निरंतर सुखी करते रहते हैं। सूर्यनारायण की चिलचिलाती धूप से व्याकुल भूखे, थके और जल के लिये प्यासे जिस पथिक को पल्लवों की छाया और शीतल वायु प्रदान करके, ये लता और वृक्ष विश्राम देते रहते हैं। धन्य हैं, ये लता-वृक्ष अद्भुत रसिक और रस के धुरीन तथा एक दूसरे से सम्मानित माधुर्य वाले अद्भुत नायिका-नायक जो एक दूसरे का शृंगार करते हुये प्रत्येक मार्ग में पथिक को सुखी करते रहते हैं। ये धन्य हैं, लता वृक्ष के समान, लक्ष्मण के सुख के परिणामरूप अलौकिक दम्पती। ये ही श्रीसीतारामजी लता वृक्ष की भाँति **गिरिधर** कवि के हृदयरूप बगीचे में विराजमान रहकर संतों को सदैव सुख देते रहें।

## गीत संख्या-१०

**किं च-**

**रामं श्रीसीताभिरामं हो चित्रकूटो बिभर्ति।**
**सतां मोक्षधर्मार्थकामं हो चित्रकूटः पिपर्ति।।**
**विभ्रन्मूर्ध्नि मन्दाकिनीं मृडमौलिमालाम्।**
**सुधाधवलधाराधरां हृतमोहजालम्।।**
**रामं सजलघनश्यामं हो चित्रकूटो विभर्ति।।१।।**
**निघ्नन्कूटदर्शनेन नृणां त्रिविधतापम्।**
**प्रघ्नन्पांशुसेवनेन पातककलापम्।।**
**रामं लोकललितललामं हो चित्रकूटो बिभर्ति।।२।।**

अश्नन् धामधावनेन विषयानुरक्तिम्।
पुष्णन्नामचिन्तनेन सीतारामभक्तिम्।।
रामं रामरामं रामारामं हो चित्रकूटो बिभर्ति।।३।।
विश्वविपिनचूडामणिर्धन्यश्चित्रकूटः ।
सर्वदिव्यतीर्थाग्रणीर्गण्यश्चित्रकूटः ।।
रामं कविगिरिधराभिरामं हो चित्रकूटो बिभर्ति।।४।।

**भौमी-** और भी- ''अहा! सीताभिराम श्रीराम को चित्रकूट धारण कर रहा है और संतों के मोक्ष, धर्म, अर्थ, काम को चित्रकूट पूर्ण कर रहा है। अपने मस्तक पर अमृत के समान धवल-धारा को धारण करती हुई मोह-जाल को नष्ट करने वाली शिवजी के मुकुट के मालास्वरूप मंदाकिनीजी को मष्तक पर धारण करता हुआ यह चित्रकूट मेघ श्यामल श्रीराम को भी धारण कर रहा है। शिखरों के दर्शन से मनुष्यों के तीनों तापों को नष्ट करता हुआ, धूल के सेवन मात्र से पापसमूहों को भी दूर करता हुआ, संसार के ललितरत्न श्रीराम को भी श्रीचित्रकूट धारण कर रहा है। धाम की धावना करने से विषयों की अनुरक्ति को समाप्त करता हुआ और भगवन्नाम के चिंतन से श्रीसीताराम भक्ति को पोषित करता हुआ यह चित्रकूट परशुराम जी को रमाने वाले श्रीसीताजी को आनंदित करने वाले श्रीराम को धारण कर रहा है। चित्रकूट संपूर्ण वनों का चूड़ामणि है और यही चित्रकूट संपूर्ण तीर्थों का भी अग्रगण्य है क्योंकि यही चित्रकूट **गिरिधर** कवि को आनंद देने वाले भगवान राम को अपनी उपत्यका और अभित्यका में धारण कर रहा है।

**विशेष-** यह गीत बघेली लोकधुन में निबद्ध है।

## गीत संख्या-११

**वासन्ती सखी गायति-**

सरससमीरे पयस्विनीतीरे पल्लवपर्णकुटीरे।
मदिरमधुरमधुरमुखरमधुकरनीरजनीरजनीरे ।
विहरति हरिरधिवनं वसन्ते
आरामे रमते रामो रामारामोऽभिदिगन्ते।।
कलरसालकिसलयसुनिलयकोकिलाकाकलीपुञ्जे
रतिपतिसुखमुखरितखगकुलमृदुमलयमालतीकुञ्जे ।।१।।
अवनिसुताकुचकलशसरसकररुहविरचितपाटीरः ।
चुम्बन् वधूवदनमथमदयन्मदनं निधुवनधीरः।।२।।
सुखारम्भवरपरीरम्भप्रस्वेदितपुलकशरीरः ।
समापीतदयिताधरसीधुसुधः शतसिन्धुगभीरः।।३।।
भौमीभव्यभाग्यमिवभालं कान्ताकमनकपोलम्।
मनश्शिलातिलकेन तिलकयन् कुर्वन् स्वमनोऽलोलम्।।४।।

निजकरचितकृतकुसुमभूषणैर्जनकसुताशृङ्गारम् ।
विदधानो निदधानस्तस्या वक्षसि भुजवरहारम्।।५।।
चरणालक्तकमहितनूपुरं मृदुलकुसुमकेयूरम्।
परिधापयन् नयनयोरञ्जन् श्रुतिपूरं सुखपूरम्।।६।।
चित्रकूटमण्डनं मनसि मृडयत रामं सहसीतम्।
भवभयनिरयनुत्तमे गायत गिरिधरगीतसुगीतम्।।७।।

**भौमी-** अब वासन्ती सखी गा रही है-"अहो! रसमय वायु से युक्त पयस्विनी जी के तट पर पल्लव और पत्तों से निर्मित कुटी में मतवाले मधुर-मधुर गुंजन करने वाले, भ्रमरों से सुशोभित, कमलों से अलंकृत निर्मल जल से संपन्न, वसन्त ऋतु में श्रीहरि भगवान राम चित्रकूट वन में विहार कर रहे हैं। संपूर्ण दिगन्तों के लिये अनुकूल वसन्त में सीताजी को रमाते हुये श्रीराम पयस्विनी तट पर लगे हुये उद्यान में रम रहे हैं। सुन्दर आम्र पल्लव के सुंदर भवन में कोयलों की वाणी से सुशोभित और काम के मित्र वसंत को सुखी करने वाले, बोल रहे पक्षियों से सुशोभित और मलयानिल से व्याप्त मालती लता के कुंज में श्रीहरि विहार कर रहे हैं। रहस्य विहार में कुशल श्रीराम भूमिनन्दिनी सीताजी के वक्षोरुह पर रोमांचित हाथ की अंगुलियों से पाटीर की रचना करते हुये प्रियतमा सीता जी के मुख को चूमते हुये और उनसे संयोगात्मक काम को और उद्दीप्त करते हुये श्रीचित्रकूट वन में विहार कर रहे हैं। आरम्भ में भी सुखप्रद श्रेष्ठ आलिंगन से पसीने-पसीने हुये पुलकित शरीर वाले प्रियतमा सीताजी के अधरासव-सुधा का पूर्ण रूप से पान किये हुये और अनंत सागरों के समान गम्भीर श्रीराम चित्रकूट वन में विहार कर रहे हैं। पृथ्वीपुत्री सीताजी के कल्याणमय भाग्यस्वरूप मस्तक को और प्रियतमा के सुंदर कपोल को मनःशिला के तिलक से तिलकांचित करते हुये और सीताजी में ही अपने मन को निश्चल करते हुये, श्रीराम चित्रकूट में विहार कर रहे हैं। अपने हाथ से चुने हुये और उन्हीं के द्वारा बनाये हुये सुंदर पुष्पमय आभूषणों से जनकनन्दिनीजी का श्रृंगार करते हुये और उन्हीं के वक्ष पर अपनी हार जैसी भुजाओं को रखे हुये श्रीराम चित्रकूट वन में विहार कर रहे हैं। सीताजी के चरणों में महावर और पुष्पों से रचित नूपुर तथा भुजाओं में कोमल पुष्प निर्मित केयूर धारण कराते हुये नयनों में कामधेनु के घी से निर्मित सूरमा लगाते हुये तथा कानों में सुखपूर्ण कुंडल धारण कराते हुये प्रभु श्री चित्रकूट में विहार कर रहे हैं। इस प्रकार चित्रकूट के श्रृंगार स्वरूप सीतासहित श्रीराम को सुखी करो और भवसागर के भय तथा नरक को नष्ट करने के लिए **गिरिधर** कवि के द्वारा गाये हुये सुंदर गीतों को गाओ। यही तुम सभी श्रीरामभक्तों के लिये मुझ सीतासखि वासंती का निर्देश है।

## गीत संख्या-१२

विहरति हरिश्चित्रकूटे हे भूमिपुत्रीमुपयाय भूमिपुत्रीमुपयाय।।
लताकुञ्जगृहे रामः सीतां शृङ्गारयन् नखशिखनिसर्गरम्यां नितरां निहारयन्।
विहरति कलितकर्णकूटे हे सीधुसारघं निपाय सीधुसारघं निपाय।।१।।
आलक्तेन चरणनलिननखजातं रञ्जयन् पाटलपयोजभानुभौममदं भञ्जयन्।
विहरति सुवर्णस्वर्णकूटे हे भौम्यां मनः सन्निधाय भौम्यां मनः सन्निधाय।।२।।

**रचयन्नुरोरुहयोश्चित्रचित्रपत्रकं सचयन् मनोभवमनोज्ञशास्त्रसूत्रकम्।**
**विहरति विचित्रवर्णकूटे हे सर्वदुःखं परिहाय सर्वदुःखं परिहाय।।३।।**
**कुसुमचन्द्रहारं शनैः कण्ठे निधापयन् कर्णयोश्च कर्णिकारकुण्डले विधापयन्।**
**विहरति लसत्षडर्णकूटे हे कविगिरिधरसुखाय कवि गिरिधरसुखाय।।४।।**

**भौमी-** वासन्ती फिर गाती है– अहो! भूमिपुत्री सीताजी के समीप जाकर श्रीहरि चित्रकूट में विहार कर रहे हैं। लताकुंज गृह में सीताजी का श्रृंगार करते हुये स्वभाव से सुंदरी जनकनन्दिनीजी को नख से शिखा-पर्यन्त सूक्ष्मता से निहारते हुये, कर्मों को समाप्त करने वाले श्रीचित्रकूट में सीताजी के अधरासव का पान करके श्रीराम चित्रकूट में विहार कर रहे हैं। महावर से सीताजी के चरणकमलों के नखों को रँगते हुये, इसी ब्याज से गुलाब, कमल, सूर्य एवं मंगल के मद को चूर करते हुये श्रीराम जनकनन्दिनीजी में मन को सुस्थिर करके सुंदर वर्ण वाले स्वर्णकूट पर विहार कर रहे हैं। सीताजी के वक्षोरुहों पर चन्दन से सुंदर चित्रपत्रक की रचना करते हुये और इसी बहाने से कामशास्त्र के मनोज्ञ सूत्रों की रचना करते हुये श्रीराम अपना सम्पूर्ण दुःख भूलकर विचित्र वर्ण वाले चित्रकूट पर विहार कर रहे हैं। सीताजी के कण्ठ में अपने द्वारा निर्मित पुष्प चंद्रहार धारण कराते हुये और उनके कानों में कर्णिकार पुष्प का कुंडल पहनाते हुए श्रीराम पाया हुआ राज्य छोड़कर षड़क्षर राममंत्र जपसमूह से सुशोभित चित्रकूट में विहार कर रहे हैं। प्रियाजी के कमलनेत्रों को श्यामल अंजन से अंजित करते हुए एवं विस्वस्त सीताजी को अपनी बाहुलता में लपेटते हुए श्रीराम **गिरिधर** कवि के सुख के लिये सुंदर भक्तिरूपषड़र्ण कूट में श्रीराम विहार कर रहे हैं।

## गीत संख्या-१३

**विहरतः सीतारघुवीरौ महितमन्दाकिनीतीरे।।**
**अन्योन्यकण्ठबद्धवरबाहुलतिकौ सुरभितशिशिरसमीरे महितमन्दाकिनीतीरे।।१।।**
**निरावारणनलिनचरणकृतपादचारौ कलितवलितवानीरे महितमन्दाकिनीतीरे।।२।।**
**विहितविविधविधविशदविहारौ मण्डितमुनियोगिधीरे महितमन्दाकिनीतीरे।।३।।**
**परस्परं लसन्तौ हसन्तौ लसन्तौ नीरजनिर्मलनीरे महितमन्दाकिनीतीरे।।४।।**
**हारं हारं हरिणौ हरी हर्षयन्तौ गिरिधरहृदयकुटीरे महितमन्दाकिनीतीरे।।५।।**

**भौमी-** श्रीसीता एवं रघुवीरजी पूजनीय मंदाकिनीजी के तट पर विहार कर रहे हैं। एक-दूसरे को गलबहियाँ डाले हुये सुगंधित शीतल वायु से युक्त मंदाकिनी तट पर सीतारामजी विहार कर रहे हैं। सुंदर लता जैसे मुड़े हुये बेतों से युक्त मंदाकिनी तट पर पनही से रहित चरणकमल से विचरण करते हुए सीतारामजी विहार कर रहे हैं। योगियों और धीर मुनियों से सुशोभित मंदाकिनी तट पर अनेक प्रकार की विहार क्रियाओं को सम्पन्न किये हुये अब भी सीतारामजी विहार ही कर रहे हैं। धूल से रहित निर्मल जल वाले मंदाकनी तट पर एक दूसरे से बात करते हुये, हँसते हुये, सुशोभित होते हुये सीतारामजी विहार कर रहे हैं। हरिण और हरिणी के समान परब्रह्म परमात्मा रूप दंपती सभी को प्रसन्न करते हुये, **गिरिधर** कवि के हृदय कुटीर में विहार कर रहे हैं।

**विशेष-** यह गीत नचारी धुन में निबद्ध है।

## गीत संख्या-१४

**चित्रकूटगिरिविचित्रगह्वरनिर्झरपवित्रमहीहृदयहारसुरनदी पयस्विनी।।१।।**
**विलसितलक्ष्मणललामलोकलोचनाभिरामरामवामवाममैथिलिमनस्विनी।।२।।**
**कलितराघवीविहारसुधाधवलधवलधारमज्जनहतसमलभारभरतरस्विनी।।३।।**
**सुरभिशिशिरशुचिसमीरमुखरितखगपिकसुकीरमदिरमधुरमधुपधीरमुनिमहस्विनी।।४।।**
**गिरिधरगिरिगीयमानसुजननयननीयमानरामचरणसरोरुहरजोयशस्विनी।।५।।**

**भौमी-** अब महाकवि ध्रुपद में पयस्विनी का वर्णन प्रस्तुत कर रहे हैं-चित्रकूट पर्वत पर विचित्र वन और झरनों से पवित्र पृथ्वी की हृदय हार बनी हुयी देवनदी पयस्विनीजी विराज रही हैं। जहाँ लक्ष्मणजी के लिये रत्नस्वरूप संसार के नेत्रों को आनंद देने वाले श्रीराम की पवित्र धर्मपत्नी मनस्विनी मैथिली सुशोभित हो रही हैं। वह पयस्विनी रामप्रिया सीताजी के विहार से युक्त तथा अमृत जैसी धवल धारा से सम्पन्न स्नान मात्र से मलभार को नष्ट करने वाले अलौकिक वेग से सम्पन्न हैं। जो शीतल, मंद, सुगंध वायु से युक्त, कोयल, तोते आदि पक्षियों को मुखरित करने वाली, मतवाले भ्रमरों के गुंजार से मुनियों को महोत्सव प्रदान करने वाली हैं। **गिरिधर** कवि की वाणी में गाये जाते हुये और सज्जनों के नयनों में निवास करने वाले श्रीरामचंद्रजी के चरणकमल की धूलि के यश से पवित्र हो रही हैं।

## गीत संख्या-१५

**सीता श्रीरामं प्रति-**

**आर्यपुत्र तत्र भवतैव साकं यथा स्वश्चित्रकूटेऽपि रमे।।**
**मन्दाकिन्यां मुदा त्रिकालं भवता सह संस्नामि।**
**सुधासमानं कन्दमूलफलशाकं वा अश्नामि।।**
**राजपुत्र तत्र भवतैव साकं यथा स्वश्चित्रकूटेऽपि रमे।।१।।**
**कामदगिरिं समं सानन्दं भवता परिक्रमामि।**
**बद्धभवद्गलचारुभुजलता वनिता वनं भ्रमामि।।**
**भूपपुत्र तत्र भवतैव साकं यथा स्वश्चित्रकूटेऽपि रमे।।२।।**
**दर्शं दर्शं विपिनसम्पदं स्वापदमानन्दामि।**
**वने वसन्ती कोटिकोटिसुरपुरोऽप्यहं निन्दामि।।**
**मैत्रपुत्र तत्र भवतैव साकं यथा स्वश्चित्रकूटेऽपि रमे।।३।।**
**भवता समं कटेऽपि मदनशैयावत् सुखं शयेऽहम्।**
**सीता सुरपतिगृहवत् कुट्यां गिरिधरप्रभुं श्रयेऽहम्।।**
**शाक्रपुत्र तत्र भवतैव साकं यथा स्वश्चित्रकूटेऽपि रमे।।४।।**

**भौमी-** अब सीताजी श्रीराम को संबोधित करके कहती हैं- हे आर्यपुत्र! आदरणीय आपके साथ मैं चित्रकूट में भी साकेतलोक की भाँति ही रम रही हूँ और रमती रहूँगी। मैं आप के ही साथ मंदाकिनी में तीन बार स्नान करती हूँ और आपके ही साथ अमृत के समान स्वादिष्ट कन्द-मूल, फल और शाक खा लेती हूँ। हे राजपुत्र! आपके साथ मैं चित्रकूट में भी स्वर्ग के समान रमती हूँ। मैं आपके ही साथ कामदगिरि की आनंद से परिक्रमा करती हूँ और आपके गले में हाथ डालकर निःसंदेह वन में भ्रमण करती हूँ। हे भूप के पुत्र! आपके साथ मैं स्वर्ग की भाँति चित्रकूट में रमती हूँ। इस प्रकार वन की संपत्ति और पशुधन को देखकर मैं बहुत प्रसन्न होती हूँ। वन में रहती हुयी मैं करोड़ों-करोड़ों अमरावतियों की भी निन्दा करती हूँ। हे सूर्य के गोत्र में प्रकट प्रभु! आपके साथ मैं चित्रकूट में भी स्वर्ग की भाँति रहूँगी। आपके साथ शैय्या ही की भाँति मैं कुश की चटाई पर सोऊँगी। मैं सीता कुटी में इन्द्रलोक की कल्पना करके श्रीराम का श्रयण करूँगी। हे इन्द्र के मित्र के पुत्र श्रीराघव! आपके साथ रहकर मैं चित्रकूट में स्वर्ग की भाँति रह लूँगी।

## गीत संख्या-१६

**श्रीरामः सीतां प्रति-**

**सीते सार्धं तत्र भवत्या विपिनं स्वरिव रोचते मे।।**
**सुरपुरायते किल कान्तारं प्रकृतिभामिनीश्रितसुखसारम्।**
**प्रीते साकं तत्रभवत्या विपिनं स्वरिव रोचते मे।।१।।**
**इह खगमृगाः परिजनायन्ते धृतनगनगाःपुरजनायन्ते।**
**स्फीते सममिह तत्र भवत्या विपिनं स्वरिव रोचते मे।।२।।**
**शक्रसदनमिव पर्णकुटीरं सीलितशीतलसुरभिसमीरम्।**
**ह्रीते किल सह तत्र भवत्या विपिनं स्वरिव रोचते मे।।३।।**
**द्विगुणितसप्तसमागिरिगह्वरविजनं सुखं सेवितुं गिरिधर-**
**गीते सध्र्यङ् तत्र भवत्या विपिनं स्वरिव रोचते मे।।४।।**

**भौमी-** अब श्रीराम सीताजी के प्रति कह रहे हैं- हे सीते! आपके साथ मुझे वन स्वर्ग की भाँति लग रहा है। हे सीते! आपके साथ मुझे यह वन इंद्रपुरी के समान लग रहा है। इसमें प्रकृति ने संपूर्ण सुखों का सार डाल दिया है। यहाँ पशु-पक्षी परिजन जैसे लग रहे हैं और मणियों को धारण करने वाले वृक्ष पुरजन जैसे लग रहे हैं। वस्तुतः आप आदरणीय के साथ रहकर मुझे चित्रकूट वन स्वर्ग जैसा सुहावना लग रहा है। शीतल, मंद, सुगंध वायु से युक्त यह पर्णकुटी भी मुझे इंद्र के भवन के समान लग रही है और आदरणीय आपके साथ चित्रकूट साकेत जैसा प्रतीत हो रहा है। हे गिरिधर कवि के द्वारा गायी हुयी सीते! आपके साथ चौदह वर्षपर्यन्त गंभीर वन और निर्जन स्थान में निवास करना भी मेरे लिये बहुत सुखप्रद रहेगा क्योंकि आपके साथ मुझे वन स्वर्ग की भाँति रुचता है।

**विशेष-** यह गीत पूर्वी लोकधुन में निबद्ध है।

## गीत संख्या-१७

**किं च-**

**त्वया सह मया सुखेन वने स्थीयते सीते नैव गृहमधींयते।।**
**रम्यश्चित्रकूटगिरिरेष शुचिमुनितपसा क्षपितक्लेशः।**
**पुण्यप्रदेशो हतभयलेशः सुखं वनवासकाल इह नीयते।।१।।**
**प्रकृतिसुन्दरी विहतविभ्रमा विपिनविभासंलसितसम्भ्रमा।**
**सुखदा कामदगिरिपरिक्रमा यां विधाय नृभिर्यमान्नैव भीयते।।२।।**
**स्थिरा स्थावरा इव तपस्विनः खगा मृगास्तरवो मनस्विनः।**
**प्लवङ्गमास्तरुणातरस्विनो यैर्न स्वप्नेऽपि मनो मले दीयते।।३।।**
**भारतहृदयहारमिव हृद्यं स्मरणमात्रतो हरत्यवद्यम्।**
**चित्रकूटशुचिवनमनवद्यं गिरिधरेण वै गिर्वाणगिरा गीयते।।४।।**

**भौमी-** और भी- हे सीते! आपके साथ मैं सुखपूर्वक वन में रह रहा हूँ और घर का भी स्मरण नहीं कर रहा हूँ। यह चित्रकूट पर्वत बहुत रमणीय है। पवित्र मुनियों के तप से यहाँ क्लेश नहीं रह गये हैं और भय के सम्बन्ध से रहित यह प्रदेश अत्यन्त पवित्र है। यहीं रहकर मैं वनवास का बहुत-सा काल सुखपूर्वक बिता रहा हूँ, घर का स्मरण नहीं कर रहा हूँ। यहाँ की प्रकृति बहुत सुन्दरी, भ्रमरहित और वन की शोभा से सुखद विलासवती हो गयी है और यह कामदगिरि की परिक्रमा इतनी मनोहर है कि जिसे करके लोग यमराज से भी नहीं डरते। यहाँ स्थावर अर्थात् पाषाण तपस्वियों की भाँति स्थिर हैं। पशु-पक्षी और वृक्ष सबने अपने मन को वश में कर रखा है और यहाँ के वानर भी युवक वेग संपन्न साधक ही दिख रहे हैं जो स्वप्न में भी अपना मन मल की ओर नहीं ले जाते। यह चित्रकूट पर्वत निर्दोष भारत का हृदय हार है। यह स्मरणमात्र से पापों को नष्ट कर देता है। इसलिये **गिरिधर** कवि द्वारा भी इसका संस्कृत भाषा में गान किया जा रहा है।

## गीत संख्या-१८

**रमे रामो रमे नित्यं विचित्रे चित्रकूटेऽस्मिन्।**
**स्वविश्रामो रमे नित्यं विचित्रे चित्रकूटेऽस्मिन्।।**
**महितमन्दाकिनीतीरे सहितवानीरसन्नीरे।**
**जनारामो रमे नित्यं स्वचित्रे चित्रकूटेऽस्मिन्।।१।।**
**सुकिसलयपर्णकौटीरे भवघ्ने सौख्यशौटीरे।**
**सहश्यामो रमे नित्यं सुचित्रे चित्रकूटेऽस्मिन्।।२।।**
**ऋषीणां सत्तपःपूते मुनीनां स्वाश्रमीभूते।**
**घनश्यामो रमे नित्यं वहित्रे चित्रकूटेऽस्मिन्।।३।।**

**लसन्मुनिजनजटाजूटे क्षपितगिरिधरविषयकूटे।**
**विजितकामो रमे नित्यं पवित्रे चित्रकूटेऽस्मिन्।।४।।**

**भौमी-** हे रमे! मैं राम इस विचित्र चित्रकूट में नित्य ही रमता हूँ। अपने भक्तों को विश्राम देने वाला मैं इस सुंदर चित्र वाले चित्रकूट में नित्य रमता हूँ। बेंत और निर्मल जल से युक्त, सम्मानित मंदाकिनी तट वाले, अपने ही चित्र से युक्त, इस चित्रकूट में भक्तों के लिये उद्यान के समान होकर भी मैं नित्य रमता हूँ। सुंदर पल्लव और पत्तों के कुटीर से युक्त, भवबाधा को नष्ट करने वाले, सुख के साधनों से सम्पन्न, सुंदर चित्रों से युक्त इस चित्रकूट में आप श्रीश्यामा के साथ निरंतर रमता हूँ। ऋषियों की तपस्या से पवित्र और मुनियों के अपने आश्रम के समान, भवसागर के लिये जहाजरूप इस चित्रकूट में मेघ के समान श्यामल मैं नित्य रमता हूँ। मुनिजनों के जटाजूट से युक्त **गिरिधर** कवि के विषय कूट को नष्ट करने वाले इसी पवित्र चित्रकूट में कामवासना को जीतने वाला मैं निरंतर ही रमता हूँ।

## गीत संख्या-१९

**अन्यच्च-**

**रमसे नु यत्र नित्यं सीते त्रिलोक्यां सैव धन्यश्चित्रकूटः।।**
**प्रोज्झितसुरपतिदुर्लभराज्या विस्मृतपितृश्वशुरसाम्राज्या।**
**क्रमसे नु यत्र सुखं सीते त्रिलोक्यां सैव मान्यश्चित्रकूटः।।१।।**
**कृतकान्तकण्ठबाहुवल्लीसरित्तीरे कुसुमितकदम्बकञ्जमल्लीसमीरे।**
**भ्रमसे नु यत्र सुखं सीते त्रिलोक्यां सैव जन्यश्चित्रकूटः।।२।।**
**यत्र विराजसे तुलसीतरुं रोपयन्ती चरणप्रपन्नपापपूगं लोपयन्ती।**
**क्षमसे नु यत्र सुखं सीते त्रिलोक्यां स वरण्यश्चित्रकूटः।।३।।**
**यत्र गापयसे धीरान् कीरान् गिरिधरेशं यत्र ध्यापयसे रामं मुहुर्मुनिवरेशम्।**
**नमसे नु यत्र सुखं सीते त्रिलोक्यां स शरण्यश्चित्रकूटः।।४।।**

**भौमी-** और भी- हे सीते! जहाँ आप नित्य रमती हैं, वही चित्रकूट त्रिलोकी में धन्य है। देव-दुर्लभ राज्य को छोड़कर, पिता और ससुर के साम्राज्य को भूलकर, सीते! आप जहाँ धीरे-धीरे चरण रखती हैं वही चित्रकूट त्रिलोकी में सम्माननीय है। मुझ पति के गले में हाथ डालकर, विकसित कमल, कदम्ब और चमेली के वायु से युक्त नदी तट पर जहाँ आप सुखपूर्वक भ्रमण करती हैं, वही चित्रकूट तीनों लोकों में सफल जन्म वाला है। जहाँ तुलसी का पौधा लगाती हुयी, अपने चरण शरणागतों के पापसमूहों को नष्ट करती हुयी, आप जनकनंदिनीजी वन की विडंबनाओं को सुखपूर्वक सह लेती हैं, वह चित्रकूट तीनों लोकों में श्रेष्ठ है। हे सीते! जहाँ आप तोतों से भी **गिरिधर** कवि के स्वामी मुझ राम को गवाती रहती हैं और जहाँ श्रेष्ठ मुनियों से मेरा ध्यान कराती रहती हैं, जहाँ आप सुखपूर्वक संतों को नमन करती रहती हैं, वही चित्रकूट तीनों लोकों में एकमात्र शरण देने वाला है।

## गीत संख्या-२०

गायति कविः-

**राजतेऽधिचित्रकूटं स्वङ्गीकृत्य जटाजूटं भङ्क्त्वा भक्तकुत्रिकूटं चित्रकूटविहारी।।१।।**
**नीरनीरधरश्यामो लोकलोचनाभिरामो विभाविजितकोटिकामो वामदर्पप्रहारी।।२।।**
**नवलनलिनचरणयुगो बाहुदण्डाभरणयुगो गोपकन्यकासुहार्दकलशकलितसुवारी।।३।।**
**करतलधृतविशिखचापः शिरषि लसितकचकलापः कोटितपनसुप्रतापः प्रणतविरुदविचारी।।४।।**
**जनकसुताप्राणधनो धन्वी जितसजलघनो महितहितस्नेहवनो गिरिधरभयनिवारी।।५।।**

**भौमी-** अब कवि स्वयं गा रहे हैं-जटाजूट स्वीकार करके भक्तों का निंदित त्रिकूट काम, क्रोध, लोभ को समाप्त करके चित्रकूट विहारी श्रीरामजी चित्रकूट में विराज रहे हैं। नीले बादल के समान श्यामल, संसार के नेत्रों के अभिराम, करोड़ों कामों के विजेता, दुष्टों के अहंकारहारी श्रीहरि चित्रकूट में विराज रहे हैं। नवीन कमल के समान जिनके दोनों चरण हैं, जिनके बाहुदंड हल के जुवा के समान सुंदर लग रहे हैं और जनकनन्दिनी सीताजी के वक्षोरूह कलश ही जिनके मन गजेन्द्र का बन्धन है। हाथ में धनुष-बाण लिये हुये, सिर पर जटाजूट से सुशोभित, कोटि सूर्यों के समान प्रताप वाले और प्रणत के विरूद् पर विचार करने वाले प्रभु चित्रकूट में विराज रहे हैं। सीताजी के प्राण ही जिनके धन हैं, ऐसे कुशल धनुर्धर सजल मेघ को जीतने वाले, अनुरागियों के प्रेम वन का सम्मान करने वाले, **गिरिधर** कवि के भय के निवारक चित्रकूट विहारी श्रीराम चित्रकूट में विराज रहे हैं।

**विशेष-** यह गीत झपताल में निबद्ध है।

## गीत संख्या-२१

**स्फटिकशिला स्वनाविला सदुर्मिला सुपिच्छिला सीतासाममञ्जुलविहारसुस्थली।।१।।**
**मन्दाकिनीपयःपूरसिक्ता शीतलफेनिलसैकता श्रिताप्तमुनितपस्तपस्थली।।२।।**
**परितःश्रितकुटजकुसुमविहगपरमगमसुगमभगवदुचितनिचितनिकरशरजपस्थली।।३।।**
**लक्ष्मणहतप्रत्यवायशमदमयमकलितकाययुक्तयोगिमुनिनिकायसाधनास्थली।।४।।**
**गिरिधरनयनाभिरामनीलसरोरुहश्यामरामचन्द्रमश्चकोरी लसन् मैथिली।।५।।**

**भौमी-** श्रीस्फटिक शिला अत्यंत निर्मल, मंदाकिनी की लहरों से युक्त तथा बहुत चिकनी जो सीतारामजी के मधुर विहारस्थली के रूप में प्रसिद्ध है। जो मंदाकिनी के जल से निरंतर सिंची रहती है। जो शीतल फेन से युक्त सुंदर तटों वाली, श्रेष्ठ मुनियों की तपस्थली बन गयी है। जो चारों ओर से कुटज के फूलों से घिरी हुयी, पक्षियों से रमणीय, विषयियों के लिये अगम, भक्तों के लिए सुगम, भगवान श्रीराम के लिये अनुकूल, पृथ्वी पर उगे हुए सरकंडों और जप की सामग्री की स्थली बन गयी है। लक्ष्मणजी के द्वारा जिनके विघ्न नष्ट किये गये हैं, ऐसे शम, दम, यम से सुशोभित शरीर वाले युक्त और युंजान योगियों मुनियों की साधनास्थली है। उसी स्फटिक शिला पर **गिरिधर** कवि के नेत्रों को आनंद देने वाले, नीलकमल के समान श्यामल, श्रीरामरूप चंद्रमा की चकोरी मिथिलाधिराज कन्या श्रीसीताजी सुशोभित हो रही हैं।

## गीत संख्या-२२

जय जय रघुकुमुदचन्द्र चित्रकूटविहारिन्।
जय जय शोभासमुद्र सत्रिकूटविहारिन्।।
परमकारुणिककृपालो निर्व्यलीकजनदयालो।
दीनबन्धो दयासिन्धो विनतविपद्विदारिन्।।१।।
वल्कलकटिकलितवेष सहकृतजानकीशेष शेषशेषशेषिन्।
जय विषयविषनिवारिन्।।२।।
हरहृन्मानससुहंस हंसवंशशुभवतंस हतनृशंस।
सुप्रशंस लोकसौख्यकारिन्।।३।।
मन्दाकिनीतटाभरण ललितनवलनलिनचरण।
गिरिधरकविदुरितहरण भक्तभयप्रहारिन्।।४।।

**भौमी-** रघुकुल रूप कुमुद के चन्द्रमा, चित्रकूट विहारी श्रीराम आपकी जय हो। शोभा के समुद्र सज्जनों के ज्ञान-वैराग्य और भक्ति कूट में विहार करने वाले प्रभु आपकी जय हो। हे परमकारुणिक! हे कृपालो! हे निष्कपट जनों पर दया करने वाले दीनबंधु कृपा के सागर प्रणतजनों के विपत्ति को नष्ट करने वाले आपकी जय हो। कटि प्रदेश में वल्कल वस्त्र धारण करने वाले, जानकीजी और शेष के भी अवतारी लक्ष्मणजी को सेवक बनाने वाले, शेष नाग के भी स्वामी, विष्णु के भी शेषी अर्थात् स्वामी महाविष्णु, विषय रूप विष को समाप्त करने वाले प्रभु आपकी जय हो। हे शंकरजी के हृदय मानस के राजहंस, सूर्यवंश के आभूषण, नृशंसों को मारने वाले, श्रेष्ठ प्रशंसा से युक्त, लोकों को आनंद देने वाले प्रभु राम आपकी जय हो। मंदाकिनी तट के आभूषण, नवीन कमलचरण, **गिरिधर** कवि के पाप को हरने वाले, भक्तभयहारी श्रीचित्रकूटविहारी प्रभु आपकी जय हो।

**विशेष-** यह गीत एक ताल में निबद्ध है और इसे वागीश्वरी राग में गाना चाहिये।

## गीत संख्या-२३

राजति रघुरामचन्द्रश्चित्रचित्रकूटे।।
शिरषि कलितजटाजूटो विलसितसाद्गुण्यकूटो भीषणभवकाननलवित्रचित्रकूटे।।१।।
निहितधनुश्शरनिषङ्गो महितस्वजनमनोरङ्गो विहितसुजनसङ्गः सुपवित्रचित्रकूटे।।२।।
जानकीलक्ष्मणसमेतो भक्तमनो वननिकेतो विहगमृगवरूथवनविचित्रचित्रकूटे।।३।।
प्रणतकामपारिजातो ललितवदनवारिजातो गिरिधरभववारिधिवहित्रचित्रकूटे।।४।।

**भौमी-** सुंदर चित्रकूट में रघुकुल में प्रकट श्रीराम सुशोभित हो रहे हैं। भयंकर संसार वन को काटने के लिये हँसिया शस्त्र के समान चित्रकूट में सिर पर जटाजूट धारण किये हुये, श्रेष्ठ गुणों के समूह से युक्त, श्रीराम विराज रहे हैं। तरकश और धनुष-बाण लिये हुये, स्वजनों की मनोरंगभूमि को सम्मानित करते हुये, संतों का

साथ किये हुये, श्रीराम पवित्र चित्रकूट में विराज रहे हैं। भक्त को मनुष्य रूप में विश्राम भवन बनाने वाले, प्रभु श्रीराम जानकीजी और लक्ष्मण जी के साथ, पक्षी, मृगों से सुसेवित वनों से विचित्र चित्रकूट में विराज रहे हैं। प्रणतजनों की कामना के लिये कल्पवृक्षस्वरूप, सुंदर नवीन कमल के समान मुख वाले श्रीराम, **गिरिधर** कवि के भवसागर के लिये जलयान बने हुये, चित्रकूट में विराज रहे हैं।

**विशेष–** यह गीत भी एक ताल में निबद्ध है। इसे भी वागीश्वरी राग में गाना चाहिए।

## गीत संख्या–२४

**लसति रघुरामश्चिरं चित्रकूटे।।**
**दधानो जटां काण्डकं चण्डचापम्।**
**वसानो वरं बल्कलं सत्प्रतापम्।।**
**विजितभृगुरामश्चिरं चित्रकूटे।१।।**
**कनत्कर्णकारश्रुतिश्चारुहासः ।**
**लसत्सन्मतिः सत्कृतिः सद्विलासः।।**
**महितयदुरामश्चिरं चित्रकूटे।।२।।**
**विदेहात्मजाप्रोल्लसद्वामभागो ।**
**लसल्लक्षणे लक्ष्मणे सानुरागो।।**
**यवितनररामश्चिरं चित्रकूटे।।३।।**
**विधुन्वन्धनुःपर्णशालानिकेतो ।**
**वितन्वन् गिरं गिरिधरीं सत्समेतो ।।**
**लसति प्रभुरामश्चिरं चित्रकूटे।।४।।**

**भौमी–** रघुवंशियों को रमाने वाले श्रीराम अनन्तकालपर्यंत चित्रकूट में सुशोभित हैं। जटा, अमोघ बाण और भयंकर धनुष धारण किये हुए, परम प्रतापी, श्रेष्ठ वल्कल वस्त्र को धारण किये हुए, परशुराम को जीतने वाले प्रभु चित्रकूट में विराज रहे हैं। कानों में सुंदर कर्णिकार कुंडल धारण किये हुये, सुंदर हास से युक्त, श्रेष्ठ बुद्धि, श्रेष्ठ कृति और श्रेष्ठ विलास वाले, भावी बलराम के भी पूज्य श्रीराम चित्रकूट में विराज रहे हैं। सीताजी के द्वारा जिनका वाम भाग सुशोभित है जो सुशोभित लक्षणों वाले लक्ष्मण पर निरंतर अनुरागवान रहते हैं, जिन्होंने सामान्य मनुष्यों को भी गतिमान बनाया, ऐसे श्रीराम चित्रकूट में विराज रहे हैं अथवा जिन्होंने आत्मारामों को भी गतिमान बनाया, वे प्रभु चित्रकूट में विराज रहे हैं। पर्णशाला को अपना भवन बनाकर संतों के साथ विराजमान हुये, धनुष को फेरते हुये, प्रभु श्रीरामचंद्रजी अनादि काल के लिये चित्रकूट में सुशोभित हैं।

## सन्दर्भश्लोकः

**विलोलद्वानीरे मधुमलपयन्दारविलुलन्**
**मरन्दाञ्चन्नीरे शिशिरितसमीरे सुपयसि।**

**प्रमाद्यन् माकन्दे विदलदरविन्दे मधुकरे**
**वसन्ते वासन्ती मृदुगिरमवोचद् जनकजाम्।।१।।**

**भौमी-** जिसमें बेंत लता धीरे-धीरे हिल रही है, जिसमें मधुर मलय वायु से गिरते हुये मकरन्द से जल सुशोभित हो रहा है, जिसमें वायु शीतल है और जल निर्मल है। जिसमें आम्र की मञ्जरी मतवाली हो रही है, जहाँ भौंरा बाहर निकलने के लिये धीरे-धीरे कमल की पंखुड़ियों को खोल रहा है, ऐसे बसन्त ऋतु में वासन्ती सखी ने जनकनन्दिनी सीताजी से इस प्रकार कोमल वाणी में कहा।

## गीत संख्या-२५

**मधुरमधौ मधुमाधवमधुरितमधुमन्दाकिनितीरे**
**किसलयलसितकुशेशयशयने प्रसृमरपर्णकुटीरे।।**
**सीतामाह्वयति त्वां रामः।**
**मदनमनोरथरथोऽप्यतिरथो दशरथमनोऽभिरामः।।१।।**
**ऊष्णमुच्छ्वसिति नैव विश्वसिति लभते नैवस्थैर्यम्।**
**भवति प्रतीक्षारतस्त्यजति ननु धीरमणिरहोधैर्यम्।।२।।**
**क्षणमपि तिष्ठति क्षणमुत्तिष्ठति श्रयते क्षणमपि शयनम्।**
**क्षणदायां नो क्षणं विश्रमं लभते स्फारितनयनम्।।३।।**
**अन्तरिते लक्ष्मणे प्रहरिणि हरिणिदृङ् न कुरु विरामम्।**
**शीलय शीलनिधिं सीमन्तिनि रमय रमे श्रीरामम्।। ४।।**
**न कुरु विलम्बं चिकुरकदम्बं शुचि सीमन्तय सीते।**
**भज भजनीयं सृज सृजनीयं गापय गिरिधरगीते।।५।।**

**भौमी-** वासन्ती कहने लगी-हे सीते! अत्यन्त मधुर वसन्त ऋतु में, मधुर वसन्त के मित्र काम के कारण, मधुरित अत्यन्त मधुर मंदाकिनी के तट पर सुंदर पर्णकुटीर में सुसज्जित, पल्लव से युक्त, कमल की शैय्या पर स्मरणात्मक, मदन के मनोरथ रथ पर आरूढ़, अति रथ होकर भी दशरथ जी के मन को आनन्द देने वाले श्रीराम आपका आह्वान कर रहे हैं। वे गरम निःश्वास ले रहे हैं, किसी पर विश्वास नहीं कर रहे हैं। स्थिरता को प्राप्त नहीं कर रहे हैं, धीर शिरोमणि होकर भी प्रभु श्रीराम, आपकी प्रतीक्षा करते हुये अपना धैर्य छोड़ रहे हैं। रात्रि में भी अपने नेत्रों को फाड़े हुये प्रभु क्षण भर भी विश्राम नहीं पा रहे हैं। कभी बैठते हैं, कभी उठते हैं, कभी शैय्या पर लेट जाते हैं। एक क्षण भी विश्राम नहीं लेते। पहरा देने वाले लक्ष्मणजी के दूर चले जाने पर हे मृगाक्षी सीते! अब विराम मत लीजिये। हे सीमन्तीनि! अब आप शीलनिधान श्रीराम के पास पधारिये और आपसे अभिन्न साकेत की सीताजी को रमाने वाले श्रीराम को रमाइये। हे सीते! अब विलंब मत कीजिये, अपने केशों को सँवारिये, भजनीय श्रीराम को भजिये और सर्जनहार आनंद की सर्जना कीजिये और **गिरिधर** द्वारा गाये हुये श्रीराम को ही सभी वैष्णवों से गवाइये।

## सन्दर्भश्लोकः

अथ सखीवचनेन विदेहजा
समभिगम्य शनैः स्मरसुन्दरम्।
रघुपतिं पतितान्वयपावनं
स्वजनमाप दृशोऽनवमं फलम्।।१।।

**भौमी–** इसके अनन्तर वासन्ती सखी का वचन सुनकर जनकनन्दिनी श्रीसीताजी ने प्रभु के पास धीरे से जाकर काम को भी जिनसे सुंदरता प्राप्त हुयी, रघुकुल के स्वामी, पतितकुल के पावन, स्वजन श्रीराम को देखकर नेत्रों का अनुपम फल पा लिया।

## गीत संख्या–२६

गायति श्रीसीता–

विजयसे विश्वविलोचनचोर।।

हरमानसमानसमरालवर खलकुलकालानलकरालतर।
धृतामोघशरचण्डधनुर्धर रणकर्कशतरघोर।।१।।
तनुरुचिविजितनभस्यनीरधर भववारिधिमन्दरहरिकन्धर।
कुतुककदिष्यमाणदशकन्धर रिपुकुलकुलिशकठोर।।२।।
विशदविरुदमुखरितशुकशारद नामसोममोदितमुनिनारद।
निगमागमवरबोध विशारद कोसलराजकिशोर।।३।।
जननीजनकगुरुबन्धुविकासिन् चित्रकूटगिरिकाननवासिन्।
गिरिधरमनःकुटीरनिवासिन् मन्मुखचन्द्रचकोर।।४।।

**भौमी–** श्रीसीताजी गा रही हैं– हे विश्वविलोचन के चोर! आपकी जय हो। हे शिव के मनरूप मानस सरोवर के राजहंस! हे दुष्टों के लिये कराल कालाग्नि, अमोघ बाण और भयंकर धनुष धारण करने वाले, अत्यंत भयंकर श्रीराम आपकी जय हो। अपने शरीर की शोभा से भादों के बादल को जीतने वाले, भवसागर के लिये मंदराचल, खेल–खेल में भविष्य में रावण का वध करने वाले, शत्रुओं के लिये वज्र से भी कठोर प्रभु आपकी जय हो। अपने दिव्य विरुद से शुक और शारदा को भी मुखरित करने वाले और अपने नामामृत से नारद को भी प्रसन्न करने वाले, आगम–निगम और पुराणों में निपुण, हे कोसलराज किशोर! आपकी जय हो। माता–पिता गुरुजन और बांधवों को प्रसन्न करने वाले और चित्रकूट पर्वत के वन में निवास करने वाले, **गिरिधर** कवि के मन कुटीर में निवास करने वाले, मुझ सीता के मुख चंद्र के चकोर, आपकी जय हो।

## गीत संख्या–२७

किमेतद्रूपलावण्यं नरोत्तम वरवपुषि धत्से।
किमेतन्नम्रतारुण्यं रघूत्तम वरवपुषि धत्से।।

**दधानो पीड्यमुनिवेषं विमदयन् कामराकेशम्।**
**किमेतत् कम्रकारुण्यं कमुद्गम वरवपुषि धत्से।।१।।**
**त्यजन्नरपालप्रासादं मनाङ् नाप्तो मनः सादम्।**
**किमेतद् धारणास्थैर्यं शमुद्गम वरवपुषि धत्से।।२।।**
**वसानो बल्कलं धीमन् न भूतोऽभूतिभूर्भूमन्।**
**किमेतत् सौम्यसौन्दर्यं सुरोत्तम वरवपुषि धत्से।।३।।**
**लसत्सीतो वने प्रीतो वसन् गिरिधरगिरागीतः।**
**किमेतन् मञ्जुमाधुर्यं विभूत्तम वरवपुषि धत्से।।४।।**

**भौमी–** पुनः सीताजी कहती हैं– अहो! हे पुरुषोत्तम! अपने श्रेष्ठ शरीर में क्या ही अद्‌भुत रूप–लावण्य को धारण कर रखा है। हे रघुकुल में श्रेष्ठ! अपने शरीर में क्या ही विनम्र तरुणावस्था धारण कर रखी है। हे कल्याण के उत्पत्ति स्थान! श्रेष्ठ मुनिवेश धारण करते हुये भी, आप कामदेव और चंद्रमा को भी मोहित कर रहे हैं। आप अपने शरीर में यह कैसा कारुण्य धारण कर रहे हैं। हे शान्ति के उद्‌गम स्थान प्रभु! राजप्रासाद छोड़कर भी आपके मन में किसी भी प्रकार का कष्ट नहीं हुआ? आपने अपने अन्तःकरण में ये किस प्रकार का स्थिर धारणा स्वरूप धारण कर रखा है? हे दिव्य बुद्धि सम्पन्न! वल्कल वस्त्र धारण करके भी आप शिव के समान भयंकर नहीं हुये। हे देवताओं में श्रेष्ठ! आपने अपने शरीर में यह कैसा सौम्य सौंदर्य धारण कर रखा है? मुझ सीता को सुशोभित करते हुये, प्रसन्नतापूर्वक वन में निवास कर रहे **गिरिधर** कवि की वाणी द्वारा गाये हुये हे विभुओं में उत्तम परमेश्वर! आपने यह कौन–सा मधुर–माधुर्य अपने शरीर में धारण कर रखा है?

## गीत संख्या–२८

**परात्मन् नरव्याजमात्माभिरामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।**
**भवात्मन् भवप्राज्यमाप्ताभिकामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।।१।।**
**अपूर्वं खवेदाश्वयागस्य मूर्तं फलं साधनानां समिष्टासपूर्तम्।**
**जगन्मङ्गलं विश्वविश्वप्रणामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।।२।।**
**विशुद्धं प्रबुद्धं कुभोगैर्न विद्धं गुणातीतमिद्धं सुसिद्धं प्रसिद्धम्।**
**परब्रह्मधामाऽव्ययं सल्ललामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।।३।।**
**चिदानन्दकन्दाभनीलं शरीरं वरं वल्गुसंभग्नकालिन्दिनीरम्।**
**लसत्काण्डकोदण्डसाद्गुण्यधामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।।४।।**
**विहायापि राज्यं न यस्मिन्निराशा प्रहायापि प्राज्यं न यस्मिन् दुराशा।**
**सुकविगिरिधरस्याक्षिचित्तैकरामं प्रभो ते स्वरूपं विभो ते स्वरूपम्।।५।।**

**भौमी–** पुनः सीताजी कहती हैं– हे परमेश्वर! आपका यह मंगलमय स्वरूप मनुष्य का जैसा होता हुआ भी आत्माओं को आनंद देने वाला है। हे कल्याणात्मन्! आपका यह स्वरूप व्यापक और संसार की एकमात्र संपत्ति तथा सभी जीवात्माओं के लिये अभीष्ट कामनाओं का प्रदाता है। हे व्यापक! हे समर्थ प्रभो! खवेदाश्व

अर्थात् चालीस घोड़ों वाले दशरथ जी के यज्ञ का मूर्तिमान पुण्य और सम्पूर्ण साधनों का फल और इष्टापूर्त का भी कल्याणकारक, जगत को मंगल देने वाला, संपूर्ण विश्व के प्रणामों का आश्रय, आपका स्वरूप अद्‌भुत है। हे प्रभो! आपका स्वरूप अत्यंत पवित्र, ज्ञानमय, कुभोगों से कभी न प्रभावित होने वाला और तीनों गुणों से अतीत, देदीप्यमान, नित्य-सिद्ध, प्रसिद्ध-परब्रह्ममय, तेजोमय, अविनाशी और संतों का हृदयरत्न है। हे परमेश्वर! आपका स्वरूप सच्चिदानंदमय मेघ के आभा से युक्त है। आपका शरीर श्रेष्ठ और सुंदर है। उसने यमुनाजी के जल को भी लज्जित कर दिया है और सुंदर बाण-धनुष से सुशोभित श्रेष्ठ गुणों का आश्रय, आपश्री का स्वरूप अद्‌भुत है। हे प्रभो! धन्य है वह आपका स्वरूप, राज्य छोड़कर जिसमें निराशा नहीं आयी और धन छोड़कर जिसमें दुराशा नहीं आयी। वही तो **गिरिधर** कवि के नेत्र और चित्त को एकमात्र आनंद दे रहा है।

## गीत संख्या-२९

**एतद्रूपं रमणीयं राघव कामकमनीयं प्राप्तं कुतो भवता लब्धं कुतो भवता।।**
**किमुत सच्चिदानन्दं शुद्धं कल्पयेत माया किं घटेत सा विधातुमेतत् जडा त्रिगुणकाया।**
**मुक्तं मुक्तनमनीयं युक्तं योगिगमनीयं प्राप्तं कुतो भवता लब्धं कुतो भवता।।१।।**
**किमु लीलाशक्त्या सत्यं जगते प्रकटितं नैव क्षमा क्षमासुताहितं निष्कपटितम्।**
**भव्यं सेव्यसेवनीयं दिव्यं देवदेवनीयं प्राप्तं कुतो भवता लब्धं कुतो भवता।।२।।**
**विमलं विज्ञानमयं नित्यं निरपायं न्यस्तहेयप्रत्यनीकं शुभगुणकायम्।**
**स्वेच्छामयं माननीयं धीरैर्धियाध्याननीयं प्राप्तं कुतो भवता लब्धं कुतो भवता।।३।।**
**धृततूणिशरचापं रामं नराकारं मैथिलीहृदयहारं शीलकृपाऽगारम्।**
**गिरिधरगिरागापनीयं भक्तैर्हृदाधापनीयं प्राप्तं कुतो भवता लब्धं कुतो भवता।।४।।**

**भौमी-** हे राघव! जो काम की भी इच्छा का विषय बना हुआ आपका रमणीय रूप है, उसे आपने कहाँ से पाया? उसे आपने कहाँ से उपलब्ध किया? क्या इस विशुद्ध सच्चिदानंद रूप को माया रच सकती है? अरे! जो स्वयं जड़ और सत्, रजस्, तमस् शरीर वाली है, वह इसको बनाने में कैसे समर्थ हो सकती है? हे राघव! जो सर्वथा माया के कार्यों से मुक्त, मुक्तजनों के द्वारा नमस्कार्य-युक्त और योगिजनों का गति है, ऐसा स्वरूप आपने कहाँ से प्राप्त किया? क्या, आपकी लीलाशक्ति द्वारा जगत के लिये यह सत्य स्वरूप प्रकट किया गया? जो क्षमापुत्री सीताजी का हितैषी और निष्कपट रूप है, उसे लीलाशक्ति नहीं प्रकट कर सकती। जो कल्याणमय है, जो सभी का सेव्य, ब्रह्मा, विष्णु, शंकर का भी सेव्य है, जो दिव्य है और देवताओं की भी स्तुति का विषय है, ऐसा स्वरूप आपको कहाँ से प्राप्त हुआ? वस्तुतः यह आपका रूप निर्मल, विज्ञानस्वरूप, नित्य, विनाशरहित, हेय गुणों और विरुद्ध गुणों से रहित, सद्‌गुणों से युक्त अत्यंत अद्वितीय है। वह स्वेच्छामय है अर्थात् भक्तों की इच्छानुसार आपने उसे धारण किया है। ऐसे सबके सम्माननीय, धीरजनों द्वारा बुद्धि से ध्यान करने योग्य, यह स्वरूप आपने कहाँ से प्राप्त किया? तरकश, धनुष-बाण धारण किये हुए, मनुष्य के समान आकृति वाले, मुझ मैथिली के हृदय का हार, शील और कृपा का भांडागार **गिरिधर** कवि की वाणी से गाने योग्य, भक्तों की धारणा का विषय, ऐसा यह श्रीरामरूप आपके द्वारा कहाँ से प्राप्त किया गया?

## गीत संख्या-३०

**राघव किमुग्रं तपस्तप्तं भो येन लब्धो मया त्वम्।**
**राघव किमीड्यं पुण्यं क्लृप्तं भो येन लब्धो मया त्वम्।।**
**पद्भ्यां समागत्य भङ्क्त्वा शम्भुचापम्।**
**मां स्वयम्वरेऽजैषीः कृत्वा शत्रुतापम।**
**किमु ब्राह्मणेभ्यो दानं दत्तं भो येन लब्धो मया त्वम्।।१।।**
**क्वाहं कुजाकुलजा सामान्या राजकन्या।**
**क्व त्वदुपलब्धिर्योगिदुर्लभातिधन्या।।**
**किं ऋत्विग्भ्यो दाक्षिण्यं सुदत्तं भो येन लब्धो मया त्वम्।।२।।**
**पुरोडाशमिव यजमानो मामनैषीः।**
**रावणराषभाद्रामभद्र नाप्यभैषीः।।**
**किमु श्रुतिविहितं विक्लृप्तं भो येन लब्धो मया त्वम्।।३।।**
**अबलाऽपि भवद् बाहुबलमाप्य सीता।**
**चित्रकूटे निर्भयाऽस्मि गिरिधरगीता।।**
**किमु चेष्टापूर्तं प्रक्लृप्तं भो येन लब्धो मया त्वम्।।४।।**

**भौमी-** हे राघव! मैंने कौन-सा उग्र तप किया था, जिससे आप मुझे प्राप्त हुये? हे प्रभो! मैंने कौन-सा पुण्य संचय किया था, जिससे मैंने आपको प्राप्त किया? स्वयं पैदल मिथिला आकर, शिवजी का धनुष तोड़कर, शत्रुओं को तपाकर स्वयंवर में आपने मुझे जीता। मैंने ब्राह्मणों को कौन-सा दान दिया था, जिससे आप मुझे प्राप्त हुये? कहाँ मैं पृथ्वी उत्पन्न अकुलजा अर्थात् अयोनिजा सामान्य राजकन्या और कहाँ योगिजनों को भी दुर्लभ अत्यन्त धन्य आपकी उपलब्धि? मैंने ऋत्विजों को कौन-सी दक्षिणा दी है, जिससे मुझे आप प्राप्त हुये? हे प्रभो! पुरोडाश को यजमान की भाँति आपने मुझे स्वीकारा और रावण रूप गधे से भी आप नहीं डरे। मैंने कौन-सा वेदविहित कर्म किया था, जिससे आप मुझे प्राप्त हुये? मैं सीता अबला होकर भी आपका बाहुबल प्राप्त कर **गिरिधर** कवि के गीतों का विषय बनकर चित्रकूट में निर्भय विहार कर रही हूँ। मैंने कौन-सा ईष्टापूर्त किया था जिससे आप मुझे प्राप्त हुये?

## सन्दर्भश्लोकः

**निशम्य वाक्यं जनकात्मजाया**
**माधुर्यमञ्जूत्तमभावजुष्टम् ।**
**रामोऽभिरामो निजवामभागे**
**सीतां समारोप्य जगाद हृष्टः।।१।।**

**भौमी-** इस प्रकार माधुर्य से पूर्ण, उत्तम भाव से युक्त, सीताजी का वाक्य सुनकर प्रभु श्रीराम प्रियतमा को वामभाग में बिठाकर यह वाक्य बोले-

## गीत संख्या-३१

शक्रमित्रस्य सौम्यस्नुषाया मुहुः स्वागतं देवि ते स्वागतं स्वागतम्।
भानुवंशप्रदीपप्रियाया मुहुः स्वागतं देवि ते स्वागतं स्वागतम्।।
अद्य नाथस्त्रिलोक्या सनाथस्त्वया राघवोऽहं समाभग्नचिच्चम्पया।
देहशोभाऽभिभूतात्मभूशम्पया स्वागतं देवि ते स्वागतं स्वागतम्।।१।।
त्वद्विना स्वर्गलोको न मे रोचते किं प्रभाहीनभानुर्न निम्लोचते।
ज्योत्स्नया दूरश्चन्द्रो न किं शोचते स्वागतं देवि ते स्वागतं स्वागतम्।।२।।
आस्यतां वामे वामे समाश्वास्यतां मानसाधिर्मदीया द्रुतं नास्यताम्।
कोकिलाकाकलीला मुदा भाष्यतां स्वागतं देवि ते स्वागतं स्वागतम्।।३।।
गेहलक्ष्म्या जनोऽयं सुखं श्लिष्यतां दोर्लताभ्यां च श्रीवत्समाक्लिष्यताम्।
स्वप्नभावेऽपि भौम्या न विश्लिष्यतां स्वागतं देवि ते स्वागतं स्वागतम्।।४।।
चित्रकूटालये भातु वै भामिनी गिरिधरस्वामिनीतुष्टसौदामिनी।
भाग्यवैभवविजितपञ्चशरकामिनी स्वागतं देवि ते स्वागतं स्वागतम्।।५।।

**भौमी-** इन्द्र के मित्र दशरथजी के सौम्य पुत्रवधू आपका स्वागत है, बार-बार स्वागत है। सूर्यवंश के दीपक मुझ राम की प्राणप्रिया सीता का बार-बार स्वागत है, स्वागत है। आज तीनों लोकों का नाथ होकर भी मैं राघव चेतना में चम्पा को लजाने वाली, देह की कान्ति से बिजली को जीतने वाली, आपसे सनाथ हो गया हूँ। आपके बिना मुझे साकेत भी अच्छा नहीं लगता। क्या प्रभा के बिना सूर्यनारायण नहीं अस्त हो जाते? क्या चंद्रिका के बिना चंद्रमा नहीं शोचनीय होते? हे देवी! आपका स्वागत है, स्वागत है। आप मेरे वामभाग में विराजमान होइये, आप मेरी मन की पीड़ा समाप्त कीजिये और कोकिल स्वर में प्रेम से वार्तालाप कीजिये। आपका स्वागत है, स्वागत है। हे गृहलक्ष्मी! मेरा सुख से आलिंगन कीजिये और अपनी बाहुलता से मेरे श्रीवत्सलांछन का संघर्षण कीजिये। स्वप्न-भाव में भी मुझसे अलग न होइये। हे पृथ्वीनंदिनी! आपका स्वागत है, स्वागत है। इस चित्रकूट के पर्णकुटी में **गिरिधर** कवि की स्वामिनी, बिजली को संतुष्ट करने वाली, भाग्य-वैभव से रति को भी जीत लेने वाली, आप सुशोभित हों। आपका स्वागत है, स्वागत है।

## गीत संख्या-३२

सीते त्वमसि वाटिका कापि।
ऐकरसा सर्वर्तुषु सुखदा शुष्यति नैव कदापि।।१।।
यस्यां सङ्क्रीडते सरसिजे कुर्वन् गजोऽनुरागम्।
रम्भां परीरिप्सुरथ तनुते वारीवारितरागम्।।२।।
सरसि गिरिवरावधिगिरिकञ्जे ते अनुलसति कपोतः।
तमनुमृणालौ तदनुमरालौ तदनुदामिनीपोतः।।३।।

बिम्बफलं समया शुकशावो नैतद् दशति कदाचित्।
चन्द्रं निकषा कमलमलिकुलं नो सङ्कुचति कथञ्चित्।।४।।
अभितो धनुषी चरतः खञ्जौ त्यक्त्वा काममपि भीतिम्।
नागवधूः स्पृहयते सुधायै शशिनि कुर्वति प्रीतिम्।।५।।
दर्शं दर्शमनुपमां वाटीं विवासितोऽपि न दीये।
गिरिधरेशमधुपेशः सीते त्वदधरासवं पीये।।६।।

**भौमी–** हे सीते! तुम एक अपूर्व वाटिका हो, जो सभी ऋतुओं में एकरस रहकर सुख देती रहती है और कभी नहीं सूखती। जिस वाटिका में कमल पर प्रेम करता हुआ हाथी खेलता है और बन्धन के कारण अन्य रागों से रहित होकर कदली का आलिंगन करना चाहता है। और आश्चर्य यह है कि कमल पर तालाब और पर्वत विराज रहे हैं और उन पर कबूतर सुंदर लग रहा है। उसके पास कमल दंड उसी के पास हंस और उसके पास विद्युत का बालक है। विम्बा फल के समीप है एक तोते का बच्चा, जो उसे कभी डसता नहीं और चन्द्रमा के समीप है कमल, जो भ्रमर से व्याप्त है। पर वह कभी संकुचित नहीं होता। और धनुषों के दोनों ओर किसी भी प्रकार का भय छोड़कर दो खंजन पक्षी चर रहे हैं और नागिन चंद्रमा से प्रेम करती हुयी अमृत के लिये स्पृहा कर रही है। इस निरूपम वाटिका को देख–देखकर मैं निर्वासित होकर भी दुःखी नहीं हो रहा हूँ और गिरिधर कवि का स्वामी मैं भ्रमरों का राजा राम आपके अधरासव का पान कर रहा हूँ।

## गीत संख्या–३३

सीते पिबँस्तवाधरबिम्बम्।।
स्वप्नेऽपि स्पृहये न सुधायै नैव समीहे क्वचित् क्षुधायै।
निर्विकल्प इव रतः समाधौ लभमानःस्ववलम्बम्।।१।।
राम जीवजीवातुममोघं विस्मारितकोसलसुखमोघम्।
विदलितविप्रवासदुःखौघं स्वादुसोमनिकुरम्बम्।।२।।
अरुणचषकसमममृतनिधानं सौरतसौख्यसुभगसोपानम्।
नवशृङ्गारसारनीपानं विगलितभवभयसम्बम्।।३।।
जीवनयौवनमङ्गलमन्त्रं प्रेमवीथिकानिरुपमतन्त्रम्।
गिरिधरप्रभुस्तन्मयः पीये नन्दनसुरभिकदम्बम्।।४।।

**भौमी–** हे सीते! आपके बिम्बाधर का पान करता हुआ मैं अमृत के लिये स्पृहा नहीं कर रहा हूँ और भूख शांत करने की कोई चेष्टा नहीं करता हूँ। मैं दिव्य अवलंब प्राप्त कर निर्विकल्प समाधि में मग्न हो गया हूँ। यह मुझ राम की जीवन की औषधि है। इसने अयोध्या के सुख को झूठा करके भुला दिया है और इसने वनवास के दुःख–समूहों को नष्ट कर दिया है। इसमें अनेक अमृतों का स्वाद है। यह अमृत का खजाना लाल–प्याला है, यह दांपत्य प्रेम का सुंदर सोपान है, यह श्रृंगार–सार का सुंदर जलाशय है और यही भवभय को नष्ट करने के लिये वज्र है। यह जीवन और यौवन का मंगल मंत्र है, यही प्रेमगली का निर्मल शासनतंत्र है और इसी

नन्दन की सुगन्धि से युक्त, आपश्रीसीता के अधरासव को गिरिधर कवि का प्रभु मैं राम तन्मय होकर पी रहा हूँ।

## गीत संख्या-३४

**वनदेव्यः गायन्ति-**

**श्रीचित्रकूटे भाति रामो जानकीं शृङ्गारयन्।**
**तनुरुचिविजितशतकोटिकामो मन्मथं संस्कारयन्।।**
**कस्तूरिकातिलकं कपोलयुगे चरन् कुचयोः कलम्।**
**सुविचित्रचित्रितपत्रिकां सापत्रपः सन्धारयन्।।१।।**
**सीमन्तमासीमन्तयन् करकुण्डले शुचिकर्णयोः।**
**खञ्जनदृशावञ्जन् जनार्दन जैत्रकं संहारयन्।।२।।**
**आलक्तकं किसलाधरे दशनानिरञ्जन् धातुभिः।**
**निजनिर्मितं सुमकङ्कणं करकञ्जयोः परिधारयन्।।३।।**
**कट्यां कुसुमकलकिङ्किणीं मृदुपद्मपदयोर्नूपुरम्।**
**गिरिधरप्रभू राराज्यते भूनन्दिनीमाभारयन्।।४।।**

**भौमी-** अब वनदेवियाँ गा रही हैं–सीताजी को शृंगारित करते हुये, कामदेव को संस्कार देते हुये, अपनी शोभा से करोड़ों कामों को जीतने वाले श्रीराम श्रीचित्रकूट में सुशोभित हो रहे हैं। सीताजी के दोनों कपोलों पर कस्तूरी तिलक करते हुये और दोनों वक्षोरूहों पर सुंदर चित्रपत्रक की रचना करते हुये श्रीराम सुशोभित हो रहे हैं। सीताजी की चोटी बनाते हुये, कान में कुण्डल धारण कराते हुये और खंजन जैसे नेत्रों में अंजन लगाते हुये, जनार्दन को भी जीतने वाले, काम को भी नियंत्रित करते हुये श्रीराम सुशोभित हो रहे हैं। सीताजी के पल्लव जैसे अधर का आलक्तक और सीताजी के दाँतों को धातुओं से रंगते हुए और सीताजी के करकमल में अपने ही द्वारा निर्मित कंकण पहनाते हुए श्रीराम सुशोभित हो रहे हैं। सीताजी के कटि प्रदेश में किंकिणी और चरणकमल में नूपुर धारण कराते हुये, सीताजी को अलंकृत करते हुये, गिरिधर कवि के स्वामी श्रीराम बहुत सुशोभित हो रहे हैं।

## गीत संख्या-३५

**राघवश्चित्रकूटे विभाति सीतालक्ष्मणसध्र्यङ् प्रभाति।**
**मन्दाकिनितटकृतपर्णधाम संसृत्य विहरति प्रहतदाम।।१।।**
**सौमित्रियुतो मृगयां प्रयाति न मृगेषु शरं क्वचिदपि जहाति।**
**विस्फारितनिजनयनैर्निहार्य मृग्यो मुमुहुर्निमिषं निवार्य।।२।।**
**मृदुमलयजवातः सुखं वाति सीतारामाभ्यां मुदं राति।**
**मङ्गलं मुनिभ्यः श्रीर्ददाति रामः क्षेमं सत्स्वादधाति।।३।।**

**सीता द्वितीयकः संश्चकार नवनवतिरासकं वै बभार।**
**गिरिधरप्रभुर्भूतीरियाय द्वादशशरदां कालं निनाय।।४।।**

**भौमी-** श्रीराघव सीता-लक्ष्मणजी के सहित चित्रकूट में विराज रहे हैं। मंदाकिनी के तट पर सुंदर पर्णकुटी बनाकर उद्यान में विहर रहे हैं। लक्ष्मणजी के साथ मृगया करने जाते हैं, पर मृगों पर कभी बाण नहीं छोड़ते। प्रभु को विस्फारित नेत्रों से निहारकर, पलक गिराना बन्द करके, मृगियाँ मोहित हो गयीं। मलयसमीर सुख से बह रहा है जो श्रीसीताराम जी को प्रसन्नता प्रदान कर रहा है। सीताजी मुनियों को मंगल दे रही हैं और भगवान राम संतों का कल्याण कर रहे हैं। इस प्रकार चित्रकूट में निवास करते हुये, सीताजी के साथ भगवान राम निन्यानवें महारास किये। **गिरिधर** कवि के स्वामी भगवान श्रीराम श्रीचित्रकूट में बारह वर्षों का समय बिताये और दिव्य ऐश्वर्य प्राप्त किये।

## गीत संख्या-३६

**कविर्गायति-**

**राम सीताराम जय जय राम रामाराम जय जय।।**
**जननीजनकनिदेशपालक विपिनवसते नृपतिबालक।**
**पतितपावनगुणनिभालक शीलशोभाधाम जय जय।।१।।**
**जानकीसौमित्रिसध्य्रङ् धर्मरथसमतीरथसम्यङ्।**
**विमलगुणामोदितप्रत्यङ् प्रणतकल्पाराम जय जय।।२।।**
**वनपथिकजनमनोरञ्जन सुखितकोलकिरातपरिजन।**
**पदकमलरतदुरितभञ्जन नीलनीरदश्याम जय जय।।३।।**
**भरतभावसुवापिकावर हंसहंसकुलाब्जदिनकर।**
**पादुकाऽविर्भावश्रीवर सुजनदृक्विश्राम जय जय।।४।।**
**कम्रकार्मुकतूणशरधर कठिनवनपथपद्मपदचर।**
**गिरिधराधिविराम जय जय।।५।।**

**भौमी-** अब कवि स्वयं गा रहे हैं-हे सीताराम! हे रामाराम! आपकी जय हो, जय हो। माता पिता का आदेश पालन करने वाले वनवासी राजकुमार शील-शोभा के धाम, पतितपावन, गुण को संभालने वाले, आपकी जय हो, जय हो। जानकीजी एवं लक्ष्मणजी को सहचर बनाने वाले, धर्मरथी, अतिरथी, वेद के सम्यक् पूजक, प्रणतजनों के कल्पवृक्ष, आपकी जय हो, जय हो। वनपथिकों का मनोरंजन करने वाले और कोल-किरात रूप परिजनों को सुखी करने वाले और चरणकमलों में प्रेम करने वालों के पाप को नष्ट करने वाले, नीले कमल के समान श्यामल प्रभु, आपकी जय हो, जय हो। भरत के भाव रूप बावली के राजहंस, सूर्यकुल कमल के सूर्य और पादुका जी में अपना आविर्भाव प्रकट करने वाले, सज्जनों के नेत्रों के विश्राम स्वरूप प्रभु, आपकी जय हो, जय हो। सुंदर धनुष, बाण, तरकस धारण करने वाले, कठिन वनपथ में चरणकमल से चलने वाले, निन्यानवे महारासों के ईश्वर, **गिरिधर** कवि के भय और विषयों के अभावस्थान प्रभु राम आपकी जय हो, जय हो।

## उपसंहारश्लोकः

**इत्थं रामो गीतसीताभिराम-**
**स्त्यक्त्वा राज्यं तातनिर्देशतोऽसौ।**
**स्थित्वारण्ये सानुजश्चित्रकूटे**
**सीतामित्रो मित्रवर्षं निनाय।।१।।**

**भौमी–** इस प्रकार पिता के निर्देश से राज्य को छोड़कर लक्ष्मणजी के साथ, सीताजी को अपना मित्र बनाकर, चित्रकूट वन में निवास करके गीतसीताभिराम श्रीराम ने वनवास के बारह वर्ष बिता दिये।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये अयोध्याकाण्डे गीतचित्रकूटमण्डनो नाम नवमः सर्गः।।**

**।।अयोध्याकाण्डं सम्पूर्णम् ।।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के अयोध्याकाण्ड में गीतचित्रकूटमण्डन नामक नवम सर्ग संपन्न हुआ और अयोध्याकाण्ड संपूर्ण हो गया।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।
।।नमो राघवाय।।
।।श्रीमद्राघवो विजयते। श्रीसीतारामौ विजयेते।।

# अथ अरण्यकाण्डम्

## गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये अरण्यकाण्डे गीतललितनरलीलो नाम

## प्रथमः सर्गः

### मङ्गलाचरणम्

**श्रिया जुष्टस्तुष्टो निजनिचितलाभेन नमितो**
**निलिम्पैर्नैलिम्पैर्महमहितमाद्यन्महिमभिः।**
**प्रतीतः श्रीसीतावदनवनजाली रघुवरो**
**भवारण्योऽरण्ये सुरवरवरेण्यो विजयते।।१।।**

**भौमी–** महाकवि अरण्यकाण्ड का मंगलाचरण करते हुये वस्तुनिर्देशात्मक मंगल प्रस्तुत करते हैं। अपनी नित्य आह्लादिनी शक्ति श्रीसीताजी से सेवित, अपने ही लाभ से संतुष्ट, अनेक उत्सवों से पूजित, परमप्रसन्न महिमाओं वाले, देवताओं और देवपुत्रों द्वारा वंदित, परम विस्वस्त श्रीसीताजी के मुखकमल के भ्रमर, श्रेष्ठ देवताओं के भी वरणीय, सभी को शरण देने में समर्थ, रघुकुल में श्रेष्ठ, भगवान राम इस कल्याणमय वन में विजय प्राप्त कर रहे हैं।

### सन्दर्भश्लोकः

**स्वाङ्कं स्वामधिरोप्य वल्गुवनितां वेणीं वरो वेणयन्**
**नूत्नैर्नन्दनकाननीयकुसुमैरालक्तयन्नाधरम् ।**
**भाले मञ्जुमनः शिलां तिलकयन् वक्षोरुहे पत्रयन्**
**सीतास्येन्दुचकोरको विजयते श्रृङ्गारहारो हरिः।।१।।**

**भौमी–**अपने अङ्क में श्रेष्ठ वनिता सीताजी को अधिरोपित करके नन्दनवन के सुन्दर पुष्पों द्वारा जनकनन्दिनीजी की वेणी गूँथते हुए एवं उनके अधर को आलक्त से अभिरञ्जित करते हुए एवं भगवतीजी के भाल पर मन:शिला का तिलक करते हुए भूमिनन्दिनी के वक्षोरूहों पर चित्रपत्रक का निर्माण करते हुए श्रृंगार

के अलंकारस्वरूप श्रीसीताजी के मुखचन्द्र के चकोर भगवान् श्रीराम श्रीचित्रकूट प्रान्तर में सर्वोत्कृष्टतया विराजमान हो रहे हैं।

## गीत संख्या-१

**मदनमोहनघनश्यामो विजयतां राघवो रामः प्रजयतां माधवो रामः।**
**भुवनलोभनजनारामो विजयतां राघवो रामः प्रजयतां माधवो रामः।।**
**जनकजाननवनजभृङ्गो विभाव्रीडितशतानङ्गो**
**विरङ्गोऽनङ्गरिपुरङ्गो विसङ्गो जुष्टसत्सङ्गः।**
**मृदुजदूर्वादलश्यामो विजयतां राघवो रामः।।१।।**
**सनाथितधर्ममर्यादो विनाथितदैत्यमनुजादो**
**विसर्जितपौरप्रासादो विनासितदानवाह्लादः।**
**नवलनीलोत्पलश्यामो विजयतां राघवो रामः।।२।।**
**इषुधिसायकधनुर्धारी महीतलभारभरहारी**
**हरिरसज्जनमनश्चारी खरारिर्लोकसुखकारी।**
**शरजवाहनगलश्यामो विजयतां राघवो रामः।।३।।**
**श्रितारण्यो भृतारण्यो नतारण्यो मतारण्योऽ-**
**शरण्यः सम्मतारैण्यो वरेण्यो गिरिधरारण्यः।**
**यमीयामुनजलश्यामो विजयतां राघवो रामः।।४।।**

**भौमी–** अब देवांगनाएँ गा रही हैं–काम को मोहित करने वाले तथा मद और मोह से रहित मेघ के समान श्यामल, रघुकुल में प्रकट, श्रीराम की जय हो और मधुमास में आविर्भूत होने वाले मा अर्थात् साकेत विहारिणी सीताजी के धव अर्थात् पति पुनः मा अर्थात् माया, उसके भी धव अर्थात् पति मधुमास में आविर्भूत सीतापति तथा मायापति भगवान राम की प्रकृष्ट जय हो। सारे संसार को लुभाने वाले और भक्तों को पूर्ण आनन्द देने वाले श्रीराम की जय हो। जनकनन्दिनी सीताजी के मुखकमल के भ्रमर अपनी कान्ति से अनेक कामदेवों को लज्जित करने वाले आसक्ति से रहित और कामारि शिव को भी आनन्द देने वाले संसार का अन्यसङ्ग छोड़कर सत्संग का प्रेमपूर्वक सेवन करने वाले कोमल दूर्वादल के समान श्यामल श्रीराम की जय हो। धर्म मर्यादा को सनाथ करने वाले नरभोजी दैत्यों को अनाथ करने वाले, अवधपुरी के प्रासाद को छोड़ने वाले, दानवों का हर्ष नष्ट करने वाले नवीन नीले कमल के समान श्रीराम की जय हो। तरकस बाण और धनुष–बाण धारण करने वाले, पृथ्वी तल की विपत्ति को भी हरने वाले सज्जनों के मन में विचरण करने वाले एवं राक्षस के शत्रु लोकों को सुख देने वाले शरज अर्थात् सरकण्डे के वन में प्रकट हुए कार्तिकेय जी के वाहन मयूर के गले के समान श्यामल श्रीराम की जय हो। श्रितारण्य अर्थात् चौदह वर्षो के लिए वन का आश्रय लेने वाले, भृतारण्य अर्थात् वन का पालन करने वाले नतारण्य अर्थात् आरण्य में निवास कर रहे आरण्यों को नमन करने वाले और आरण्य जनों की पूजा करने वाले अशरण्य अर्थात् विष्णु को भी शरण देने वाले, सम्मतारण्य अर्थात् अरण्य जनों को सम्मान देने वाले सबके वरणीय और **गिरिधर** कवि के समर्थ

शरणदाता संयमी यमुनाजल के समान श्यामल प्रभु राम की विजय हो। यह गीत अपने समय में प्रसिद्ध एक चलचित्रीय गीत की धुन में निबद्ध है।

**प्रजयतां-** यहाँ 'कर्तरि कर्मव्यतिहारे' पा०अ०१/३/१४ सूत्र से आत्मनेपद लोट् लकार, प्र० पु० एकवचन का प्रयोग हुआ है।

## गीत संख्या-२

**चित्रकूट इह रमते रामः।।**
**शृङ्गारयन् वरवधूं मुदितो यवितयौवनां युवतीमुदित।**
**मथितमन्मथो युवासमुदितऽचित्रकूट इह रमते रामः।।१।।**
**आनखशिखं मण्डयन् वामां कामयमानां कमथाकामाम्।**
**रमयन् रहसि रसिकरसरामां चित्रकूट इह रमते रामः।।२।।**
**मदनमनोरथरथमारूढो दोर्लतयावनितयोपगूढः।**
**मनसि रासरसतरुवररूढोऽचित्रकूट इह रमते रामः।।३।।**
**भावुकभावभावितः सुरवरवधूगीतचरितो रसनिर्भरः।**
**प्रियाप्रेमविवशः कविगिरिधरः चित्रकूट इह रमते रामः।।४।।**

**भौमी-** इस चित्रकूट में श्रीराम रम रहे हैं। गतिशील युवावस्था वाली श्रेष्ठवधू सीताजी का शृंगार करते हुए पूर्णयुवक प्रसन्न श्रीराम विष्णु से भी (दत्रात्रेय के रूप में सेवित) चित्रकूट में रम रहे हैं। संसार की वासना से रहित होकर भी, सम्पूर्ण कलाओं से युक्त होते हुए भी, प्रभु श्रीराम को ही अपनी इच्छा का आश्रय बना रही श्रेष्ठरसिक और रसिकेश्वर प्रभु को भी रमाने वाली, कामाङ्गिनी सीताजी को एकांत में नख से शिखापर्यन्त शृंगारित करते हुए, चेतना को त्राण देने वाले शिखरों से युक्त चित्रकूट में श्रीराम रम रहे हैं। काम के मनोरथ रूप रथ पर विराजमान और पृथ्वीपुत्री सीताजी द्वारा अपनी भुजालता में आलिंगित तथा मन में जपे हुए (उत्पन्न) रास रस के दिव्य वृक्ष से युक्त, विष्णु को भी आश्चर्य में डालने वाले चित्रकूट में श्रीराम रम रहे हैं। भावुकों के भावों से सम्मानित एवं देववधुओं के द्वारा जिनके चरित्रों का गान किया गया है। ऐसे रसपूर्ण प्रिया सीताजी के प्रेम के विवश **गिरिधर** कवि के द्वारा सेवित चित्रकूट में श्रीराम रम रहे हैं।

**विशेष-** यह गीत १६ मात्रा त्रिताल में निबद्ध है।

## गीत संख्या-३

**चित्रकूटमभिरामो रमते सत्त्रिकूटमभिरामो रमते।।**
**मुहुः श्यामया रम्यरामया वपुर्विभवजितकामवामया।**
**भूरिभुवनललनाललामया रत्नकूटमभिरामो रमते।।१।।**
**पुरहरमौलिमालिकातीरे शिशिरमधुरमृदुमलयसमीरे।**
**सुकुसुमकल्पितकुञ्जकुटीरे स्वर्णकूटमभिरामो रमते।।२।।**

**ग्रहयुगरासैर्रमणीं रमयन् पुरयुगविवसनखेदं शमयन्।**
**कुमदनमदनकुमदमपि दमयन् रजतकूटमभिरामो रमते।।३।।**
**मृडयन् शिरिशसरसश्रृङ्गारां चम्पककनककमलकलहाराम्।**
**सुमनसमिव सुमनोऽलङ्कारां वर्णकूटमभिरामो रमते।।४।।**
**विबुधवधूटीगीतयशोवरविनतविहतकश्मलो धनुर्धर।**
**जगद्गुरुर्गदितः कविगिरिधरकर्णकूटमभिरामो रमते।।५।।**

**भौमी-** श्रीराम चित्रकूट में रम रहे हैं और वे सन्तों के ज्ञान, वैराग्य, भक्ति रूप तीनों त्रिकूटों में रम रहे हैं। अपनी शोभा से करोड़ों कामों को जीतने वाले, अनन्त भुवनों की महिलाओं की रत्नस्वरूप रमणीय पत्नी सीताजी के साथ श्रीराम रत्नकूट में रम रहे हैं। मलयाचल के शीतल, मन्द, वायु से युक्त सुन्दर पुष्पों के सहित, वनपर्ण कुटीरों वाले, त्रिपुर शत्रु शिवजी की मुकुटमाला, मंदाकिनी के तट पर श्रीराम स्वर्णकूट में रम रहे हैं। इस प्रकार सीताजी को निन्यानवें महारासों में रमाते हुए और मैके तथा ससुराल के निर्वासन से उत्पन्न खेद को दूर करते हुए कुत्सित मद का दमन करते हुए श्रीराम रजतकूट (चाँदी) में रमण कर रहे हैं। शिरीष पुष्प का सुन्दर शृंगार की हुई चम्पा, सोना और कमल जैसे स्वभाव वाले, विशिष्टता धारण की हुई पुष्पों के अलंकार से सजी साक्षात देवी स्वरूपिणी सीताजी को प्रसन्न करते हुए अनेक वर्णों वाले चित्रकूट में श्रीराम रम रहे हैं। देववधुओं द्वारा जिनका दिव्य यश गाया गया है और जिन्होंने अपने चरणों में विनम्र भक्तों के समस्त दोषों को नष्ट कर दिया, ऐसे अद्वितीय धनुर्धर जगद्गुरु के नाम से प्रसिद्ध श्रीराम **गिरिधर** कवि के कर्णकूट अर्थात् दशों इन्द्रियों तथा चारों अन्तःकरणों में श्रीराम रम रहे हैं।

## गीत संख्या-४

**रामा रामारामं रमयति।।**
**विश्रम्भेण परीरम्भेण शमारम्भेण वरं विश्रमयति।।१।।**
**हासं हासं विविधविलासं रसिकसाररतिरसमाक्रमयति।।२।।**
**चुम्बं चुम्बं मुखमविलम्बं स्वाधरबिम्बं भवमक्लमयति।।३।।**
**श्लेषं श्लेषं प्रियमक्लेशं दयितश्रमलेशं संशमयति।।४।।**
**रघुवरगृहिणी वनं गृहन्ती गिरिधरविषयविनोदं दमयति।।५।।**

**भौमी-** रामजी को आनन्द देने वाली सीताजी श्रीराम को रमा रही हैं। वे विश्वास द्वारा आलिंगन कल्याण के आरम्भ द्वारा अपने वर श्रीराम को विश्राम दे रही हैं। हँस-हँसकर अनेक विलासों द्वारा रसिकों के साररूप शृंगार रस को भी उपस्थित करती हुई विलम्ब किए बिना सुन्दर बिम्बाधर वाले प्रभु का मुख चूम-चूमकर उनकी थकान दूर करती हैं। आनन्द से प्रभु को आलिंगन कर करके श्रीराघव के श्रमगन्ध को भी समाप्त कर रही हैं। इस प्रकार वन को भी घर बना रही श्रीराम की धर्मपत्नी सीताजी **गिरिधर** कवि के सांसारिक विषय विनोद का भी दमन कर रही हैं।

**विशेष-** यह गीत भी त्रिताल १६ मात्रा में निबद्ध है।

करके प्रस्थान किए। मृगनयनी सीताजी को पर्वत वन गुफाओं में ढूँढते हुए उनका समाचार न पाकर उद्विग्न गुण की खान हनुमानजी के भी नेत्रों से अश्रु का झरना चल पड़ा। सूर्यनारायण को भी भय देने वाले शिवजी को भी जीतने वाले श्रीहनुमानजी ने स्वयंप्रभा द्वारा सभी वानरों सहित समुद्र के तट पर प्रेषित होकर सम्पाती के मुख से सीताजी का सम्पूर्ण समाचार सुना। जाम्बवान के द्वारा अपने पराक्रम का स्मरण कराये जाने पर वानरों में सुन्दर हनुमानजी सोकर उठे हुए की भाँति मन में **गिरिधर** प्रभु के ईश्वर श्रीराम को धारण करते हुए प्रसन्न हुए और भगवान राम को भी प्रसन्न कर लिया।

**विशेष-** यह गीत त्रिताल में निबद्ध है, इसे वागेश्री में गाना चाहिए।

## गीत संख्या-३३

वानराः दृष्टवन्यप्राणिनः प्रति-

**क्वास्ते सीता प्रणीता कुणपमौलिना काननप्राणिभिर्निर्भयं भण्यताम्।**
**चेद् विदुर्वेदनीयां भवन्तः सतीं शास्त्रसंज्ञानिभिर्निर्भयं भण्यताम्।।१।।**
**रामपत्नी परेशानुगा भामिनी देहशोभाविजितसौम्यसौदामिनी।**
**चेत् प्रदिष्टा सुदृष्टा सुखं जीविता साधकध्यानिभिर्निर्भयं भण्यताम्।।२।।**
**तापसाश्चैव सिद्धा सुसन्न्यासिनः वानप्रस्थाः विरक्तास्तथा न्यासिनः।**
**चेद् विदुर्वै भवन्तो विदेहात्मजां कारुणी दानिभिर्निर्भयं भण्यताम्।।३।।**
**नैव सीतामदृष्ट्वा व्रजामो वयं व्याकुलाः प्राणनाशां त्यजामो वयम्।**
**गिरिधरस्वामिनी चेत् समाश्वासिता संविदामानिभिर्निर्भयं भण्यताम्।।४।।**

**भौमी-** वानर वन्य-प्राणियों के प्रति सम्बोधित करके गाते हैं। राक्षसों द्वारा चुरायी हुई सीताजी कहाँ हैं? हे वन के प्राणियों! निर्भय होकर बताओ। यदि शास्त्रज्ञ लोगों द्वारा जानने योग्य साध्वी सीताजी को आप लोग जानते हैं तो निर्भय होकर बताइए। श्रीराम की धर्मपत्नी परमेश्वर श्रीराम का अनुगमन करने वाली, शरीर की शोभा से शान्ति, विद्युत प्रभा को जीतने वाली, जनकनन्दिनीजी को यदि आप लोगों ने सुखपूर्वक स्थित और जीवित देखा हो तो हे साधकों! हे ध्यानियों! आप निर्भय होकर बताएँ। हे तपस्वियों, हे सिद्धों, हे संन्यासियों, हे वानप्रस्थों, हे गृहस्थों, हे वैष्णव शरणागतों! यदि आप लोग जनकनन्दिनी सीताजी को जानते हों तो करुणा का गान करने वाले आप सब निर्भय होकर बता दें। बिना सीताजी के दर्शन किए, हम नहीं लौटेंगे और व्याकुल होकर हम अपनी जीवन की आशा को छोड़ देंगे। यदि **गिरिधर** कवि की स्वामिनी सीताजी आप लोगों के द्वारा मधुर वाक्यों से आश्वस्त की गयी हों तो हे मानरहित महानुभावों! आप निर्भय होकर बता दें।

## गीत संख्या-३४

जाम्बवान् हनूमन्तं प्रति-

**हनुमन् किं त्वं तूष्णीं तिष्ठसि।**
**जरठ इवैकान्ते किं शान्तः सुप्तोत्थित इव किं त्वं तिष्ठसि।।१।।**
**कोटिकोटिशतकीशवाहिनीं विकलां पश्यन् किं त्वं तिष्ठसि।**

नो गर्जसि नो खलांस्तर्जयसि श्रुतिं वेपयन् किं त्वं तिष्ठसि।।२।।
भुजबलशक्तिपरीक्षणसमये गतप्राण इव किं त्वं तिष्ठसि।
स्वल्पस्नेह इवाहर्दीपः कुनिर्वाण इव किं त्वं तिष्ठसि।।३।।
तपनमण्डलग्रसनस्वसनज सुम्रियमाण इव किं त्वं तिष्ठसि।
गिरिधरहृदयभूधरे गिरिधरविनिद्राण इव किं त्वं तिष्ठसि।।४।।

**भौमी-** अब जाम्बवान हनुमान से कह रहे हैं–हे हनुमान! तुम चुपचाप क्यों बैठे हो? तुम बुद्धि की भाँति एकान्त में क्यों शान्त बैठे हो? तुम सोकर उठे की भाँति क्यों चुपचाप बैठे हो। करोड़ों–करोड़ों की संख्या में इकट्ठी वानरी सेना को विकल देखते हुए भी तुम क्यों बैठे हो? अरे! अमावस्या की रात्रि के सागर की भाँति तुम शांत तरंग होकर क्यों बैठे हो? सभी वानरों के पराक्रमहीन हो जाने पर तुम स्वयं लज्जित होते हुए से अपने बल को लज्जित करते हुए क्यों बैठे हो? न गरज रहे हो, न दुष्टों को डरा रहे हो और न ही अपनी गर्जना से किसी के कान कँपा रहे हो। तुम क्यों इस प्रकार निश्चेष्ट बैठे हो? अपने भुजबल और शक्ति की परीक्षा के समय तुम अल्पप्राण के समान क्यों बैठे हो और थोड़े से तेल वाले बुरी प्रकार से बुझ रहे दिन के दीपक की भाँति तुम क्यों बैठे हो? अरे! सूर्यमण्डल को ग्रसने वाले वायु पुत्र! आज तुम मर रहे प्राणी की भाँति क्यों बैठे हो? हे पर्वतधारी हनुमान! **गिरिधर** कवि के हृदयरूप पर्वत पर सोते हुए से क्यों बैठे हो?

## गीत संख्या-३५

**हनूमान् जाम्बवन्तं प्रति प्रकटितरौद्ररूपः-**

जयति दशवक्त्रकुञ्जरतरुणकेसरी रामचन्द्रो धनुर्बाणधारी।
भानुजागर्भदुग्धाब्धिशारदशशी भक्तपरितापसन्तापहारी।।१।।
जयति दशवदनवदनासृगुक्षणविचक्षणचलत्काण्डखरचण्डचण्डी।
चण्डिकाचण्डिकेश्वरविनोदव्रती दुष्टदशमौलिदशमौलिखण्डी।।२।।
जयति सौमित्रिसीतानुचररजनिचरनिकरखलखर्वगर्वप्रहर्ता।
नीलमणिनीरदश्याम रामारमण रामभद्रो भुवो भारहर्ता।।३।।
जयति बलिबालिसङ्कटनतग्रीवसुग्रीवशोकाटवीधूमकेतुः।
खरत्रिशिरदुष्टदूषणविराधक्षपणनीचमारीचनिर्वाणहेतुः।।४।।
पारेपाथोधि गत्वा दशास्यं च हत्वा द्रुतं मैथिलीमानयेयम्।
एतद् वेगेन मारुतगतिर्वीर्यवान् योजनानां सहस्त्रं व्रजेयम्।।५।।
हत्वा परदारहर्तारमुग्रं खलं लङ्कानगरं किमिह सन्निधेयम्।
शाधि मां जाम्बवन् गिरिधरस्वामिना हनुमता हन्त किं वा विधेयम्।।६।।

**भौमी-** अब रौद्ररूप प्रकट करके हनुमानजी जाम्बवान से कहते हैं–कौसल्याजी के गर्भ रूप क्षीरसागर के शरदकालीन चन्द्रमा, भक्तों का परिताप और सन्ताप हरने वाले रावणरूप हाथी का वध करने के लिए युवकसिंहस्वरूप धनुर्बाणधारी श्रीरामचन्द्रजी की जय हो। रावण के दशोमुखों से निकल रहे रक्त के स्नान में

कुशल चंचल बाण से युक्त एवं दुष्टों पर उद्दीप्त, क्रोध से परम क्रुद्ध, चण्डिका और चण्डिकापति शिव के विनोद का व्रत लेने वाले अर्थात् उन्हें प्रसन्न करने वाले, दुष्ट रावण के दशों सिरों का अनेक बार खण्डन करने वाले प्रभु राम की जय हो। लक्ष्मणजी एवं सीताजी से सेवित, राक्षस समूह और निम्नकोटि के खल प्रवृति वाले सागर के उत्तरतट-वासी प्राणियों के गर्व को हरने वाले, नीलमणि और नीले मेघ के समान श्यामल, भू-भारहारी सीतारमण श्रीरामभद्र की जय हो। बलवान बालि के संकट से झुकी हुई ग्रीवा वाले सुग्रीव के दुःखरूप वन को जलाने के लिए अग्निस्वरूप खर, त्रिसिरा, दुष्ट दूषण तथा वीराध का वध करने वाले और नीच मारीच को मोक्ष देने वाले प्रभु राम की जय हो। मैं इसी वेग से वायु के समान चलता हुआ सौ योजन दौड़ सकता हूँ और समुद्र के पार जाकर रावण को मारकर सीताजी को ला सकता हूँ। क्या परदारहर्ता उग्र खल रावण का वध करके लंका नगर को यहाँ ला दूँ। हे जाम्बवान! आप मुझे शिक्षा दीजिए, **गिरिधर** कवि के स्वामी हनुमान के द्वारा आज क्या किया जाय?

## गीत संख्या-३६

**जाम्बवान् हनुमन्तं प्रति-**

**महावीर सीतापार्श्वं गच्छ।**
**कुतुकतो वारिधिं तीर्त्वा रामपत्नीं रक्ष।।**
**शिवास्ते पन्थान ईड्या सन्तु सन्मङ्गलसमीड्या।**
**सन्तु कौणपभटापीड्या सफलतामधिगच्छ।।१।।**
**रामभद्रभविष्णुकृपया गोष्पदायतु युतस्त्रपया।**
**सागरो गुणसागरस्य सदा शुभान्यनुगच्छ।।२।।**
**शत्रवस्ते सखीयन्तां बुद्धिविभवा महीयन्ताम्।**
**कौशलान्यपि न हीयन्तां मङ्गलं परिगच्छ।।३।।**
**पश्य सीतां रिपून्नीतां सङ्गमय रामेण प्रीताम्।**
**ब्रूमहे पुण्याहवाचं सुखी पुनरागच्छ।।४।।**
**रामबाणानलपतङ्गा सन्तु कुणपा समररङ्गा।**
**कपे सुन्दररामभक्तिं गिरिधराय प्रयच्छ।।५।।**

**भौमी-** अब जाम्बवान हनुमान से कहते हैं-हे महावीर! आप सीताजी के पास जाइये, आप खेल-खेल में सौ योजन सागर को लाँघकर श्रीराम की धर्मपत्नी सीताजी की रक्षा कीजिए। आपके मार्ग, श्रेष्ठ मंगलों से युक्त होकर, स्तुति के योग्य और कल्याणकारी हों और राक्षस भी आपसे पीड़ित हों। आप सफलता प्राप्त करें। भगवान श्रीराम की भविष्णु कृपा से लज्जा से युक्त यह सागर आपके लिए गोष्पद अर्थात् गौ खुर के समान हो जाय। आप गुणसागर श्रीराम के शुभ चरित्रों का अनुगमन करें और सीताजी के पास जायें। हे हनुमानजी! आपके शत्रु भी आपके मित्र बन जायें और बुद्धि-वैभव सम्पन्न लोग आपकी पूजा करें। आपको कुशलताएँ कभी न छोड़ें और आप चारों ओर से मंगल प्राप्त करें। हे हनुमानजी! शत्रु द्वारा हरण की हुई सीताजी के आप दर्शन करें और परमप्रीतिमती सीताजी को श्रीराम से मिलायें, हम आपका पुण्याहवाचन कर रहे हैं। आप

सुखपूर्वक कार्य सम्पन्न करके फिर लौट आयें। हे सुन्दर कपि! राक्षस लोग समरांगण में आकर श्रीराम के बाणाग्नि के पतंगे बन जायँ और आप गीतरामायण के प्रणेता **गिरिधर** कवि को श्रीराम भक्ति प्रदान करें।

## उपसंहारश्लोकः

**गत्वा लङ्कां त्वत्कृतानीकपङ्काम्**
**हत्वा संख्ये रावणं चण्डचापः।**
**लब्ध्वा सीतां जातवेदो विशुद्धाम्**
**जीयाद्रामो गीतसीताभिरामः।।१।।**

**भौमी**–अब कवि इस काण्ड का उपसंहार श्लोक प्रस्तुत करते हैं। जाम्बवानजी आशीर्वादात्मक मंगलाचरण कर रहे हैं–हे हनुमान! आपके द्वारा जिसमें सेना को कीचड़ के समान मसल दिया जाना है, ऐसी लंका पर आक्रमण करके युद्ध में तीक्ष्ण धुनष से छोड़े बाणों से रावण का वध करके पुनः अग्नि में पवित्र सीताजी को प्राप्त करके श्रीअवध को लौट रहे गीतसीताभिराम भगवान राम की जय हो।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये किष्किन्धाकाण्डे गीतमारुतिजयो नाम प्रथमः सर्गः।**

## ।।किष्किन्धाकाण्डं सम्पूर्णम्।।

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के किष्किन्धाकाण्ड में गीतमारुतिजय नामक प्रथम सर्ग सम्पन्न हुआ और किष्किन्धाकाण्ड भी पूर्ण हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।। नमो राघवाय।।

।।श्रीमद्राघवो विजयते। श्रीसीतारामौ विजयेते।।

# अथ सुन्दरकाण्डम्

## गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये सुन्दरकाण्डे

### गीतहनुमत्पराक्रमो नाम

## प्रथमः सर्गः

### मङ्गलाचरणम्

ध्यायन् सीतां प्रणीतां दशखरशिरसा राक्षसीं राजधानीं
चायंश्चारं चरिष्णुं श्वसनसुतमलं मुद्रया मोदयिष्यन्।
कायन् कर्णे कलार्णं जनककुलसुवे वाचिकं वल्गुवाग्मी
रामः सौमित्रिमित्रः स जयति जयिनो गीतसीताभिरामः।।१।।
गर्जन् कुस्त्रीकुगर्भार्भकपतनमहो रामनामध्वनीद्धं
तर्जं तर्जं तरस्वी रजनिचरकरान् भग्नसाम्वर्तकौजा।
सर्जं सर्जं सहिष्णुः कुणपखलकुलाम्भोजवज्रोग्रवृष्टिं
यास्यन् पारेपयोधेः स इह विजयते वानराकारमेघः।।२।।
रघुवरकरमुद्रिकया वल्गितवदनः पुलस्त्यकुलकदनः।
लङ्घितललामसदनः कश्चन कपिसज्जनो जयति।।३।।

**भौमी-** दशमुख रावण द्वारा राक्षसों की राजधानी लंका में ले जायी गयी सीताजी का ध्यान करते हुए, गतिशील दूत वायुपुत्र हनुमानजी को उत्साहित करते हुये और मुद्रिका से प्रसन्न करते हुये और जानकीजी के लिये कानों को सुखद अक्षरों वाला संदेश हनुमानजी के माध्यम से कहते हुये, ऐसे मधुर वाणी वाले सुंदर लक्ष्मण ही जिनके मित्र हैं ऐसे प्रशस्त वक्ता भगवान श्रीराम विश्वविजयी कामादि खलों को भी जीत रहे हैं। राक्षस स्त्रियों के कुसंस्कारी गर्भस्थ शिशुओं के पतन की घटनामय तेज से युक्त रामनाम की ध्वनि से व्याप्त दिव्य गर्जन करते हुये, अत्यंत वेगवान राक्षस समूहों को बार-बार डरवाते हुये, प्रलयकारी मेघ के भी ओज को नष्ट करने वाले, राक्षस कुलरूप कमल को नष्ट करने के लिए बार-बार वज्रपात का सर्जन करते हुए, ऐसे

सागर के पार जाते हुये वानर के आकार में विद्यमान हनुमान मेघ की जय हो। श्रीराम की दी हुई मुद्रिका से जिनका मुख सुशोभित हो रहा है, ऐसे रत्नों की राशि सागर को लाँघने वाले रावण कुल के नाशक, अपूर्व वैष्णवश्रेष्ठ वानरेन्द्र हनुमान् जी की जय हो।

## सन्दर्भश्लोकः

**अथ जाम्बवता प्रणोदितः प्रपतिस्यन् सुरशत्रुसादनम्।**
**ववृधे हनुमान् समुद्रिको वनवह्निर्मरुतेव वेगितः।।१।।**

**भौमी–** इसके अनन्तर जाम्बवानजी के द्वारा उत्साहित होकर देवशत्रु रावण के नगर पर आक्रमण करते हुये, मुद्रिका के साथ हनुमानजी उसी प्रकार बढ़े जिस प्रकार वायु से प्रेरित हुआ वन का अग्नि उद्दीप्त हो जाता है।

## गीत संख्या–१

**किन्नरा गायन्ति–**

**लङ्कामशङ्कः प्रयातो हे वायुपुत्रो हनूमान्।।**
**मुखे मेलयित्वा रामनामाङ्कमुद्राम्।**
**चूषन् यथा शिशुर्हरितां हरिद्राम्।।**
**राजन्निखिलगुणव्रातो हे वायुपुत्रो हनूमान्।।१।।**
**तेजोमयजातरूपपर्वतशरीरः ।**
**सौम्य कपिवीरो रणधीरो महावीरः।।**
**क्रियमाण विघ्नकुलविघातो हे वायुपुत्रो हनूमान्।।२।।**
**सीताकुशलवार्तां राघवाय दित्सन्।**
**रावणमनसि परितापं प्रदित्सन्।।**
**बलवेगवीर्यविजितवातो हे वायुपुत्रो हनूमान्।।३।।**
**प्रतिष्ठाप्य मनोमन्दिरे च रघुवीरम्।**
**नत्वा सीतारामौ गुरून् वानरान् समीरम्।।**
**सुन्दरभूधरमायातो हे वायुपुत्रो हनूमान्।।४।।**
**लवणाम्बुधिं लङ्घिष्यमाणो मनस्वी।**
**उत्प्लुतो नभोभविष्णुर्भव्यो यशस्वी।।**
**गिरिधराभिरामपारिजातो हे वायुपुत्रो हनूमान्।।५।।**

**भौमी–** किन्नर गीत गाने लगे–अहो! आज वायु के पुत्र हनुमान निर्भीक होकर लंका को चल पड़े हैं। श्रीरामनामांकित मुद्रिका को मुख में डालकर जैसे बालक हरित हरिद्रा को चूसता है, उसी प्रकार मुद्रिका का स्वाद लेते हुये, जिनमें सम्पूर्ण गुणों के समूह शोभित हो रहे हैं, ऐसे वायु के पुत्र हनुमान लंका को प्रस्थान कर

रहे हैं। तेजस्वी, स्वर्ण पर्वत के समान शरीर वाले युद्ध में धीर, अत्यंत सौम्य, वानरों में वीर, महावीर जू सम्पूर्ण विघ्नों का नाश करते हुये निर्भीकतापूर्वक लंका को प्रयाण कर चुके हैं। श्रीराम को सीताजी का कुशल समाचार देने के इच्छुक और रावण के मन में परिताप देने की इच्छा करते हुए बल, वेग एवं पराक्रम से वायु को भी जीते हुये हनुमानजी लंका की ओर प्रस्थान कर रहे हैं। अपने मन मंदिर में श्रीरघुवीरजी को विराजमान करके सीतारामजी गुरुदेव सूर्यनारायण, वृद्ध वानरों तथा वायु को नमस्कार करके वायुपुत्र हनुमान जी सुंदर पर्वत पर आये। नमक के सागर को लाँघने की इच्छा करते हुये, **गिरिधर** कवि के सुंदर कल्पवृक्षस्वरूप वायुपुत्र हनुमानजी भावी कल्याण से सम्पन्न होकर एवं प्रशस्त यश से देदीप्यमान होते हुये आकाश में उछले।

## गीत संख्या-२

**कनककुधरशतसुन्दर मितमन्दर हे।**
**सुमनोमहितरघुवीर जय महावीर हरे।।१।।**
**हृदयसुधृतधरणीधर श्रितभूधर हे।**
**जवजितगरुडसमीर जय महावीर हरे।।२।।**
**प्रभुमुद्रिकामुखमेलन कपिखेलन हे।**
**गर्जनगगनगभीर जय महावीर हरे।।३।।**
**खलकुलकदनविशारद नतनारद हे।**
**ब्रह्मचर्यचर्चितशरीर जय महावीर हरे।।४।।**
**मैनाकसुरसामदमर्दन सिंहिकार्दन हे।**
**लंघितसिन्धुर्लंकिनीर जय महावीर हरे।।५।।**
**जनकसुतासमाश्वासन वननाशन हे।**
**लङ्कादहनरणधीर जय महावीर हरे।।६।।**
**चूडामणिश्रीवचनार्पण स्वसमर्पण हे।**
**प्रसृमर प्रेमपाटीर जय महावीर हरे।।७।।**
**रघुवरचरभवभावन जनपावन हे।**
**गिरिधरनयनकुटीर जय महावीर हरे।।८।।**

**भौमी-** अनेक स्वर्ण पर्वतों के समान सुंदर मंदराचल पर्वत को भी सीमित करने वाले, अपने सुंदर मन में रघुवीर श्रीराम का पूजन करने वाले, हे वानर श्रेष्ठ महावीर! आपकी जय हो। अपने हृदय में पृथ्वी को धारण कर रहे श्रीराम को धारण किये हुये और महेन्द्राचल पर्वत का आश्रय लिये हुये वेग से गरुड और वायु को जीते हुये, हे महावीर हनुमानजी! आपकी जय हो। मुख में प्रभु की मुद्रिका लिये हुये, वानर की लीला करने वाले, गरजते हुये, आकाश के समान गंभीर हे कपिश्रेष्ठ महावीरजी! आपकी जय हो। राक्षसकुल के नाश में निपुण और अपने व्यक्तित्व से नारदजी को भी झुकाये हुये अथवा नारद के द्वारा नमस्कृत, ब्रह्मचर्य से सुशोभित शरीर वाले, हे महावीरजी! आपकी जय हो। हे मैनाक और सुरसा के मद को नष्ट करने वाले! हे सिंहिका का वध करने वाले! सागर लाँघने वाले! लंकिनी राक्षसी को कँपाने वाले, महावीरजी! आपकी जय

हो। जनकनंदिनी सीताजी को आश्वासन देने वाले, अशोक वाटिका को नष्ट करने वाले, युद्ध में अक्ष का वध करके मेघनाद को पराजित करने वाले, लंका को जलाकर अग्निसात करने वाले हे महावीरजी! आपकी जय हो। प्रभु को चूड़ामणि और सीताजी का संदेश देने वाले, स्वयं को श्रीरामजी के चरणों में समर्पित करने वाले और अत्यंत कोमल प्रेमानुलेप से युक्त, हे महावीर आपकी जय हो। हे श्रीराम के श्रेष्ठ दूत! शिवजी को भी प्रसन्न करने वाले! संसार को पवित्र करने वाले तथा **गिरिधर** कवि के नेत्र कुटीर में निवास करने वाले! हे महावीरजी! आपकी जय हो।

## गीत संख्या-३

**मैनाको हनूमन्तं प्रति आविर्भूय-**

**हनूमन् मे कनककूटे क्षणं विश्रम्यतां श्रीमन्।**
**महात्मन् मे रुचिरकूटे सुखं विश्रम्यतां धीमन्।।**
**शिवत्वे पार्वतीभ्रातुर्ममापीड्योऽसि जामाता।**
**कपित्वे वायुसूनुस्त्वं भ्रातृव्यो मेऽसि सुखदाता।।**
**परात्मन् मे सुभगकूटे क्षणं विश्रम्यतां धीमन्।। १।।**
**भवान् रघुनाथकार्यार्थी रघोर्वंश्योऽस्ति कूपारः।**
**समुद्रान्तरनिवासत्वात्तदीयो मयि समुपकारः।।**
**गुणात्मन् मे महति कूटे क्षण विश्रम्यतां धीमन्।।२।।**
**दिदृक्षुं मैथिलीं यान्तं निरातङ्कं कपिं लङ्काम्।**
**न सेवेच्चेत्तदा यायां सदाऽकीर्तिं कलङ्काङ्काम्।।**
**रसात्मन् मे लसति कूटे क्षणं विश्रम्यतां धीमन्।।३।।**
**कृतार्थःस्यां हनूमन्तं भजन् गिरिधरप्रभुं सन्तम्।**
**समुद्रस्यापि वायोर्वै मुदा यायां मृणस्यान्तम्।।**
**भवात्मन् मे भवति कूटे क्षणं विश्रम्यतां धीमन्।। ४।।**

**भौमी-** अब प्रकट होकर मैनाक हनुमानजी से कहता है- हे हनुमानजी! स्वर्ण शिखर पर क्षण भर के लिये विश्राम कर लीजिये। हे श्रीमन्! हे प्रशस्त बुद्धि वाले हनुमानजी! सुखपूर्वक विश्राम कर लीजिये। हे महात्मन! मेरे सुंदर शिखर पर क्षण भर सुखपूर्वक विश्राम कर लीजिये। शिवरूप में आप पार्वती के भाई मुझ मैनाक के स्तुति करने योग्य जमाई अर्थात् बहनोई हैं और वानर रूप में वायु के पुत्र आप हनुमान मेरे भतीजे हैं, इसलिये हे परात्मन! आप मेरे सुंदर शिखर पर सुखपूर्वक क्षण भर विश्राम कर लें। आप श्रीरघुनाथ के कार्य करने वाले दूत हैं और समुद्र रघुवंशी है और समुद्र के अंदर निवास करने के कारण मुझ पर समुद्र का बहुत बड़ा उपकार है। हे गुणात्मन! आप मेरे महान शिखर पर क्षण भर सुखपूर्वक विश्राम कर लीजिये। सीताजी के दर्शनों के इच्छुक निर्भीक लंका जाते हुये, आप वानरश्रेष्ठ की यदि मैं नहीं सेवा करूँगा तो मुझे सदैव कलंकित अपकीर्ति ही मिलेगी। इसलिये हे राम रस से पूर्ण आत्मा वाले हनुमानजी! मेरे सुशोभित शिखर पर क्षण भर के

लिये विश्राम कर लीजिये। हे प्रभु! इसी बहाने **गिरिधर** कवि के प्रभु परम संत आप श्रीहनुमान की सेवा करता हुआ मैं कृतार्थ हो जाऊँगा और समुद्र तथा वायु से उऋण हो जाऊँगा। हे कल्याणात्मन! आप मेरे कल्याणकारी शिखर पर क्षण भर सुखपूर्वक विश्राम कर लीजिये।

## गीत संख्या-४

**हनूमान् मैनाकं प्रति-**

**भवतु मयि विश्वस्तो मैनाकः।**
**रघुपतिकार्यमन्तरा क्षणमपि को विश्रमो वराकः।।**
**सीतान्वेषणकृते सावधिकसमया वयं निदिष्टाः।**
**तदतिक्रमे मरणमिति सुग्रीवेण वयं निर्दिष्टाः।।१।।**
**यावन्नो पश्यामि रामपत्नीमिह तनूं धरन्तीम्।**
**तावत् किमपेक्षेय पिपासां प्राणान् क्षुधं हरन्तीम्।।२।।**
**यावद् भौमीकुशलवार्तया सन्तोष्येत न रामः।**
**तावत् कथं भोजनं शयनं स्वीक्रियतां विश्रामः।।३।।**
**अनुजानीहि ततो मां गन्तुं भवता मित्र शपामि।**
**गिरिधरप्रभुपत्नीदर्शनलक्ष्यो नो मृषा लपामि।।४।।**

**भौमी–** हनुमानजी मैनाक के प्रति कहते हैं– हे मैनाक! आप मुझपर विश्वस्त हो जाइये, श्रीराम के कार्य के बिना एक क्षण के लिए भी यह विचारा विश्राम कहाँ सम्भव है? सीताजी के अन्वेषण के लिए हम लोगों को एक मास की अवधि का समय दिया गया था। उसका अतिक्रमण होने पर सभी वानरों को मृत्युदण्ड मिलेगा। इस प्रकार सुग्रीवजी ने हम लोगों को निर्देश दिया था। जब तक मैं श्रीराम पत्नी सीताजी को शरीर धारण करते हुए नहीं देख रहा हूँ तब तक प्राणों को हरती हुई भी प्यास और क्षुधा की कैसे अपेक्षा कर सकता हूँ? जब तक सीताजी के कुशल वार्ता से मैं श्रीराम को सन्तुष्ट नहीं कर ले रहा हूँ तब तक भोजन, शयन या विश्राम कैसे स्वीकार किया जाय? इसलिए हे मैनाक! अब मुझे जाने की आज्ञा दो, मैं **गिरिधर** कवि के प्रभु श्रीराम की धर्मपत्नी सीताजी के दर्शन का लक्ष्य लेकर आया हूँ। तुम्हारी शपथ करके कहता हूँ कि झूठ नहीं बोल रहा हूँ।

## सन्दर्भश्लोकः

**ततोऽहिमाता बिबुधैः प्रणोदिता स्वमत्तुमुग्रा सुरसा यशस्विनी।**
**निवार्यमाणापि रुषातिमात्रया न्यगादि गद्या हि पुनर्हनूमता।।१।।**

**भौमी–**इसके अनन्तर देवताओं द्वारा भेजी हुई और हनुमानजी को खाने के लिए उद्यत यशस्विनी नागमाता सुरसा अत्यन्त क्रोध से हनुमानजी द्वारा रोक दी जाती हुई भी जब हठ पर अड़ी रही फिर हनुमानजी ने सुस्पष्ट अक्षरों में उससे कहा।

## गीत संख्या-५

सुरसे त्यज नितरां निर्बन्धम्।
मां खादितुं वदसि वाचाटे परिहर हठानुबन्धम्।।
त्वं भुजङ्गमाता विख्याता वायुसुतोऽहं भद्रे।
कथमशितुं मां प्रभवसि वह्निं हा हा कलिताभद्रे।।१।।
सूर्यमण्डलग्रासिनमपि ग्रससे मां कुटिलाचारे।
किं सम्माति सागरः शुक्त्यां निगद मृषाव्यवहारे।।२।।
सीतादर्शनमेत्य सत्वरं कृत्वा राघवकार्यम्।
पुनस्त्वदाननमेव प्रवेक्ष्ये सत्यं वचोऽनिवार्यम्।।३।।
गिरिधरप्रभुपदपद्ममधुकरं प्रस्थापय हनुमन्तम्।
मा व्यवधेहि जानकीं द्रष्टुं ह्यनुजानीहि लषन्तम्।।४।।

**भौमी-** हे सुरसे! अपना बहुत बड़ा हठ छोड़ दो, अरे! बहुत निकृष्ट बोलने वाली मुझे खाने की बात करती है, यह हठ का अनुबन्ध छोड़ दो। कल्याणी! तुम सर्पों की माँ विख्यात तो और मैं वायुपुत्र अर्थात अग्नि हूँ। फिर तुम मुझे कैसे खा सकती हो? हाय! तुममें इस प्रकार का अकल्याण क्यों आ गया? अरे कुटिल आचार वाली नागमाता! सूर्य मंडल को भी ग्रस लेने वाले मुझे खाना चाहती हो। झूठ व्यवहार करने वाली सुरसे! बोलो, क्या सागर छोटी-सी सीपी में समा सकता है? सीताजी के दर्शन करके श्रीराम का कार्य करके फिर मैं तुम्हारे मुख में प्रवेश कर लूँगा, यह मेरा अनिवार्य सत्य वचन है। **गिरिधर** कवि के प्रभु श्रीराम के चरण कमल के भ्रमर मुझ हनुमान को जाने दो। सीताजी के दर्शनों की इच्छा करते हुए मुझ हनुमान को अनुज्ञा दो, व्यवधान मत डालो।

## गीत संख्या-६

**कविर्गायति-**

विचित्रः कोऽपि मारुतेर्योगः।
विस्मापकः सिद्धसङ्घानां भवनिरुपमप्रयोगः।।
निरालम्बमार्गं गच्छन् वियदपि सुदृढव्यायोगः।
नो बिभेति न श्राम्यति ताम्यति योगिसुलभसंयोगः।। १।।
नो कूप्यति सुरसायै वीरस्तनुते शिष्टाचारम्।
पश्यन् प्राणसङ्कटं न ग्लायति भीमं व्यवहारम्।।२।।
यथा यथा वर्धयते सुरसा विकृतविशालं वदनम्।
तथा तथा तद् द्विगुणं तनुते स्ववपुर्मङ्गलसदनम्।।३।।
शतयोजने विस्तृते वदने सूक्ष्मः कपिकुलवीरः।

**प्रविश्यागतो हसन् विनीतो गच्छति सङ्गरधीरः।।४।।**
**गिरिधरप्रभुप्रतापं कलयन् यास्यति सागरपारम्।**
**लङ्घिष्यते रामकार्यार्थं गोष्पदमिव कूपारम्।।५।।**

**भौमी-** अब कवि गा रहे हैं–वायुपुत्र हनुमानजी का कोई यह विचित्र ही कौशल है जो सिद्ध समूहों को भी विस्मित करने वाला और संसार का अद्वितीय प्रयोग है। आश्चर्य है आलम्बनरहित आकाश मार्ग में जाते हुए भी श्रीहनुमान् न डर रहे हैं, न थक रहे हैं और न ही दुःखी हो रहे हैं, क्योंकि उनका उद्यम दृढ़ है और उनमें योगियों के लिए ही सुलभ सिद्धियों का संयोग है। वीर हनुमान सुरसा पर कुपित नहीं हो रहे हैं, उसके सामने शिष्टाचार ही प्रकट कर रहे हैं अपना प्राण संकटरूप सुरसा का भयंकर व्यवहार देखते हुये भी हनुमानजी का हर्ष क्षीण नहीं हो रहा है। सुरसा जिस जिस प्रकार से अपना विकृत और विशाल मुख फैलाती जाती है, हनुमानजी उसी उसी प्रकार से उसकी दुगुनी मात्रा में मंगल मंदिर स्वरूप अपना शरीर बढ़ा लेते हैं। सुरसा के मुख के सौ योजनपर्यन्त विस्तीर्ण हो जाने पर दृढ़ प्रतिज्ञ वानर कुल में श्रेष्ठ हनुमानजी उसके मुख में प्रवेश करके बाहर आये हँसते हुए आगे चल पड़े। **गिरिधर** कवि के प्रभु श्रीराम का प्रताप हृदय में धारण करके हनुमानजी सागर पार जायेंगे और प्रभु के कार्य के लिए ही विशाल सागर को गोखुर के समान लाँघ जायेंगे।

## गीत संख्या-७

**स्वमुखान्निष्क्रान्तं हनुमन्तं प्रति सुरसा-**

**गच्छ गच्छ द्रुतं कपिकुलवीर भवन्तु तव मङ्गला दिशः।**
**शीघ्रं याहि पयोनिधिपारं धर्षय पद्भ्यां रिपुप्राकारम्।**
**पश्य पश्य प्रभोः पत्नीं प्रवीर लभस्व तस्याः शुभा आशिषः।।१।।**
**अष्टसिद्धयो ननु नवनिधयो वृणतां त्वां सुखमङ्गलविधयो।**
**रक्ष ब्रह्मचर्यव्रतं बलवीर भवन्तु तुभ्यं सुखदा निशः।।२।।**
**रामचन्द्रकार्याणि निधारय संयुगे रावणमपि संहारय।**
**यच्छ यच्छ मुदं सद्भ्यो रणधीर भवन्तु तव भस्मसाद् द्विषः।।३।।**
**राघवेण मैथिलीं समानय गिरिधरगीतं हृदि सम्मानय।**
**शिक्षयस्व सर्वलोकं महावीर भवन्तु तुभ्यं सारसा दृशः।।४।।**

**भौमी-** अपने मुख से निकले हुए हनुमानजी को सम्बोधित करती हुई सुरसा कहती है–हे कपिकुल के वीर हनुमान! तुम शीघ्र जाओ, तुम्हारे लिए सभी दिशाएँ मंगलमय हों। तुम सागर के पार शीघ्र जाओ और शत्रु रावण के प्राकार को चरणों से कुचल दो और हे प्रकृष्ट वीर! प्रभु श्रीराम की धर्मपत्नी सीताजी के दर्शन करो, उनका शुभ आशीर्वाद प्राप्त करो। सुख मंगल विधान करने वाली आठों सिद्धियाँ और नौ निधियाँ तुम्हारा मंगल करें, तुम अपने ब्रह्मचर्य की निरन्तर रक्षा करते रहो। हे रणधीर! श्रीराम के कार्यों का निश्चय करो और उनका सम्पादन करो। युद्ध में श्रीरामजी से रावण का वध कराओ और सन्तों को प्रसन्नता प्रदान करो, तुम्हारे

शत्रु भस्मसात हो जायँ। तुम सीताजी को श्रीराघव से मिलाओ और **गिरिधर** कवि के गीत का हृदय में सम्मान करो, हे महावीर! तुम सम्पूर्ण लोक को कर्तव्य और श्रीराम भक्ति की शिक्षा दो, सभी के नेत्र तुम्हारे लिए प्रेमरस से परिपूर्ण हों।

## सन्दर्भश्लोकः

**सुरसां समनुज्ञाप्य गच्छन् वियति वानरः।**
**छायागृहीतसंवेगः सिंहिकां वीक्ष्य विस्मितः।।१।।**

**भौमी–**इस प्रकार सुरसा से आज्ञा लेकर आकाश मार्ग से जाते हुए किसी अज्ञात छाया से अपने वेग को ग्रहण कर लिए जाने पर वानरश्रेष्ठ हनुमानजी समुद्र में सिंहिका को देखकर विस्मित हो गये।

## गीत संख्या-८

**स्वगतं हनूमान्-**

**किं ममच्छायां विनिघ्नज्जले तिष्ठति प्राणि।**
**अवध्यं नारीशरीरं विधे किं करवाणि।।**
**खलं निजराष्ट्रद्रुहं तत् कृते वै प्रणिहन्मि।**
**राष्ट्रदेवो राष्ट्रविघ्नं विमलधीर्विनिहन्मि।।१।।**
**राष्ट्रलक्ष्यो राष्ट्ररक्षायै स्वमेव समर्प्य।**
**सदा स्वाहाकारमेव करोत्यसून् प्रत्यर्प्य।।२।।**
**इदं राष्ट्रायैव नहि मम मन्त्रमेनमुदीर्य।**
**सन्ततं जागर्ति जगति जयेन जगत्समीर्य।।३।।**
**वक्ति गिरिधरकविरामं राष्ट्रमङ्गलनाम।**
**ततो हत्वा सिंहिकां सुखयामि भारतधाम।।४।।**

**भौमी-** हनुमानजी अपने मन में कह रहे हैं–हे ब्रह्मन्! मेरी छाया को विघ्नित करता हुआ अर्थात् रोकता हुआ यह कौन–सा प्राणी जल में निवास कर रहा है? अरे! यह तो नारी है। नारी शरीर अवध्य होता है। हे विधाता! अब मैं क्या करूँ? कोई बात नहीं। अपने राष्ट्र का द्रोह करने वाले किसी भी लिंग में दिख रहे खल का अब मैं वध करूँगा क्योंकि आतंकवादी का कोई लिंग–धर्म–जाति–वय नहीं होता। मैं रामाभिन्न राष्ट्र को अपना देवता मानता हूँ। अतः विमल बुद्धि वाला मैं हनुमान अपने राष्ट्र के इस विघ्न को अभी समाप्त कर दे रहा हूँ। राष्ट्र की उन्नति को लक्ष्य मानने वाला व्यक्ति राष्ट्र की रक्षा के लिये अपने को ही समर्पित करके अपने प्राणों को भी प्रत्यर्पण करके निरन्तर स्वाहाकार ही करता है। ''यह राष्ट्र के लिये है, मेरा नहीं''–इसी मन्त्र का जप करके अपने विजय से जगत को प्रेरणा देकर राष्ट्रभक्त संसार में अहर्निश जागता रहता है। **गिरिधर** कवि भी यही कहते हैं कि श्रीराम राष्ट्र के मंगल हैं। इसलिये आज मैं सिंहिका का वध करके इस भारत धाम को सुखी करूँगा।

## गीत संख्या-९

सागरपारं गत्वा हनूमान् स्वगतम्-

अहो निशा गहना पुरी प्रविश्यतां सुखं निविश्यतां व्रजेयमद्य द्रष्टुं जानकीम्।।
संक्षिप्य स्वरुपं वृषदंशमात्रो भूत्वा वीर्यलवित्रेण रक्षसां च नासां लूत्वा।
तनौ चण्डपराक्रमः समाविश्यतां बलं निविश्यतां व्रजेयमद्य द्रष्टुं जानकीम्।।१।।
हत्वा मुष्टिकया लङ्किनीं प्रचण्डपापिनीं प्रविश्य शत्रुपुरीं सर्वप्राणितापिनीम्।
रावणस्य मूर्धनि पदं प्रदिश्यतां सती नु दृश्यतां व्रजेयमद्य द्रष्टुं जानकीम्।।२।।
राघववियोगविग्नां सीतां समाश्वासये हरन् तस्या मनोव्यथां रक्षोवनं नाशये।
असुरजिघांसया वीर्यधारा वृश्यतां न खलो मृश्यतां व्रजेयमद्य द्रष्टुं जानकीम्।।३।।
होलिकायितां विधाय वैरिवर्धितां पुरीं गिरिधरप्रभो प्रदर्श्य तूर्यचारचातुरीम्।
रावणात् खरारिकृपा समाकृष्यतां यशो विक्लिश्यतां व्रजेयमद्य द्रष्टुं जानकीम्।।४।।

**भौमी-** समुद्र पार जाकर हनुमानजी अपने मन में कह रहे हैं- अहो! यह अंधेरी रात, अब मैं लंकापुर में सुखपूर्वक प्रवेश करूँ, सुख से निवेश करूँ और जानकीजी के दर्शन के लिये आगे बढ़ूँ। अपने विशाल स्वरूप को संक्षिप्त करके और मसक के समान छोटा वानर रूप धारण करके अपने पराक्रम रूप कैंची से राक्षसों की नासिका काटकर अपने शरीर में चंड पराक्रम का आवेश करूँ। हल्की मुक्का से भयंकर पापिनी लंकिनी को मारकर सम्पूर्ण प्राणियों को कष्ट देने वाली लंकापुरी में प्रवेश करूँ और रावण के मस्तक पर मैं अपना चरण रखूँ और सती जानकीजी के दर्शन करूँ। राघवजी के वियोग से उद्विग्न सीताजी को आश्वासन दूँ और उनकी मनोव्यथा को दूर करके अशोक वाटिका को तहस-नहस कर दूँ, असुरों को मारने की इच्छा से अपने पराक्रम धारा की वर्षा करूँ। खल प्रकृति रावण को क्षमा न करूँ। शत्रु द्वारा पालित इस लंका को होलिका के समान अग्निसात करके **गिरिधर** कवि के प्रभु श्रीराम के समक्ष उन्हीं के गुप्तचर चातुरी का दर्शन कराऊँ। रावण पर से भगवान श्रीराम की कृपा हटा लूँ और उसका यश मसल डालूँ।

## गीत संख्या-१०

हनुमान् लङ्किनीं प्रति तया पृच्छ्यमानः

अहं रामस्य दूतो हनूमान् भो मा मा विरमय्य कार्यान् माम्।।
प्रभुमुद्रिकां स्ववदने रक्षन् सिन्धुपारमायातः।
रामनामबीजं बिभ्राणो भौमीं द्रष्टुं यातः।।
अहं ब्रह्मचर्यपूतो हनूमान् भो मा मा प्रशमय्य कार्यान् माम्।।१।।
यावन्नो पश्यामि मैथिलीं तावत् स्नामि न भुञ्जे।
अनुजानीहि न पथो विलम्बय वैनायिकं हि प्रयुञ्जे।।
अहं क्वाप्यपराभूतो हनूमान् भो मा मा विदमय्य कार्यान् माम्।।२।।

सत्यं वच्मि विलोक्य मैथिलीं भूयस्त्वां द्रष्टा हे।
कृतकार्यो न निवार्योऽदेव्या पादौ ते प्रष्टा हे।।
अहं कार्ये परिणूतो हनूमान् भो मा मा निरमय्य कार्यान् माम्।।३।।
मा बधान मा निर्बधान मा मा व्यवदध्या लङ्के।
गिरिधरप्रभुं विरुद्ध्य भवे भवितास्यथ श्रिता कलङ्के।।
अहमञ्जनाप्रसूतो हनूमान् भो मा मा विश्रमय्य कार्यान् माम्।।४।।

**भौमी-** लंकिनी द्वारा पूछे जाने पर हनुमानजी लंकिनी से कहते हैं–लंकिनी! मैं श्रीराम का दूत हनुमान हूँ, मुझे प्रभु के कार्य से मत रोको। अपने मुख में प्रभु की मुद्रिका लेकर मैं सागर पार आया। रामनाम का बीज धारण करते हुये मैं सीताजी के दर्शनों को निकला हूँ। मैं ब्रह्मचर्य से पवित्र हनुमान हूँ। मुझे कार्य से शान्त मत करो। जब तक मैं सीताजी के दर्शन नहीं कर रहा हूँ तब तक न स्नान करूँगा और न ही भोजन। आप आज्ञा दीजिये, मार्ग में विलंब मत कीजिये। लंकिनी! मैं कहीं भी और कभी भी न दबाया जाने वाला हनुमान हूँ। मुझे कार्य से दूर मत करो। मैं सत्य बोल रहा हूँ। सीताजी के दर्शन करके फिर आपके दर्शन करूँगा। आप मुझे रोकें नहीं। मैं कार्य करके आपके चरण छुऊँगा क्योंकि मैं कार्य के लिये प्रेरित हनुमान हूँ। आप मुझे कार्य से मत विलंबित करें। हे लंकिनी! मुझे बाँधो मत। मेरे साथ हठ मत करो। विघ्न मत डाल क्योंकि हे लंकिनी! **गिरिधर** कवि के प्रभु श्रीराम का विरोध करके तू बहुत बड़े कलंक में सन जायेगी। मैं अंजना–पुत्र हनुमान हूँ। मुझे मेरे कार्य से मत विश्राम कराओ।

## गीत संख्या-११

पुनर्हनुमता ताडिता लङ्किनी श्रीमहावीरं प्रति-

पाहि महावीर पाहि पाहि पापिपापतः।
त्राहि रणधीर त्राहि त्राहि तीव्रतापतः।।
महाबाहो लङ्कापुरी सुखेन प्रविश्यताम्।
रावणेन नीता सीताऽशोकवने दृश्यताम्।।
पाहि कपिवीर शत्रुसङ्कटकलापतः।।१।।
अवज्ञा कृता त्वदीया मया त्वया क्षम्यताम्।
मूढराक्षसीस्वभावतस्त्वयाऽभिशम्यताम् ।।
याहि जाम्बूनदशरीर पापपश्चयत्तापनः।।२।।
नावरोत्से नो विरोत्से सुखं तात गम्यताम्।
मैथिलीं विलोक्य पुनाराघव प्रणम्यताम्।।
याहि वीर याहि पाहि मनः परितापतः।।३।।
लङ्का पापपङ्का होलिकाग्नये प्रदीयताम्।

**तावकं सुयशो गिरिधरेण गिरा गीयताम्।।**
**पाहि श्रितरघुवीर पाहि भानुतापतः।।४।।**

**भौमी-** फिर हनुमानजी के द्वारा मुक्के से ताड़ित की हुई लंकिनी हनुमानजी के प्रति–हे महावीर! पापी रावण के पाप से मुझे बचा लीजिये–बचा लीजिये। हे रणधीर! भयंकर ताप से मेरी रक्षा कीजिए। हे महाबाहो! आप सुखपूर्वक लंका में प्रवेश करें और रावण द्वारा हरी हुई सीताजी के अशोक वन में दर्शन करें। हे वीर वानर! शत्रुओं के संकट समूह से मेरी रक्षा कीजिए। मैंने मूढ़ राक्षसी स्वभाव के कारण आपका अपमान किया। आप मुझे क्षमा करें और उस पाप का शमन कर दें। हे स्वर्ण शरीर! आप पाप के पश्चात्ताप से मेरी रक्षा करें। मैं आपका अवरोध नहीं करूँगी और न ही विरोध करूँगी। हे वीर! आप सुखपूर्वक पधारें। सीताजी के दर्शन करके सफलतापूर्वक लौटकर फिर राघवजी को प्रणाम करें। हे वीर! आप लंकापुरी पधारें–पधारें। मानसिक परिताप से मेरी रक्षा करें। पाप के कीचड़ में सनी हुई यह लंकानगरी को होली की आग में दे दीजिए अर्थात् लंका जला डालिए और आपका सुयश **गिरिधर** कवि भी अपनी संस्कृत और प्राकृत वाणी में गाते रहें। हे श्रीरघुवीरजी के सेवक हनुमानजी! आप मुझ लंकिनी की अनुताप से रक्षा कर लीजिए, रक्षा कर लीजिए।

## गीत संख्या–१२

**हनूमान् लङ्कापुरीं प्रविशन् स्वगतम् –**

**रघुवीर मङ्गलानि मङ्गलं दिशन्तु मे।**
**रणधीर मङ्गलानि मङ्गलं दिशन्तु मे।।**
**लङ्कां प्रयामि भौमीं द्रष्टुकामःशान्तधीः।**
**रक्षःपुरीं प्रपन्नः पर्यटामि शान्तभीः।।**
**मुनिधीरसम्बलानि मङ्गलं दिशन्तु मे।।१।।**
**प्रतिसद्मरक्षसां मया सुखं प्रविश्यते।**
**वन्यकैर्वनस्पतिर्यथैव देव्यन्विष्यते।।**
**धर्मधीर सद्बलानि मङ्गलं दिशन्तु मे।।२।।**
**प्रतिनारिमुखं वीक्ष्य मैथिली विचीयते।**
**सुमनस्तथापि मे न धर्मतोपचीयते।।**
**मतिधीरहृद्बलानि मङ्गलं दिशन्तु मे।।३।।**
**लघुरूपभृता मया पार्थिवी प्रणंस्यते।**
**कवि गिरिधरेण रामं गायताभिरंस्यते।।**
**महावीर वत्सलानि मङ्गलं दिशन्तु मे।।४।।**

**भौमी-** लंकिनी की अनुमति पाकर लंकापुरी में प्रवेश करते हुए हनुमानजी अपने मन में कह रहे हैं–हे रघुवीर! आपकी सभी मंगल विभूतियाँ मुझे मंगल प्रदान करें। हे रणधीर! आपके सभी मंगल उपकरण मुझे मंगल प्रदान करें। सीताजी के दर्शनों की कामना करता हुआ, शान्त बुद्धि वाला मैं हनुमान लंका में प्रवेश कर रहा हूँ और राक्षसों की पुरी को प्राप्त करके निर्भीक मैं इधर-उधर सीताजी को ढूँढ़ता हुआ पर्यटन कर रहा हूँ। मुनियों और धीरों के पाथेय आपके उपकरण मुझे मंगल प्रदान करें। आज मैं राक्षसों के प्रत्येक भवन में प्रवेश कर रहा हूँ। जैसे वनचर वनौषधियों का अन्वेषण करते हैं, उसी प्रकार मैं सीताजी का अन्वेषण कर रहा हूँ। धर्म में धीर रहने वाले महापुरुषों के श्रेष्ठ बलरूप आपके उपकरण मुझे मंगल प्रदान करें। आज मैं प्रत्येक राक्षसी नारी का मुख देख-देखकर सीताजी को ढूँढ रहा हूँ फिर भी मेरा पवित्र मन धर्म से नहीं च्युत हो रहा है। अतः धीर बुद्धि वाले महापुरुषों के हार्दिक बलस्वरूप आपके उपकरण मुझे मंगल प्रदान करें।

## गीत संख्या-१३

**विभीषणगृहं प्रेक्ष्य हनूमान् -**

**नूनमेतत् सुवैष्णवस्य धाम दृश्यते।**
**इदं परितस्तुलसीतरुदाम दृश्यते।।**
**अहो वैष्णवपताका चतुरस्त्रभाविनी।**
**भग्नपापपरिपाका पतितपावनी।।**
**इदं पुरतः पवित्रधेनुधाम दृश्यते।**
**इदं परितस्तुलसीतरुदाम दृश्यते।।१।।**
**एतत् समया लसति चारुपुष्पवाटिका।**
**एतत् पूर्वाप्यपूर्वा शुद्धवारिवापिका।।**
**नैवेद्यार्थं कदलीलतादाम दृश्यते।**
**इदं कस्यचित् सुवैष्णवस्य धाम दृश्यते।।२।।**
**अहो रामायुधलक्षितं श्रीराममन्दिरम्।**
**भवाम्भोधिमन्दरं कनककलशसुन्दरम्।**
**श्रितपरिक्रमाविभागं भाग्यधाम दृश्यते।**
**इदं परितस्तुलसीतरुदाम दृश्यते।।३।।**
**रात्रावपि कोटिभास्करकरप्रकाशकम्।**
**रक्षःपुरे क्वेदृक्तीर्थं तमस्तोमनाशकम्।।**
**गिरिधरस्य काव्यकलाकीर्तिधाम दृश्यते।**
**इदं परितस्तुलसीतरुदाम दृश्यते।।४।।**

**भौमी-** विभीषण का घर देखकर हनुमानजी कहते हैं–निश्चित ही यह किसी वैष्णव का घर है क्योंकि

इसके चारों ओर तुलसीवृक्ष के गमले दिख रहे हैं। अहो! चारों ओर फहरती हुई यह वैष्णव पताका जो पापों के परिपाक को नष्ट करने वाली एवं पतितजनों को पवित्र बनाने वाली है, इसी वैष्णव भवन के आगे एक गौशाला भी दिख रही है। लंका में सर्वत्र गौएँ मारी जाती हैं, लगता है केवल इसी घर में गौवें पाली जाती हैं। इस भवन के निकट ही सुन्दर फुलवारी सुशोभित हो रही है और उसी के पूर्व दिशा में शुद्ध सुन्दर जल वाली बावली भी है। भगवान के नैवेद्य के लिए यहाँ केले के सुन्दर वृक्ष का झुण्ड दिख रहा है, निश्चित ही यह किसी वैष्णव का घर है। अहो! भगवान राम के धनुषबाण से चिन्हित श्रीराम मन्दिर भी दिखाई पड़ रहा है जो भवसागर के मन्दराचल के समान है और इसके कलश भी स्वर्णमय हैं। इसमें चारों ओर परिक्रमा का मार्ग बना हुआ है और यह श्रीराम भक्तों के भाग्य का धाम है। अहो! रात्रि में भी यह श्रीराम मन्दिर करोड़ों सूर्यों की भाँति प्रकाश कर रहा है। भला राक्षसों के पुर में भी इस प्रकार अन्धकार नाशक तीर्थ कहाँ से आ गया? यह तो **गिरिधर** कवि की काव्यकला के तीर्थ का धाम है।

## गीत संख्या-१४

विनिद्रविभीषणाद्रामनामोच्चारणं श्रुत्वा हनूमान् निश्चिन्वन् -

**संस्तवं करोम्यनेन भक्तिमता श्रीमता, विगतसर्वविधदोषो भाति मे विभीषणः।।**
**एतद्धाम्नि रामचन्द्रप्रतिष्ठा विराजते, एतन्मुखे रामनामसुनिष्ठा विराजते।**
**नूनं विशुद्धेन भाव्यं विधेऽनेन ह्रीमता, सकलकल्याणकोशो भाति मे विभीषणः।।१।।**
**एतद् द्वारे रम्भमाणा भान्ति वै धेनवः, एतं परितः पवित्रयन्ति मखरेणवः।**
**रामभक्तेन भाव्यं तदानेन धीमता, विहितविष्णुजनतोषो भाति मे विभीषणः।।२।।**
**कार्यहानिर्न भविता कदापि साधुतः, पापम्लानिर्न भविता कदाप्यसाधुतः।**
**शुद्धसाधुनैव भाव्यं भो अनेन श्रीमता, न्यस्तसन्मार्गशोषो भाति मे विभीषणः।।३।।**
**परिचयं विधाय साधयामि कार्यं हरेः, संस्तवं विधाय वाधयामि बाधकान् हरेः।**
**गिरिधरप्रभुसेवकेन भाव्यं पापभीमता, व्यस्तमदमानपोषो भाति मे विभीषणः।।४।।**

**भौमी-** जगे हुए विभीषण के मुख से श्रीराम नामोच्चारण सुनकर निश्चय करते हुए हनुमानजी कह रहे हैं—इस भक्तिमान व्यक्ति के आधार पर मैं परिचय कर पा रहा हूँ कि सब प्रकार के दोषों से रहित यह व्यक्ति मुझे विभीषण ही प्रतीत हो रहा है क्योंकि इस भद्र के धाम में श्रीरामजी की प्रतिष्ठा सुशोभित है, इसके मुख में श्रीराम नाम की निष्ठा विराज रही है। निश्चित ही इस लज्जाशील व्यक्ति को पवित्र ही होना चाहिए, यह तो सम्पूर्ण कल्याणों का कोश विभीषण ही लग रहा है। इस व्यक्ति के द्वार पर गायें रंभा रही हैं और यज्ञीय ब्राह्मणों की चरणरेणु इसे चारों ओर से पवित्र कर रही हैं। निश्चित ही यह बुद्धिमान व्यक्ति कोई रामभक्त ही होना चाहिए। मुझे तो यह वैष्णवजनों को सन्तुष्ट करने वाला विभीषण ही प्रतीत हो रहा है। साधु से कभी कार्य की हानि नहीं होती। असाधु से कभी पाप का नाश नहीं होता। यह श्रीमान् कोई न कोई शुद्ध साधु है। वस्तुतस्तु यह सन्मार्ग के शोषण से रहित विभीषण ही प्रतीत होता है। मैं इससे परिचय करके भगवान का कार्य सिद्ध कर दूँ और इनसे अन्तरंगता स्थापित करके प्रभु के बाधकों का भी वध करूँ। यह कोई न कोई **गिरिधर** कवि के स्वामी श्रीराम का सेवक है, मुझे तो मान, मदरहित सन्तों का पोषक विभीषण ही प्रतीत होता है।

## गीत संख्या-१५

हनूमान् आह्वयन् विभीषणं विप्ररूपः-

**श्रृणु श्रृणु मम वरवचो महाशय।**
**निद्रां जहज्जहासि न तल्पं मलीमसाशयमेतन्माश्रय।।१।।**
**भाति विभातं मलयजवातं रविसूतेऽभ्युदिते त्वं शेषे।**
**त्यज कुण्ठां दूरितवैकुण्ठां किं मयि तिष्ठति हृदि संशेषे।।२।।**
**किं विजृम्भसे नैवारभसे रामभजनमयी पथिकदुराशय।**
**विसृज मोहममताकुवासनां प्रक्षालय वदनं कुटिलाशय।।३।।**
**उत्तिष्ठार्य तल्पमधितिष्ठसि सन्तिष्ठस्व न जगति दुरात्मन्।**
**रामनाम रसिको भव राक्षस भज महेशमहितं च महात्मन्।।४।।**
**द्रुतमायाहि सखे मम पुरतः पुनः पुनः सप्रेम बोधये।**
**गिरिधरप्रभुसुकीर्तिसुरनद्यां स्नापं स्नापं चिदं शोधये।।५।।**

**भौमी-** ब्राह्मणरूप धारण करके विभीषण का आह्वान करते हुए श्रीहनुमान-हे महाशय! मेरी यह श्रेष्ठ वाणी सुनिये। तुम निद्रा छोड़ते हुए भी अपना पलंग नहीं छोड़ रहे हो, इस मलिन विचार का आश्रय मत करो। अरे महाशय! मलय वायु से युक्त यह प्रभात सुशोभित हो रहा है। अरुणोदय होने की तैयारी है पर अब भी तुम सो रहे हो? भगवान को दूर करने वाली इस निद्रा, कुण्ठा को छोड़ो। मेरे उपस्थित रहते हुए भी तुम संशय क्यों कर रहे हो? अरे संसार पथ के राही! दुर्बोध विचार वाले पथिक क्यों जमुहा रहे हो? श्रीराम भजन का आरम्भ क्यों नहीं कर रहे हो? अरे कुटिल आशय वाले निद्रालु! मोह, ममता, कुवासना को छोड़ों और मुख धो लो। हे आर्य! उठो। अभी भी बिस्तर पर पड़े हो। अरे दुष्ट बुद्धि वाले! संसार पर भरोसा मत करो। अरे राक्षस! राम नाम के रसिक बन जाओ, हे महात्मन! शिवजी के भी पूजित श्रीराम का पूजन करो। हे मित्र! बिस्तर छोड़कर मेरे पास शीघ्र आओ, मैं तुम्हें प्रेमपूर्वक बुला रहा हूँ। **गिरिधर** कवि के स्वामी श्रीराम की कीर्ति गंगा में नहला-नहला कर तुम्हारे चित्तत्त्व को मैं शुद्ध करना चाहता हूँ।

**विशेष-** यह गीत १६ मात्रा त्रिताल में बद्ध है इसे जोगिया, बैरागी और ललित राग में गाया जा सकता है।

## गीत संख्या-१६

विभीषणः समागत्य हनुमन्तं-

**कुत आयासि कोऽसि किल मे वद।**
**लङ्घित्वा सागरं परपुरीं रात्रौ कथमायातः सुखह्रद।।१।।**
**ब्रह्मचर्यभूषितललाटकः कनककपोलः कनकशरीरः।**
**शुभ्रमखोपवीतमण्डितवामांशो योगिवरो यमिधीरः।।२।।**

पादपद्मपादुकासुप्रसृमर गतिहतवृजिनो महानुभावः।
मन्ये ब्रह्मचर्यमिव मूर्तं मामभियातो मृदुस्वभावः।।३।।
चन्दनकमलपाटलीसुरभिनिहतदुर्गन्धो दृढानुबन्धः।
मन्ये दृग्गोचरोऽभ्युपेतः सेवकसेव्यभावसम्बन्धः।।४।।
किं वा परोपकारनिरत इह समायाति रघुनन्दनदासः।
किं वा मत्सौभ्याग्यविवर्धन धियाऽभिजातो रमानिवासः।।५।।
सत्यं ब्रूहि कुतोऽसि कोऽसि गोपाय न किंचित् करुणासिन्धो।
गिरिधरचातकनूतनजलधर रामरूपभूसुरजनबन्धो।।६।।

**भौमी–** विभीषणजी हनुमान जी से कहते हैं– हे भद्र! आप कहाँ से आ रहे हैं? कौन हैं? यह मुझे बतायें। इस सागर को लाँघकर आप शत्रु की पुरी में कैसे आये? हे सुखद ज्ञान! आप मुझे बतायें। आपका मस्तक ब्रह्मचर्य से सुशोभित है। आपका कपोल बहुत सुन्दर और शरीर स्वर्ण के समान है और आपका बायाँ स्कन्ध श्वेत यज्ञोपवीत से सुशोभित है। आप श्रेष्ठ–योगी, संयमी और धीर प्रतीत होते हैं। आप अपने चरणकमल की कोमल पादुका की सुन्दर गति से पाप को नष्ट कर रहे हैं। मुझे लगता है कि ब्रह्मचर्य ही शरीर धारण करके आप कोमल स्वभाव सम्पन्न होकर ही मेरे पास आये हैं। आप चन्दन कमल और गुलाब की सुगन्ध से यहाँ की दुर्गन्ध को मिटा रहे हैं। आपका अनुबन्ध ही दृढ़ है। मैं ऐसा मानता हूँ कि सेवक–सेव्यभाव सम्बन्ध ही नेत्रों का विषय बन गया है। क्या परोपकार में लगे हुये आप कोई श्रीराम के दास ही यहाँ आये हैं? अथवा मेरा सौभाग्य बढ़ाने की इच्छा से साक्षात् भगवान राम ही उपस्थित हो गये हैं? हे **गिरिधर** कवि रूप चातक के नवीन मेघ! हे श्रीराम रूप सज्जनों के बन्धु ब्राह्मण श्रेष्ठ! आप सत्य बोलिये। कहाँ से आ रहे हैं? कौन हैं? हे करुणा सिन्धो! मुझसे कुछ मत छिपाइये।

## गीत संख्या-१७

ज्ञातपरिचयो विभीषणः हनूमन्तं प्रति-

वद वद पवनकुमार हे रामः कदा कृपां कर्ता।।
कदा भानुकुलनाथो नितरामनाथम्।
मां विधाता भाग्यहीनं सबलं सनाथम्।।
वद वद परमोदार हे रामो दयां कदा कर्ता।।१।।
कदा रामो दर्शयिता वदनारविन्दम्।
कदा मां प्रहर्षयिता हृतसौख्यकन्दम्।।
वद वद भजनैकसार हे रामः कदा भवं भर्ता।।२।।
कदा शरणमायातं मामनन्यपालः।
त्राताभीमभवसिन्धोः कौसल्यालालः।।
वद वद करुणाकूपार हे रामो भयं कदा हर्ता।।३।।

**त्वं तु वेत्सि राघवस्य सरलं स्वभावम्।**
**विधिहरिहराणां दुरापं प्रभावम्।।**
**वद वद गिरिधराधार हे रामः कदाऽकं संहर्ता।।४।।**

**भौमी–** परिचय जानने के पश्चात् विभीषण हनुमानजी से कहते हैं। हे पवनकुमार! बोलिये– बोलिये। श्रीराम मेरे ऊपर कब कृपा करेंगे? सूर्यकुल के नाथ भगवान राम मुझ अनाथ भाग्यहीन को कब समर्थ और सनाथ बनायेंगे? हे परमोदार! बताइये, बताइये! श्रीराम कब मुझ पर दया करेंगे? हे हनुमानजी! श्रीराम मुझे अपना मुखकमल कब दिखायेंगे? मुझ सुखहीन को कब प्रसन्न करेंगे। हे भजनसार सर्वस्व हनुमानजी! आप बतायें कि श्रीराम मेरा कब कल्याण करेंगे? हे करुणा के सागर हनुमानजी! बतायें कि शरण में आये हुये मुझ विभीषण को अनन्यों के पालक कौसल्यानन्दन श्रीराम भवसागर से कब पार करेंगे और मेरा भय कब दूर करेंगे? आप तो श्रीराम का सरल–स्वभाव और ब्रह्मा, विष्णु, शिवजी के लिये भी दुर्लभ प्रभाव को जानते हैं। हे **गिरिधर** कवि के आधार हनुमानजी! आप बतायें कि श्रीराम मेरे दुःख का संहार कब करेंगे?

## गीत संख्या–१८

हनूमान् विभीषणं प्रति–

**व्रज शरणं रघुनाथं हे मा शोच विभीषण।**
**व्रज शरणं दीनानाथं हे मा लोच विभीषण।।१।।**
**त्यज ममतामदमोहं हे निजानन्दव्यपोहम्।**
**व्रज शरणं लोकनाथं हे माऽनुशोच विभीषण।।२।।**
**प्रणतकल्पमन्दारं हे भवविपद्विदारम्।**
**व्रज शरणं नृपनाथं हे मा विलोच विभीषण।।३।।**
**करतलधृतशरचापं हे हतसेवकतापम्।**
**व्रज शरणं जगन्नाथं हे मा निशोच विभीषण।।४।।**
**गिरिधरहृदयविहारं हे विगलितभवभारम्।**
**व्रज शरणं सीतानाथं हे माऽवशोच विभीषण।।५।।**

**भौमी–** अब हनुमानजी विभीषण के प्रति कहते हैं–हे विभीषण! रघुनाथजी की शरण में जाओ और चिन्ता मत करो। अब तुम दीनानाथ के शरण में जाओ, व्यर्थ के गुण–दोषों की आलोचना मत करो। हे विभीषण! अपने आनन्द को नष्ट करने वाले ममता–मद–मोह को छोड़ो, लोकनाथ भगवान की शरण में जाओ, पश्चात्ताप मत करो। हे विभीषण! प्रणतों के लिये कल्पवृक्ष स्वरूप संसार की विपत्ति नष्ट करने वाले राजाओं के भी राजा श्रीराम की शरण में जाओ, व्यर्थ का विचार मत करो। हाथ में धनुष–बाण लिये हुये सेवकों का कष्ट दूर करने वाले जगन्नाथ की शरण में जाओ। हे विभीषण! निरर्थक शोक मत करो। हे विभीषण! **गिरिधर** कवि के हृदय में विहार करने वाले भवभयभार को दूर करने वाले सीतानाथ श्रीराम की शरण में जाओ। अवमूल्यन करने वाला शोक मत करो।

## सन्दर्भश्लोकः

**विभीषणं समाभाष्य गतोऽशोकवनं कपिः।**
**ददर्श मैथिलीं शुक्लपक्ष इन्दुप्रभामिव।।१।।**

**भौमी-** विभीषण को आश्वासन देकर हनुमानजी अशोक वाटिका गये और वहाँ सीताजी को शुक्ल पक्ष के प्रतिपदा की चंद्रप्रभा की भाँति देखा।

## गीत संख्या-१९

**कविर्गायति-**

**दृष्टा सीताऽशोकवने वियोगविग्ना महाकपिना।।**
**प्रतिपच्चन्द्रलेखेव शोभाविहीना।**
**परिरक्षिता राक्षसीभिः सुदीना।।**
**दृष्टा सीताऽशोकविपिने विरहलग्ना महाकपिना।।१।।**
**राहुग्रस्तविधू रोहिणीव विकला।**
**कनकशलाकेव वह्निकृतशकला।।**
**दृष्टा सीताऽशोकदहने विगतोपघ्ना महाकपिना।।२।।**
**शूनीभिः समावृता मृगीव मृगीदृशी।**
**शालिनीव विना शुष्यन्तीव कृषी।।**
**दृष्टा सीताऽशोकगहने विपत्तिमग्ना महाकपिना।।३।।**
**उपवासकृषा वेपमाना दुर्बलाङ्गी।**
**खलनीचदृशा वीक्ष्यमाणा निर्बलाङ्गी।।**
**दृष्टा सीताऽशोकवहने विभवभग्ना महाकपिना।।४।।**
**विनाथेव नाथं मुहुर्मुहुर्विकाङ्क्षन्ती।**
**गिरिधरप्रभुं विश्वाविश्वं विवाञ्छन्ती।।**
**दृष्टा सीताऽशोकतरुधने नैर्ऋतनिघ्ना महाकपिना।।५।।**

**भौमी-** कवि स्वयं गाते हैं- अशोक वन में महाकपि हनुमानजी ने सीताजी को वियोग से उद्विग्न देखा। यहाँ भी प्रतिपदा की चंद्रलेखा की भाँति शोभा से विहीन, राक्षसियों से परिरक्षित, अत्यंत दीन, वियोग में लीन सीताजी को हनुमान जी ने देखा। राहु से ग्रस्त चंद्रमा वाली रोहिणी के समान विकल और अग्नि द्वारा जलाकर टुकड़े में विभक्त की गयी, स्वर्ण की सलाई की भाँति, सीताजी को हनुमानजी ने वन में आधाररहित लता की भाँति देखा। कुत्तियों से घिरी हुयी मृगी की भाँति एवं जल के बिना सूख रही धान की खेती की भाँति मृगनयनी

सीताजी को हनुमानजी ने अशोक वन में विपत्ति मग्न देखा। उपवास से दुर्बल काँपती हुयी, विह्वल अंगों वाली, नीच रावण की खल दृष्टि से देखी जा रही, निर्बल शरीरा सीताजी को हनुमानजी ने अशोक वन में विभव से रहित देखा। अनाथ की भाँति अपने नाथ श्रीराम की बार–बार इच्छा करती हुयी और धनहीन हुयी–सी अपने विशिष्ट धन **गिरिधर** कवि के स्वामी श्रीराम की अपेक्षा करती हुयी सीताजी को हनुमानजी ने अशोक वन में राक्षसों से पराधीन देखा।

## गीत संख्या–२०

**हनुमान् श्रियं वीक्ष्य प्रेयाय।।**
**अध्यशोकवनं वराङ्गीं पतिवियोगकृशां कृशाङ्गीम्।**
**मरणकृतनिश्चयां पश्यन् तां च शनैरियाय।।१।।**
**एकवेणीधरां दीनां एकपत्नीं पतिविहीनाम्।**
**एकलां प्ररुरोद दृष्ट्वा कपिर्धृतिं विहाय।।२।।**
**राक्षसीभिः रक्ष्यमाणां क्रूरदृग्भिः वीक्ष्यमाणाम्।**
**वीक्ष्य वक्षोऽतुदत्तुदतीं धैर्यमिव परिहाय।।३।।**
**राम राम सदा जपन्तीं हा हतास्मीत्थं लपन्तीम्।**
**मुहुर्धातारं शपन्तीं पटैर्मुखं पिधाय।।४।।**
**शोकसागरमध्यमग्नां करिवधूमिव पङ्कलग्नाम्।**
**पोतमिव समुपैत्य गिरिधरकपिर्जगौ सुखाय।।५।।**

**भौमी–** हनुमानजी सीताजी को देखकर उनके निकट गये। अशोक वन में श्रेष्ठ अंगों वाली और पति के वियोग से दुर्बल अंगों वाली सीताजी को मरने के लिये निश्चय की हुयी देखकर धीरे–धीरे उनके निकट गये। जूड़े को जटाजूट बनाकर एक चोटी बाँधी हुयी एकमात्र पत्नीव्रता, दीन श्रीसीताजी को अकेली देखकर धैर्य छोड़कर हनुमानजी फूट–फूटकर रोने लगे। राक्षसियों द्वारा सुरक्षित होती हुयी, क्रूर–दृष्टियों द्वारा देखी जाती हुयी, धैर्य छोड़कर, बार–बार छाती पीटती हुयी, राम–राम सदा इस प्रकार जप करती हुयी, 'अरे मैं मार डाली गयी' इस प्रकार विलाप करती हुयी कपड़े से मुख ढँककर विधाता को बार–बार कोसती हुयी सीताजी को देखकर हनुमानजी रोने लगे। कीचड़ में फँसी हुयी हथिनी की भाँति, शोक सागर के बीच डूबती हुयी सीताजी के पास जल–जहाज की भाँति पहुँचकर **गिरिधर** कवि के स्वामी हनुमानजी सीताजी के सुख के लिये इस प्रकार गा पड़े।

**विशेष–** यह गीत रूपक ताल में निबद्ध है।

## गीत संख्या–२१

**मातरहं रघुनायकदूतः।**
**हनुमान्नामो वायुसङ्कल्पात् तुभ्यं मात्रेऽञ्जनया सूतः।।१।।**

**ज्येष्ठो दशरथराजकुमारो रामो नामभुवनविख्यातः।**
**त्यक्त्वा भवनं पितृनिदेशतः सह सीतया विपिनमायातः।।२।।**
**सह लक्ष्मणो दण्डकेऽवात्तां सीतारामौ जनाभिरामौ।**
**शतशतरतीकन्दर्पदर्पहररूपौ हरहृल्ललितललामौ।।३।।**
**भौमीमहरन्नीचरावणो हेमहरिणमभिरामे याते।**
**रघुनाथोऽमित्रयन् मित्रजं साक्षिणि मयि किल मारुतताते।।४।।**
**त्वां मृगयन्नहमेक आगतः तत्प्रेषितः पयोनिधिपारे।**
**अत्राद्राक्षं त्वां सुयोगतः सीदन्तीं ननु विरहेऽपारे।।५।।**
**शोकं विसृज गृहाण मुद्रिकां मयि विश्वसिहि जननि मम सीते।**
**अचिराद्रक्षसि निहतरावणं श्रीरघुवीरं गिरिधरगीते।।६।।**

**भौमी-** हे माँ! मैं रघुनायक श्रीराम का दूत हूँ। मेरा नाम हनुमान है। आपके लिये ही वायु के संकल्प से माता अंजना ने मुझे जन्म दिया है। महाराज दशरथ के ज्येष्ठ राजकुमार जो कि रामनाम से भुवन में प्रसिद्ध हैं, पिताश्री की आज्ञा से राज्य छोड़कर वन में आये। वे लोकों को आनन्द देने वाले, अपने सौंदर्य से करोड़ों रति-कामदेवों का अहंकार दूर करने वाले, शिवजी के हृदय के सुन्दररत्नरूप श्रीसीतारामजी लक्ष्मणजी के साथ दण्डक वन में निवास किये। स्वर्ण मृग के पीछे-पीछे श्रीराम के चले जाने पर नीच रावण ने सीताजी का हरण कर लिया और वायुपुत्र मुझ हनुमान को साक्षी बनाकर रघुनाथजी ने सूर्यपुत्र सुग्रीव को अपना मित्र बनाया। श्रीरघुनाथजी के द्वारा भेजा गया मैं आपको ढूँढते-ढूँढते अकेले समुद्रपार आ गया और यहाँ संयोग से अपार विरह में डूबती हुई मैंने आपको देखा। हे **गिरिधर** कवि द्वारा गायी हुई माता सीता! शोक छोड़िये, मुद्रिका लीजिये और मुझ पर विश्वास कीजिये। आप रावण का वध किये हुये समर विजयी श्रीराम को शीघ्र ही देखेंगी।

## गीत संख्या-२२

**रघुवरचरं मां प्रत्येहि।**
**सत्यमेवाभिदध ईश्वरि निर्भयं समवेहि।।१।।**
**प्रत्ययं च निरत्ययं सुनिरर्गलं निरवेहि।**
**निम्ननैर्ऋतनिरयनीचं निर्हतं च निरेहि।।२।।**
**सत्यमहं प्रतिश्रृणोमि न मत् कदापि परेहि।**
**साम्प्रतं विश्वसिहि भद्रे नैव मद् विपरेहि।।३।।**
**रामबाणहुताशशलभं रावणं त्वमवेहि।**
**राघवाभ्यां युता गिरिधरहृदयकमलमुपेहि।।४।।**

**भौमी-** हनुमानजी फिर कहने लगे-हे माँ! आप मुझे श्रीराम का दूत जानिये और विश्वास कीजिये। मैं सत्य बोल रहा हूँ। आप निर्भय होकर मुझ पर विश्वास कीजिये। हे माँ! विघ्नरहित यह विश्वास किसी प्रकार के

बन्धनों से युक्त नहीं है अर्थात् सब प्रकार से निरर्गल है और निम्नगामी राक्षसरूप नीच नरक को अब पूर्णरूपेण समाप्त ही समझिये। मैं सत्य ही बोल रहा हूँ और सत्य की प्रतिज्ञा भी कर रहा हूँ। हे कल्याणी! मुझसे दूर मत जाइये। इस समय आप मुझ पर विश्वास कीजिये। मुझसे विपरीत कुछ मत सोचिये। आप रावण को श्रीराम के बाणाग्नि का पतंगा ही समझिये और श्रीरामलक्ष्मण से युक्त होकर **गिरिधर** कवि के हृदयकमल में विराजमान होइये।

## गीत संख्या–२३

सीता पृच्छति–

**कस्त्वं रामकथामिह गायसि।**
**कर्णकलं कान्तं कमनीयं कस्त्वं करुणं कायसि।।१।।**
**कस्त्वं नन्दनचन्दनचर्चितचन्दनवपुषं चायसि।**
**परमहंसमुनिहृदये निहितमथ सुजनहितं निश्चायसि।।२।।**
**स्मारं स्मारं स्मरहरहृद्यं नैव मनागाग्लायसि।**
**पारेसिन्धु निशाचरपुर्यां न त्वं मनसा म्लायसि।।३।।**
**निरुपधि संवर्णयन् प्रियतमं श्रमं च नैवाधायसि।**
**गिरिधरप्रभुं स्वधिया ध्यापयन् मुहुरथ ध्येयं ध्यायसि।।४।।**

**भौमी–** अब सीताजी प्रश्न करती हैं– अरे भाई! तुम कौन हो, जो श्रीराम कथा गा रहे हो? तुम कौन हो जो कानों को मधुर लगने वाली अत्यंत कमनीय करुणगाथा का विस्तार कर रहे हो? नन्दनवन के चन्दन से लेपित शीतल शरीर वाले प्रभु को तुम कौन विस्तार से गा रहे हो और परमहंस और मुनियों के हृदय में विराजमान सुजनों के हितैषी परमात्मा को इतने निश्चय से गा रहे हो? शिवजी के भी हृदयहारी प्रभु राघव का स्मरण करके तुम थक नहीं रहे हो और समुद्र के पार इस राक्षसपुरी में आकर भी तुम मन से भी भयभीत नहीं हो रहे हो। निष्कपट रूप से परमात्मा को अपने हृदय में समेटकर भी तुम श्रम नहीं धारण कर रहे हो। **गिरिधर** कवि के प्रभु श्रीराम को अपनी बुद्धि के द्वारा ध्यान का विषय बनाकर भी अपने ध्येय का तुम बार–बार ध्यान कर रहे हो।

## गीत संख्या–२४

हनूमान्नुत्तरयति–

**मयि रामदूते किं भवत्या न प्रतीयते।**
**वाताञ्जनाप्रसूते भवत्या न प्रतीयते।।**
**कतिभिश्क्षणैर्गोष्पदितसमुद्रे अर्पितरामनाममयमुद्रे।**
**गौतमसुतासूते भवत्या न प्रतीयते।।१।।**
**निजमतिबलपरितोषितसुरसे वीर्यविहतसिंहिकाछले विरसे।**
**प्रभुभक्त्याऽभिभूते भवत्या न प्रतीयते।।२।।**

मुष्ठिकाप्रहारविह्वलीकृतलङ्के प्रविष्टे दशाननगरमशङ्के।
बालब्रह्मचर्यपूते भवत्या न प्रतीयते।।३।।
विहितत्वदीयप्रतिप्रश्नसमाधाने विखण्डितानेकतर्कतरुणविताने।
गिरिधरेशि पुत्रीभूते भवत्या न प्रतीयते।।४।।

**भौमी–** अब हनुमानजी उत्तर दे रहे हैं–मुझ रामदूत पर आप विश्वास क्यों नहीं कर रही हैं? वायु और अंजना से उत्पन्न मुझ हनुमान पर आप क्यों विश्वास नहीं कर रही हैं? अपने बुद्धि-बल से सुरसा को संतुष्ट करने वाले, सिंहिका का वध करके उसके छल को नीरस बनाने वाले और भगवान की भक्ति से अभिभूत मुझ हनुमान पर आप विश्वास क्यों नहीं कर रही हैं। मुष्ठिका के प्रहार से लंकिनी को विह्वल करने वाले और शंकारहित मन से रावण के नगर में प्रवेश करने वाले और बालब्रह्मचर्य से पवित्र मुझ हनुमान पर आप विश्वास क्यों नहीं कर रही हैं। आपके प्रश्नों का समाधान करने वाले और आपके अनेक नये-नये तर्कों के जाल का खण्डन करने वाले **गिरिधर** कवि के ईश्वर श्रीराम के पुत्रकल्प मुझ हनुमान पर आप क्यों विश्वास नहीं कर रही हैं।

## गीत संख्या-२५

अहं नूनं देवि रामचन्द्रदासो वैदेहि मयि विश्वस्यताम्।।
मुखधृतरामनामाङ्कितसुमुद्रिकः कुतुकलङ्घितसर्वसङ्कटसमुद्रिकः।
अहं नूनं देवि कोसलेन्द्रदासो वैदेहि मयि विश्वस्यताम्।।१।।
मैनाकदत्तप्रलोभनमुपेक्षमाणो रामकार्यं प्राथमिकतयाऽप्यपेक्षमाणः।
अहं नूनं देवि राघवेन्द्रदासो वैदेहि मयि विश्वस्यताम्।।२।।
समाधाय सुरसां सिंहिकागृहीतछायः क्षणादेव विनिर्धूतराहुमातृमायः।
अहं नूनं देवि पार्थिवेन्द्रदासो वैदेहि मयि विश्वस्यताम्।।३।।
एकसमाप्लुत्यैव विलङ्घितसमुद्रः स्वमनोमहितगिरिधरगीश्चकोरीचन्द्रः।
अहं नूनं देवि रामभद्रदासः वैदेहि मयि विश्वस्यताम्।।४।।

**भौमी–** हे देवी वैदेही! मैं निश्चित श्रीरामचंद्र का दास हूँ। आप मुझ पर विश्वास कीजिये। मुख में श्रीराम नामांकित मुद्रिका लेकर मैं खेल-खेल में सम्पूर्ण संकटों से भरा हुआ समुद्र लाँघ गया। मैं कोसलेन्द्र भगवान का दास हूँ। आप मुझ पर विश्वास कीजिये। मैनाक के दिये हुये प्रलोभन की उपेक्षा करता हुआ, प्राथमिकता से श्रीराम कार्य की अपेक्षा करता हुआ, मैं प्रभु राघवेन्द्र का दास हूँ। आप मुझ पर विश्वास कीजिये। सुरसा का समाधान करके, सिंहिका के द्वारा छाया पकड़े जाने पर, एक क्षण में राहु की माता की माया को नष्ट करने वाला मैं राजाओं के राजा श्रीराम का दास हूँ। आप मुझ पर विश्वास कीजिये। एक ही छलांग में सागर को लाँघने वाला और अपने मन में **गिरिधर** कवि के वाणी रूप चकोरी के चन्द्रमा श्रीराम की पूजा करने वाला मैं रामभद्र भगवान का दास हूँ। आप मुझ पर विश्वास कीजिये।

**विशेष–** यह गीत 'कहरवा' लोकधुन में निबद्ध है।

## गीत संख्या-२६

सीता हनुमन्तं प्रति-

केसरिनन्दन सहस्त्रयुगं जीव्या।
मारुतनन्दन सहस्त्रयुगं जीव्याः।।
वज्रसंहननोऽजरोऽमरो भव प्रवीरः।
वीर्यवेगविनिन्दितप्रलयमयसमीरः।।
मेदिनीमण्डन सहस्त्रयुगं जीव्याः।
केसरिनन्दन सहस्त्रयुगं जीव्याः।।१।।
भवशीलतो विजितशतशतनिशेषः।
प्रवलप्रतापतप्तकोटिशितदिनेशः ।।
भवभारखण्डन सहस्त्रयुगं जीव्याः।
केसरिनन्दन सहस्त्रयुगं जीव्याः।।२।।
क्वापि त्वां न बाधेतां बुभुक्षापिपासे।
कपिगुरुं न गाधेतां व्यथाकथाजिहासे।।
जनमनोरञ्जन सहस्त्रयुगं जीव्याः।
केसरिनन्दन सहस्त्रयुगं जीव्याः।।३।।
गिरिधरसारङ्गनवीननववनधर ।
मनोमन्दिराधिराजमान मैथिलीवर।।
जगदगचन्दन सहस्त्रयुगं जीव्याः।
केसरिनन्दन सहस्त्रयुगं जीव्याः।।४।।

**भौमी-** अब सीताजी हनुमानजी से कहती हैं-हे केसरीनन्दन! तुम हजारों युगों तक जीते रहो। हे वायु के पुत्र! तुम हजारों युगों तक जीते रहो। वज्र के समान शरीर वाले, अजर, अमर, श्रेष्ठवीर, अपने वेग से प्रलयंकारी वायु की निन्दा करने वाले, हे पृथ्वी के आभूषण हनुमान! तुम हजारों युगों तक जीते रहो। तुम अपने शील से करोड़ों चंद्रमा को जीतो और अपने प्रताप से करोड़ों सूर्यों पर विजय पाओ। हे भवभारहारी! तुम करोड़ों-युगों तक जीते रहो। तुम्हें भूख-प्यास कभी न सतायें और वानरों के प्रमुख तुम हनुमान को व्यथा और श्रीरामकथा के त्याग इच्छा कभी न बिलोभित करे। हे भक्तों के मनोरंजन हनुमान! तुम सहस्त्र युगों तक जीओ। हे **गिरिधर** कवि रूप चातक के नवीन मेघ और अपने मन-मंदिर में सीतापति श्रीराम को विराजमान कराने वाले, हे जड़-चेतनों को प्रसन्न करने वाले हनुमान! तुम सहस्त्र युगों तक जीयो।

## गीत संख्या-२७

त्वयि भवतात् कृपालुः सीतानाथः।
सहस्त्रकल्पं जीव्याः बलवन्।।
अजरस्त्वममरो भवेच्छामृत्युरज्वरः।
कोटिकोटितपनप्रतापो जितनिर्जरः।।
त्वयि भवतात् कृपालुर्दीनानाथः।
सहस्त्रकल्पं जीव्याः बुद्धिमन्।।१।।
वर्धतां प्रतापस्तव मध्याह्नभानुवत्।
समेधतां तेजस्तव ग्रैष्मककृशानुवत्।।
त्वयि भवतात् दयालुर्लोकनाथः।
सहस्त्रकल्पं जीव्याः शीलवन्।।२।।
सोमकोटिसमशीलं शीलयतु भवन्तम्।
कोटिलोमशायुरपि यात्वायुष्मन्तम्।।
त्वयि भवतात् कृपालू रमानाथः।
सहस्त्रकल्पं जीव्या भक्तिमन्।।३।।
भागीरथीधारा यथा त्वयि भक्तिर्वर्धताम्।
राघवानुरक्तिर्वार्धिवीचिवत् समर्धताम्।।
त्वयि भवताद् दयालुर्जगन्नाथः।
सहस्त्रकल्पं जीव्या द्युतिमन्।।४।।
लङ्घित्वा समुद्रं त्वं समुद्रं इहायातः।
नैव प्राकृतोऽसि कपिर्गिरिधरपारिजातः।।
त्वयि भवताद् दयालू रघुनाथः।
सहस्त्रकल्पं जीव्याः हनूमन्।।५।।

**भौमी–** हे बलवान! तुम पर मुझ सीता के नाथ श्रीराघव कृपालु हों। तुम हजारों वर्षों तक जीवित रहो। तुम अजर हो, अमर हो, तुम्हारी इच्छामृत्यु हो, तुम ज्वरहीन हो, करोड़ों सूर्यों के समान प्रतापवान और देवताओं के विजेता बनो, तुम पर दीना शबरी के नाथ श्रीराघव कृपालु हों। हे बुद्धिमान! तुम सहस्त्रों कल्पों तक जीओ। तुम्हारा प्रताप मध्याह्न सूर्य की भाँति बढ़े और तुम्हारा तेज ग्रीष्म सूर्य की भाँति समृद्ध हो, तुम पर लोकनाथ श्रीराम दयालु हों। हे शीलवान! तुम सहस्त्र कल्पपर्यंत जीओ। करोड़ों चंद्रमा का शील तुम्हें

सनाथित करें और करोड़ों लोमशों का आयु तुम्हें मिल जाये, तुम पर मुझ रमा के नाथ श्रीरघुवीर दयालु हों और तुम भक्तिमान होकर सहस्रों कल्पों तक जीओ। हे प्रकाशमान! गंगाजी की धारा के समान भक्ति का प्रवाह तुममें बढ़ता रहे और तुममें समुद्र की लहरों की भाँति श्रीराघव का प्रेम लहराता रहे। तुम पर जगत के नाथ श्रीराघव दयालु हों। तुम सहस्रों कल्पों तक जीयो। मुद्रिका लेकर समुद्र को लाँघकर तुम यहाँ आये। तुम साधारण वानर नहीं हो। तुम तो **गिरिधर** कवि के लिये कल्पवृक्ष हो। तुम पर रघुनाथजी दयालु हों। हे हनुमान! तुम सहस्रों कल्पों पर्यंत जीते रहो।

**विशेष-** यह गीत 'सुगम-संगीत' के स्वर में निबद्ध है।

## गीत संख्या-२८

**अन्यच्च-**

**हनूमन्वानराकारं नहि त्वां प्राकृतं मन्ये।**
**महात्मन्मर्कटाकारं नहि त्वां प्राकृतं मन्ये।।**
**मुखे प्रभुमुद्रिकां रक्षन्खलेभ्यः साध्वसं यच्छन्।**
**पयोधेरागतः पारं नहि त्वां प्राकृतं मन्ये।।१।।**
**विहतमैनाकसत्कारं सुमितसुरसामुखाकारम्।**
**दमितहरिकावपुःसारं नहि त्वां प्राकृतं मन्ये।।२।।**
**मथित्वा लङ्किनीं लङ्कां समायाः मां सदाशङ्काम्।**
**क्षपितमद् विरहकूपारं नहि त्वां प्राकृतं मन्ये।।३।।**
**न तेऽभूद् रावणात्त्रासो व्यवर्धद्दहरिमुखोल्लासः।**
**कपिं गिरिधरगिराधारं नहि त्वां प्राकृतं मन्ये।।४।।**

**भौमी-** सीताजी और भी कहती हैं- हे हनुमान! वानर का आकार होने पर भी मैं तुम्हें सामान्य वानर नहीं मानती। हे महात्मन् ! चंचल वानर के आकार में होने पर भी मैं तुम्हें प्राकृत नहीं मानती। अरे! अपने मुख में लेकर प्रभु की मुद्रिका की रक्षा करते हुये, दुष्टों को भय देते हुये, तुम सागर के पार आये। मैं तुम्हें प्राकृत नहीं मानती। मैनाक के सत्कार को ठुकराने वाले, सुरसा के मुख की सीमा को सीमित करने वाले एवं सिंहिका का शरीर फाड़ देने वाले हनुमान, तुमको मैं प्राकृत नहीं मानती। अरे! लंकिनी को मारकर आशंकाओं से घिरी हुयी मुझे देखने के लिये तुम लंका आये। मेरे विरह सागर को सोखने वाले तुम हनुमान को मैं प्राकृत नहीं मानती। तुम्हें रावण से डर भी नहीं लगा! उल्टे तुम्हारे कृत्य से प्रभु श्रीराम का मुखोल्लास ही बढ़ा। अतः **गिरिधर** कवि की वाणी के आधाररूप, तुम हनुमान को मैं प्राकृत वानर नहीं मानती।

## गीत संख्या-२९

**त्वं महादेवः कैलाशवासी शिवः।**
**काशसे कीसरूपो मदर्थं कपे।।**

त्वं वृषासीनः काशीनिवासी भवः।
भाषसे मर्कभूपो मदर्थं कपे।।
रामनामाङ्कामित्वा प्रभोर्मुद्रिकाम्।
वेलामाया ह्यवाचीञ्च सामुद्रिकाम्।।
कृत्वा मूर्धनि पदं वैरिणां स्वापदम्।
सच्चतुष्पत्स्वरूपः कपे मत्कृते।।१।।
मञ्जुमैनाकमाननञ्चनाजीगणः ।
सुरसावक्त्रं समानञ्चनाविव्रणः।।
कृत्वा लङ्कां सशङ्कां समायाश्च माम्।
खातयज्ञेड्ययूपः कपे मत्कृते।।२।।
नात्यभैषीर्मनाग् रावाणाद् धीधनः।
नाप्यभैत्षीःस्वधैर्यं ह्यनल्पं जनः।।
मद्विरहवारिधौ पोतभूतो भटः।
भग्नसंसारकूपः कपे! मत्कृते।।३।।
त्वं सदा शङ्करो रामसेवापरः।
दृश्यसे प्राकृतैः प्राकृतो वानरः।
गिरिधरानन्ददायी हनूमान् हरिः।
क्लृप्तकौणपविरूपः कपे मत्कृते।।४।।

**भौमी-** हे हनुमानजी! आप कैलासवासी महादेव शिव हैं। आपने मेरे लिये वानर का रूप धारणकर लिया है। आप नंदी पर सवार काशी निवासी कल्याणमय भव हैं। केवल मेरे लिये वानरश्रेष्ठ बन गये हैं। प्रभु श्रीराम से राम-नामांकित मुद्रिका प्राप्त कर, पशु-विग्रह धारण कर, शत्रुओं के सिर पर चरण रखकर आप समुद्र के दक्षिण तट पर आ गये। वस्तुतः आप मेरे लिये ही चौपाये के स्वरूप में दिख रहे हैं। आपने मैनाक का सम्मान ठुकराया और सुरसा के मुख को भी व्रणित न करके उसमें प्रवेश किया। लंका को सशंक करके मेरे पास आये और मेरे लिये ही लंका में युद्धयज्ञ का खंभा गाड़ दिया। बुद्धि को धन मानने वाले आप, रावण से थोड़ा भी नहीं डरे और आप श्रीराम के भक्त हनुमान अपना धैर्य भी नहीं छोड़े। मेरे विरह महासागर के आप जहाज बने और मेरे लिये ही आपने संसार-कूप को ही समाप्त कर दिया। आप सदाशिव श्रीराम की सेवा में तत्पर होकर भी सामान्य लोगों के द्वारा सामान्य वानर के जैसे दिखते हैं। **गिरिधर** कवि को आनन्द देने वाले, वानराकार, श्रीरामनामामृत पीने वाले, आपश्री हनुमान ने मेरे लिये ही राक्षसों को विकृत रूप करने का संकल्प लिया।

## गीत संख्या-३०

देव्यो गायन्ति-

**लङ्कामधाक्षीत् सशङ्कां हे अञ्जनायाः कुमारः।।**
**सीतां प्रणम्य मृष्टफलं भक्षयित्वा।**
**यातुधानयूथं यमलोके रक्षयित्वा।।**
**लङ्कामकार्षीद्रक्तपङ्कां हे वायुपुत्रोऽत्युदारः।।१।।**
**विधवामिवाशोकवाटीं हासयित्वा।**
**आरामस्य रम्यरम्यतरून्नाशयित्वा।।**
**लङ्कामभाङ्क्षीत् करुणाङ्कां हे सत्पराक्रमकूपारः।।२।।**
**अक्षं सूदयित्वा निशाचरान् धर्षयित्वा।**
**दशमौलये च बाहुबलं दर्शयित्वा।।**
**लङ्कामभाक्षीद् भर्जिताङ्कां हे महारुद्रावतारः।।३।।**
**यातुधाननारी रुरस्ताडं रोदयित्वा।**
**विविधवधूवन्दीर्वन्दमाना मोदयित्वा।।**
**लङ्कामहार्षीदतिरङ्कां हे गिरिधरगिरः श्रृङ्गारः।।४।।**

**भौमी-** अब देव-बधुएँ गा रही हैं-अहो! अन्जनापुत्र हनुमानजी ने भयभीत लंका को जला दिया। सीताजी को प्रणाम करके अशोकवाटिका के मधुरफल खाकर राक्षसयूथपतियों के लिये यमलोक में आरक्षण कराकर अत्यन्त उदार वायुपुत्र हनुमानजी ने लंका को रक्त के कीचड़ से युक्त कर दिया। भगवद्भजनहीन विधवा की भाँति अशोकवाटिका की परिहास विडंबना करके और वन के सुन्दर-सुन्दर वृक्षों को नष्ट करके, श्रेष्ठ पराक्रम के महासागर हनुमान ने करुण चिन्हों वाली लंका को तहस-नहस कर दिया। अक्ष का वध करके, राक्षसों को रौंदकर, रावण को बाहुबल के दर्शन कराकर महारुद्रावतार हनुमानजी ने नगर की सभी सामग्रियों को भूनकर लंकापुरी को भी जला-जलाकर भून डाला। छाती पिट-पिटाकर, राक्षसपत्नियों को रुलाकर और रावण के बंदीगृह में पड़ी हुई प्रभु को प्रणाम करने वाली देववधुओं को प्रसन्न करके **गिरिधर** कवि की वाणी के श्रृंगार हनुमानजी ने लंका को अत्यन्त दरिद्रा बना दिया।

## गीत संख्या-३१

कविर्गायति-

**क्रीडति बलबीरो हनुमान् लङ्कापुरे होलीं दुरन्ताम्।।**
**तैलघृताक्तपटैस्तृणतूलैर्बध्वा वरलाङ्गूले।**

दशमुखाज्ञया कुणपघस्मरैर्वह्निप्रदीपितमूले।।
स्फुलिङ्गमालाज्वलितदिगन्तां क्रीडति रणधीरो हनुमान्।
लङ्कापुरे होलीं दुरन्ताम्।।१।।
चटचटपटपटशरशरमरमरचण्डध्वनिध्वनितत्रिलोकः।
प्रलयदहन इव दलितदशास्यदववलितक्षपाटदारशोकः।।
करालज्वालाकृतशर्वशान्तां क्रीडति सुसमीरो हनुमान्।
लङ्कापुरे होलीं दुरन्ताम्।।२।।
देहि जलं देहि देहि परेहि परेहि रक्ष रक्ष वस्तु पाहि जीवधानीम्।
एवं विधं विलपद् बालवृद्धनरनारीरवां रावयन् रावणराजधानीम्।।
भसितचकितितचन्द्रकान्तां क्रीडति मतिधीरो हनुमान्।
लङ्कापुरे होलीं दुरन्ताम्।।३।।
रोषघृतयातुधानयवतिलधानहव्य लूमस्त्रुक्प्रहुतधूमकेतुः।
स्वाहामहागर्जनत्रासितनिशाचरमहो गिरिधरमनोमोदहेतु-
र्बलाब्धिक्लिन्नवीरतासीमन्तां क्रीडति महावीरो हनुमान्।
लङ्कापुरे होलीं दुरन्ताम्।।४।।

**भौमी-** अब महाकवि स्वयं गा रहे हैं-आज बलशाली वीर हनुमान लंकापुरी में कभी न नष्ट होने वाली होली खेल रहे हैं। दसमुखों वाले रावण की आज्ञा से दुष्ट राक्षसों द्वारा तेल और घी से भिगे हुये गीले हुए वस्त्रों-सूखी घासों तथा रुई से लांगूर को बाँधकर पुनः हनुमानजी की पूँछ की जड़ में पूजा के बहाने जलाये हुये दीपक से आग लगा दिये जाने पर रणधीर हनुमान अग्नि की लपट से दिगंतों को प्रकाशित करने वाली होली खेल रहे हैं। चट-चट-पट-पट-शर-शर-मर-मर जैसे अग्नि जलने की स्वाभाविक भयंकर ध्वनि से तीनों लोकों को ध्वनित करते हुये, प्रलयकालीन अग्नि के समान रावण के वन को नष्ट करके, राक्षस-पत्नियों के शोक को बल देने वाले, सुन्दर वायु से प्रेरित हनुमानजी कराल ज्वाला से शिवजी को भी शान्त कर देने वाली भयंकर होली लंका में खेल रहे हैं। जल दो-जल दो-जल दो, भागो-भागो, वस्तु की रक्षा करो, शरीर की रक्षा करो। इस प्रकार विलाप करते हुये बाल-वृद्ध नर नारियों के चीत्कार से व्याप्त रावण की राजधानी लंका को रुलाते हुये मतिधीर हनुमानजी लंका में जले हुये भवनों की राख से चंद्रकान्त अर्थात् चन्द्रमा से सुशोभित शिवजी को चकित करने वाली, कभी न समाप्त होने वाली होली खेल रहे हैं। क्रोध रूप घी और राक्षस रूप जौ-तिल-धान मिश्रित हव्य से पूँछ को स्रुवा बनाकर हवन करके धूमध्वज अग्नि को प्रसन्न करने वाले, स्वाहारूप श्रीरामनाम के महागर्जन से राक्षस-भटों को भयभीत करके **गिरिधर** कवि की मानसिक प्रसन्नता के मूल कारण महावीर हनुमानजी अपने बाहुबल के महासागर में

वीरतारूपिणी नायिका के सिर के जूड़े को स्नान कराकर लंकापुर में कभी भी विश्राम न लेने वाली होली खेल रहे हैं।

**विशेष-** यह गीत दीपचन्दी ताल मध्यलय और राग-काफी में निबद्ध है।

## गीत संख्या-३२

**लङ्कादाहनहोलीं प्रक्रीड्य नक्तंचरयूथभटान् प्रपीड्य।।**
**दशमुखं रामवीर्यं प्रगाय भस्मसाद्राजधानीं विधाय।**
**उपदिश्य रामबलवीर्यधाम प्रविभज्य शक्रजित् बद्धदाम।।१।।**
**क्रीडित्वा सुभटैः समरधाम्नि आजन्मप्रतीतो रामनाम्नि।**
**वाटीं विभज्य कुणपान् विमथ्य रणरङ्गचुञ्चुमक्षं प्रमथ्य।।२।।**
**घननादप्रयुक्तं मुदाश्रित्य ब्रह्मास्त्रममोघं समादृत्य।**
**नीतोऽथ सभां कुणपान् प्रदृश्य रावणं रामनामोपदिश्य।।३।।**
**होलिमिव लङ्कां सम्प्रदाह्य राक्षसीशुग्जलैः समुपवाह्य।**
**विहिताप्लवपुः सीतां प्रणम्य सिन्धुं तीर्त्वा प्रभुमुपागम्य।।४।।**
**चूडामणिमसुरभिदे समर्प्य भौमीकुशलं राघवायार्प्य।**
**गिरिधरकपिरूचे राम राम जय राम गीतसीताभिराम।।५।।**

**भौमी-** अब कवि हनुमानजी के भावी वृत्तान्त को गीतबद्ध कर रहे हैं। लंकादहन-रूप होली खेलकर राक्षस यूथ-भटों को पीड़ित करके, रावण के समक्ष श्रीराम का पराक्रम गाकर, राजधानी को भस्मीभूत करके श्रीराम के बल-पराक्रम और तेज का उपदेश देकर इन्द्रजित द्वारा बाँधे गये नागपाश को तोड़कर, जीवनपर्यन्त राम-नाम में निष्ठ हनुमानजी समरांगण में राक्षसों के साथ खेलकर, अशोकवाटिका को तहस-नहस करके, युद्ध में कुशल अक्ष को मसलकर, प्राण-विहीन करके, मेघनाद द्वारा छोड़े हुये ब्रह्मास्त्र को आदरपूर्वक प्रसन्नता से स्वीकार कर, सभा में आकर सभासद राक्षसों को देखकर, रावण को रामनाम का उपदेश करके, होली की भाँति, लंकापुरी को पूर्णरूप से जलाकर राक्षसियों को शोकाश्रुओं से पूर्णरूपेण नहलाकर, पुनः छोटे वानर के रूप में आकर, सीताजी को प्रणाम करके, समुद्र को पार करके, प्रभु श्रीराम के पास आकर, असुर नाशक प्रभु को चूड़ामणि समर्पित करके, सीताजी का समाचार श्रीराघव को अर्पित करके, **गिरिधर** कवि के आराध्य 'गिरि' अर्थात् पर्वतधारी हनुमानजी ने अपनी सफलता सूचित करते हुए गरज कर कहा-

**जय राम जय राम जय राम राम जय गीतसीताभिराम।**

**विशेष-** यह गीत त्रिताल द्रुतलय एवं मालकौंश राग में निबद्ध है।

## गीत संख्या-३३

श्रीरामो हनुमन्तं प्रति-

अहो दिष्ट्या समायातं लभे क्षेमे हनूमन्तम्,
सुचूडामणिमवनिजाया लभे प्रेमाश्रयं सन्तम्।।
अपारे विरहकूपारे निमज्जनमग्नसंसारे।
महापोतं यथायान्तं लभे प्राभञ्जनीं भान्तम्।।१।।
न बाल्ये नो विवाहेऽहं तथामोदान्वितो जातो
यथेदानीं विगततोदः प्रमोदे वीक्ष्य धीमन्तम्।।२।।
किमेनं भोजये भोज्यं कमाशीर्वादमायुञ्जे।
प्रयुञ्जे केन सद्वचसा कया प्रीत्या च श्रीमन्तम्।।३।।
ऋणी सीताभिरामो गिरिधरेशश्चाभवं अहो वातेः।
हनूमन्तं मुदादोर्भ्यां हृदाश्लिष्यामि ह्रीमन्तम्।।४।।

**भौमी-** अब श्रीराम हनुमानजी के प्रति कहते हैं-अहो! सौभाग्य से लंका से सकुशल लौटे हुये अपने हनुमानजी को मैं प्राप्त कर रहा हूँ और जनकनन्दिनीजी द्वारा भेजे हुये दाम्पत्य प्रेम के आश्रय श्रेष्ठ चूड़ामणि को भी मैं प्राप्त कर रहा हूँ। वस्तुतः सात्विक आत्मबल को भी नष्ट करने वाले, अपार विरह सागर में डूबता हुआ मैं राम महाजलयान के समान आते हुये प्रकाशमान हनुमान को प्राप्त कर रहा हूँ। मैं बाल्यावस्था में और विवाह में भी उतना प्रसन्न नहीं हुआ जिस प्रकार बुद्धिमान् हनुमान् को देखकर इस समय पीड़ा से रहित और प्रसन्न हो रहा हूँ। अहो! आज श्रीमान् हनुमान् को मैं कौन-सा भोज्य पदार्थ खिलाऊँ? कौन-सा आशीर्वाद दूँ? किस श्रेष्ठ वाणी से और किस प्रीति से संयुक्त करके हनुमान का सम्मान करूँ? आज सीताजी को आनंदित करने वाला **गिरिधर** कवि का ईश्वर मैं राम वायुपुत्र हनुमान का ऋणी हो गया हूँ। इसलिये विनम्रता के कारण लज्जित हनुमान को प्रसन्नतापूर्वक अपनी बाहों में भरकर मैं हृदय से लगा रहा हूँ।

## गीत संख्या-३४

हनुमन् सीतावार्तं श्रावय

हे वार्ताहृतिचण सुविचक्षण पवनतनय बलवीर्यविलक्षण।
सीताकुशलकलाधरकिरणैर्विरहविषं मे मनसो द्रावय।।१।।
चूडामणिमिह दर्शं दर्शं जीवातुमिव स्पर्शं स्पर्शम्।
समास्वसिमि विश्वसिमि महात्मन् पुनरपि भौमी वच आश्रावय।।२।।
हे मम चरवर हे वनवनचर हे विरहानल जलधाराधर।
मैथिलिशुभसंदेशलवित्रैर्विरहाटवीं मदीयां लावय।।३।।

**न कुरु विलम्बं गिरमविलम्बं सैरध्वजीमयीं स्वालम्बम्।**
**व्याहर हे हर गिरिधरगीतैः श्रुतिगीतां सीतामनुभावय।।४।।**

**भौमी–** पुनः श्रीराम कहते हैं– हे हनुमान! सीताजी का संदेश सुनाओ। संदेश लाने में कुशल, अत्यन्त निपुण, बल पराक्रम में विलक्षण, हे पवननन्दन! सीताजी के कुशल स्वरूप चन्द्रमा की किरणों से मेरे मन के विरह–विष को समाप्त कर दो। हे महात्मन! इस चूड़ामणि को देख–देखकर इसे संजीवनी बूटी की भाँति छू–छूकर मैं आश्वस्त हो रहा हूँ और विश्वस्त भी हो रहा हूँ। फिर भी मुझे पृथ्वीनन्दिनी सीताजी की वार्ता सुनाओ। हे अद्वितीय वनचर अर्थात् सबके रक्षक वानर श्रेष्ठ! हे मेरे श्रेष्ठ दूत! और हे विरहाग्नि को बुझाने के लिये जलवर्षी मेघस्वरूप हनुमान! सीताजी के संदेश वचन रूप कुल्हाड़ों से मेरे विरह वन को काट डालो। हे शिव! रुद्रावतार हनुमान! अब विलम्ब मत कीजिये। मुझे अवलम्बन देने वाली सैरध्वजी सीताजी से सम्बन्धित वाणी का श्रवण कराइये और **गिरिधर** कवि के रचित गीतों से वेदों में गाई हुई सीताजी का अनुभव कराइये।

**विशेष–** यह गीत त्रिताल बद्ध है और इसे केदारा, बिलावल और भूपाली राग में गाना बहुत ही समीचीन होगा।

## गीत संख्या–३५

**हनुमान् श्रीरामं प्रति–**

**राम हरे रामाराम हरे सीदति सीता पुरेऽसुरे।।**
**रावणनीता विरहपरीता लङ्कां सीता शशीव भीता।**
**मृगी शुनीभिर्यथा प्रणीता विपदं रोदिति तारस्वरे।।१।।**
**विपिनेऽशोकेऽप्यहः सशोका विस्मृतशयनासनसुखलोका।**
**हा हा राम रटन्ती लीना कुररीवास्ते महाज्वरे।।२।।**
**शिरसि जटाविधृतैकलवेणी मुखरितरामचरितसुश्रेणी।**
**सुश्रोणीमरणश्रेणीमिव प्राप्यजिगमिषति भवात् परे।।३।।**
**दिशि दिशि पश्यति पतिं भवन्तं ध्यायति कनकहरिणमनुयान्तम्।**
**गिरिधरप्रभुं विलप्य विषण्णा लुठति महीतलपांशुभरे।।४।।**

**भौमी–** अब हनुमानजी श्रीरामजी के प्रति कहते हैं–हे श्रीराम! हे हरे! हे रामा अर्थात् सीताजी को भी रमण कराने वाले प्रभु! इस समय असुरपुर में बन्दी बनी हुई सीताजी बहुत कष्ट पा रही हैं। हे प्रभु! रावण के द्वारा अपहरण की गई सीताजी लंका में उसी प्रकार भयभीत रह रही हैं जैसे राहु द्वारा चंद्रमा से अलग की हुई रोहिणी, कुत्तियों द्वारा विपत्ति की ओर ढकेली हुई, भोली–भाली मृगी की भाँति, राक्षसियों से घिरी हुई, सीताजी तारस्वर में रोती रहती हैं। अहो! अशोकवन में भी सीताजी शोक से युक्त हैं, वे कुररी पक्षी की भाँति भोजन–

शयन–सुख को भूलकर, हा राम–हा राम रटती हुई विरह ज्वर में लीन हैं। सीताजी सिर पर अपनी जटा से एक ही जूड़ा बाँधी हुई हैं। उनके मुख से श्रीराम के चरित समूह मुखरित हो रहे हैं, सुन्दर कटि प्रदेश वाली सीताजी मानों मरण का सोपान प्राप्त करके भव से पार जाने की इच्छा कर रही हैं। विदिशा–दिशा में स्वर्ण मृग का पीछा कर रहे अपने प्राणपति आप श्रीराम को ही देखती रहती हैं और **गिरिधर** कवि के प्रभु आप श्रीराम का विलाप करती हुई पृथ्वी की धूलिराशि में लोटती रहती हैं।

**विशेष–** यह गीत राग–देश तथा तोड़ी राग में भी गाया जा सकता है।

## गीत संख्या–३६

**हे हरे सीता कथञ्चिज्जीवति।**
**दृष्टा मया परपुरे विवशा साध्वी त्वद्गुणगणमनुजीवति।।**
**तीर्त्वा सिन्धुमशोककानने कञ्जानना मया खलु दृष्टा।**
**प्रतिपत्पाठशीलविद्येव कृशाङ्गी भवत्पदाद्विश्लिष्टा।।१।।**
**परितो वृता राक्षसीभिर्हरिणीव शुनीभिः प्रभो परीता।**
**त्वन्नाथापि विनाथेवाहो क्रन्दति करुणं रावणनीता।।२।।**
**परिकर्मणा विहीना दीना गतालङ्कृतिस्त्वां दीव्यन्ती।**
**भौमी भाति चन्द्रविधुरा रोहिणी यथा भाग्यं सीव्यन्ती।।३।।**
**ताडं ताडं स्वशिरो वक्षो मुहुर्लुठन्ती भुवि श्लथन्ती।**
**क्वासि क्वासि राम रघुनन्दन गिरमीदृशी किमपि कथयन्ती।।४।।**
**अलं वर्ण्यवरवर्णिनीपीडामाहरकालं न प्रतिपालय।**
**गिरिधरप्रभो जानकीमानय दीनानाथ यशोऽपि निभालय।।५।।**

**भौमी–** हे श्रीहरे! सीताजी किसी प्रकार जी रही हैं। मैंने अपनी आँख से रावण के नगर में वन्दिनी सीताजी को विवश देखा। वे पतिव्रता शिरोमणि आपके गुण–गणों के आधार पर ही अपना जीवन धारण कर रही हैं। मैंने समुद्र पार करके अशोकवन में आपके कमलचरणों से बिछुड़ी हुई कमलनयनी सीताजी को प्रतिपदा के दिन पढ़ने वाले ब्रह्मचारी की विद्या की भाँति दुर्बलांगी देखी। प्रभु! कुत्तियों से घिरी हुई हरिणी की भाँति, सीताजी चारों ओर से राक्षसियों से घिरी हुई हैं। आप जैसे समर्थ नाथ के होने पर भी अनाथ की भाँति रावण द्वारा बन्दी बनाई गयी सीताजी करुण–क्रन्दन करती रहती हैं। स्नान आदि सभी क्रियाओं से विहीन और दीन स्थिति में रहकर, अलंकारों से रहित होकर आपकी ही स्तुति करती हुई सीताजी चन्द्रमा से बिछुड़ी हुई रोहिणी की भाँति अपने भाग्य को सीती हुई दिख रही हैं। सीताजी अपना शरीर, सिर–छाती पीट–पीटकर, बार–बार लोटती हैं और पृथ्वी पर गिर पड़ती है और चिल्लाने लगती हैं। हे राम, हे राम! हे रघुनन्दन! आप कहाँ हैं? कहाँ हैं? इस प्रकार करुणवाणी बोलती रहती हैं। हे प्रभु! अब सीताजी की पीड़ा का वर्णन करना व्यर्थ है। आप हर काल अर्थात् शिवजी के समय की प्रतीक्षा मत कीजिये। हे **गिरिधर** कवि के प्रभु! आप सीताजी को ले आइये और दीनानाथ जैसे विरुद का सम्मान कीजिये।

## सन्दर्भश्लोकः

**इति निवेद्य वचो हरिपुङ्गवो जनकजा विरहाम्बुधिवीचिभृत्।**
**रघुवरं प्ररुरोद यथा शिशुर्विगतमातृक आर्त्ततरस्वरम्।।**

**भौमी–**जनकनन्दिनी सीताजी के वियोग सागर की तरंगों को धारण करने वाले वानरश्रेष्ठ हनुमानजी इस प्रकार श्रीराम से निवेदन करके उसी प्रकार फूट–फूटकर आर्तस्वर में रोने लगे जैसे माता से हीन छोटा–सा बालक।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते**
**गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये सुन्दरकाण्डे**
**गीतहनुमत्पराक्रमो नाम प्रथमः सर्गः।।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के सुन्दरकाण्ड में गीतहनुमत्पराक्रम नामक प्रथम सर्ग सम्पन्न हुआ।

।।श्रीराघवः शन्तनोतु।।

।।श्रीः।।

।। नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये

# सुन्दरकाण्डे

## गीतसमर्थशरण्यो नाम

## द्वितीयः सर्गः

### मङ्गलाचरणम्

**विभीषणं विधित्सन्तं भुवनैकविभूषणम्।**
**सङ्ग्रामभीषणं सेवे विभूषणविभूषणम्।।१।।**

**भौमी–** मैं **गिरिधर** कवि विभीषण को भुवन का एकमात्र आभूषण बनाने के इच्छुक संग्राम में भयंकर और आभूषणों के भी आभूषण भगवान श्रीराम की सेवा करता हूँ।

### सन्दर्भश्लोकः

**वातेः समाचारमवाप्य भौम्या भूमेर्भरं हर्तुमनन्तवीर्यः।**
**प्रस्थातुकामो रिपुराजधानीं प्रस्थापयामास कपीशसेनाम्।।१।।**

**भौमी–** हनुमानजी से सीताजी का समाचार प्राप्त करके अनन्त पराक्रमी भगवान श्रीराम ने भू–भार हरने के लिये प्रस्थान करने की इच्छा करते हुये शत्रु रावण की राजधानी लंका पर आक्रमण करने हेतु वानरी सेना को प्रस्थान कराया।

### गीत संख्या–१

**रामस्य सेना प्रस्थिता राघवस्य सेना प्रस्थिता।।**
**पापमेव पापिनां तापमेव तापिनां हन्तुमेव साध्वसं रक्षसां प्रतापिनाम्।**
**वानरेन्द्रसेना प्रस्थिता रामस्य सेना प्रस्थिता।।१।।**
**गर्जतां प्रतर्जतां भुवो भरं भर्जतां मत्सरं विसर्जतां साहसं च सर्जताम्।**
**वानराणां सेना प्रस्थिता रामस्य सेना प्रस्थिता।।२।।**
**वृक्षशैलशालिनां महावीर्यशालिनां रामकृपाशालिनां रणत्रपाशालिनाम्।**
**बलिनाञ्च सेना प्रस्थिता रामस्य सेना प्रस्थिता।।३।।**
**हनूमतो हंकृतैर्जयश्रीणां हिंकृतैः मर्कटानां हुङ्कृतैः फणिनाञ्च फुङ्कृतैः।**
**तरस्विनां सेना प्रस्थिता रामस्य सेना प्रस्थिता।।४।।**

**हनूमता चालिता लक्ष्मणेन पालिता सुकण्ठेन चारिता गिरिधरप्रचारिता।**
**मनस्विनां सेना प्रस्थिता रामस्य सेना प्रस्थिता।।५।।**

**भौमी-** आज लंका के लिये श्रीराम की सेना प्रस्थान कर रही है। पापियों के पाप को, तापियों के ताप को, प्रतापी राक्षसों के भय को, नष्ट करने के लिये ही वानरेन्द्र सुग्रीव द्वारा संचालित वानरी सेना चल पड़ी है। गरजते हुये एक दूसरे को डाँटते-धमकाते हुये, पृथ्वी का भार नष्ट करते हुये, मात्सर्य को छोड़ते हुये और साहस की सर्जना करते हुये वानरों की सेना चल पड़ी है। वृक्ष और पर्वत लिये हुये, महापराक्रमशाली श्रीराम की कृपा से सुशोभित और युद्ध में पराङ्मुख होने से श्रीराम सेवा से वंचित कर देंगे, इस लज्जा से युक्त महाबली वानरों की सेना चल पड़ी। हनुमान की हङ्कारों से, जय श्रीराम की हिंकारों से, कुल नागों की फुंकारों से और वानरों की हुँकारों से युक्त वेगशाली वानरों की सेना चल पड़ी। हनुमानजी के द्वारा संचालित होती हुई, लक्ष्मणजी द्वारा पालित होती हुई, सुग्रीव द्वारा संचारित होती हुई और **गिरिधर** कवि द्वारा प्रचारित होती हुई श्रीराम की सेना चल पड़ी।

**विशेष-** यह गीत '**रामजी की सेना चली**' गीत के ढाल पर है।

## गीत संख्या-२

**रामचन्द्रनिर्दिष्टा सेना लङ्काविजयकृते यान्ती।**
**हन्तुं रावणबलं समग्रं विष्वग्विश्वहिते भान्ती।।**
**जय राम जय श्रीराम जय राम जय श्रीराम।।१।।**
**महापराक्रमबलसमन्विता वीररसाम्बुधिसुस्नाता।**
**राक्षसवनप्रलयाग्निसमाना नानाप्रहरणनिष्णाता।।**
**जय राम जय श्रीराम जय राम जय श्रीराम।।२।।**
**वज्रकल्पनखविटपभूधरानुद्धतदोर्भिर्विभ्राणा ।**
**धावन्ती निशिचरान् जिहांसू रामकृते प्रार्पितप्राणान्।।**
**जय राम जय श्रीराम जय राम जय श्रीराम।।३।।**
**दन्तकटकटा कुपितकिलकिला शब्दव्यापृतदिगन्तरा।**
**लङ्कामत्तुमिवाभिव्रजन्ती धूलिधूसरितवसुन्धरा।।**
**जय राम जय श्रीराम जय राम जय श्रीराम।।४।।**
**पृष्टविराजितरामलक्ष्मणो मुदा प्रतस्थे कपिबलवान्।**
**पौलस्त्यं संयुगे विजेतुं गिरिधरगीतः श्रीहनुमान्।।**
**जय राम जय श्रीराम जय राम जय श्रीराम।।५।।**

**भौमी-** श्रीरामचन्द्र के द्वारा निर्दिष्ट वानरी सेना लंका के विजय के लिए जा रही है। सम्पूर्ण रावण सेना को नष्ट करने के लिये पूर्णरूप से विश्व के हित में समर्पित सुशोभित होती हुई, सेना विजय-यात्रा कर रही है और जय राम, जय श्रीराम का गर्जन कर रही है। यह सेना महान पराक्रम तथा महान बल से युक्त है और यह

वीररस के महासागर में आशिरस्क स्नान की हुई, नाना शस्त्रों के प्रहार में निपुण तथा राक्षसों के लिये प्रलयाग्नि के समान है। वानरी सेना अपने उद्धत भुजाओं से वज्र के समान वृक्ष और पर्वतों को धारण करती हुई श्रीराम के लिये अपने प्राणों को समर्पित की हुई राक्षसों का वध करने के लिये दौड़ रही है। जय राम, जय श्रीराम उद्घोष कर रही है। वानरी सेना के दाँतों के कटकटाहट से, क्रोध की किलकिलाहट से, सम्पूर्ण दिशाएँ भर गई हैं और वह पृथ्वी को धूल–धूसरित करती हुई जय श्रीराम की गर्जना करती हुई मानों लंका को ही खाने के लिए दौड़ रही है। अपने पीठ पर श्रीराम लक्ष्मण को विराजमान करके **गिरिधर** कवि के द्वारा गाए हुए बलवान श्रीहनुमानजी युद्ध में रावण को जीतने के लिए प्रसन्नतापूर्वक प्रस्थान किए।

## गीत संख्या-३

**श्रीरामो विजयाय विजयते।।**
**विजयमुहूर्तं वीक्ष्य प्रस्थितो जितकामो विजयाय विजयते।**
**भ्रात्रा सह कपिकटकसमर्जितसङ्ग्रामो विजयाय विजयते।।१।।**
**वनचरचीत्कारितवरदिग्गजविभ्रामो विजयाय विजयते।**
**रजोराशिलोपितदिवाकरो जनरामो विजयाय विजयते।।२।।**
**सैन्यभारकम्पितकच्छपकोलस्त्रामो विजयाय विजयते।**
**वानरचमूचकितदिग्पतिशङ्कररामो विजयाय विजयते।।३।।**
**लोललोललाङ्गूलहनूमद्विश्रामो विजयाय विजयते।**
**अभिरामः कविगिरिधरगीतगुणग्रामो विजयाय विजयते।।४।।**

**भौमी–** श्रीराम विजय के लिए विजय यात्रा कर रहे हैं। विजय मुहूर्त देखकर काम विजेता श्रीराम विजय के लिए प्रस्थान कर रहे हैं। भाई लक्ष्मण के सहित वानरी सेना द्वारा इकट्ठी की गई संग्राम सामग्री के साथ श्रीराम विजय के लिए प्रस्थान कर रहे हैं। वानरों के चीत्कार से भयभीत दिग्गजों का जहाँ विभ्रम है और जिनके कारण वानरी सेना के खुर की धूलि से सूर्यनारायण छिप गए हैं, ऐसे लोकमंगल श्रीराम विजय यात्रा कर रहे हैं। जिनकी सेना के भार से कच्छप काँप गए हैं। महावाराह को भ्रम हो गया है। ऐसे श्रीराम विजय यात्रा कर रहे हैं और जिन्होंने वानरी सेना से दिग्पाल शिव और परशुराम को भी चकित कर दिया है। ऐसे श्रीराम विजय यात्रा कर रहे हैं। चंचल, हिलते हुए लाङ्गूल वाले हनुमानजी पर जिन्होंने विश्राम किया है ऐसे सबको सुख देने वाले और **गिरिधर** कवि द्वारा जिनके गुणसमूहों को गीत का विषय बनाया गया है ऐसे लोकाभिराम श्रीराम आश्विन शुक्ल पक्ष दशमी विजय मुहूर्त में विजय यात्रा कर रहे हैं।

## सन्दर्भश्लोकः

**अक्षं हत्वा हनुमति हते दग्धलङ्केऽत्यशङ्के**
**रामां रामाचरितचरितं प्रस्थितं चाभिलङ्काम्।**
**श्रुत्वोदन्तं चकितचकितः प्रातरुत्थाय धीमान्**
**दध्यौ धीरो रघुकुलमणिं रावणस्यानुजः कम्।।१।।**

**भौमी-** अक्ष का वध करके, अत्यन्त निर्भीकता से लंका जलाकर, श्रीहनुमानजी के श्रीराम के पास प्रस्थान किए जाने पर और सीताजी के लिए ही युद्ध का आचरण करने वाले लंका की ओर प्रस्थानाभिमुख श्रीराम का स्मरण करके इस प्रकार दूतों से समाचार सुनकर प्रातः उठकर बुद्धिमान रावण के भाई विभीषण ने परब्रह्म स्वरूप रघुकुलमणि श्रीराम को ध्यान का ध्येय बनाया।

## गीत संख्या-४

**मनो रे भज रामं गोविन्दं हरिम्।।**
**मरकतजलजनीरदश्यामं पूरितसज्जनसुमनः कामम्।**
**कोटिकोटिमन्मथाभिरामं ब्रह्म मुकुन्दं हरिम्।।१।।**
**धृततूणीररुचिरशरचापं कोटिदिवाकरतरुणप्रतापम्।**
**स्मृतहतनिजजनपापत्रितापं आनन्दकन्दं हरिम्।।२।।**
**श्यामतामरससुभगशरीरं समररङ्गधीरं मतिधीरम्।**
**लक्ष्मणललितं श्रीरघुवीरं सुखनिस्यन्दं हरिम्।।३।।**
**परब्रह्ममयमनुजाकारं सुमुखं दशरथराजकुमारम्।**
**निरघं हतगिरिधरभवभारं परमानन्दं हरिम्।।४।।**

**भौमी-** हे मन! श्रीराम गोविन्द हरि का भजन करो। मरकत, नीलकमल और बादल के समान श्यामल, सज्जनों के सुन्दर मन की कामना पूर्ण करने वाले करोड़ों-करोड़ों कामों को आनन्द देने वाले, श्रीब्रह्म भुक्ति-मुक्ति-दाता श्रीहरि का भजन करो। सुन्दर तरकश, धनुष, बाण धारण करने वाले करोड़ों सूर्य के समान प्रतापवान, स्मरण मात्र से सेवकों का पाप और त्रिताप हरने वाले आनन्दकन्द श्रीहरि का भजन करो। नीले कमल के समान सुन्दर शरीर वाले, रणभूमि में स्थिर धीरबुद्धि वाले, लक्ष्मणजी से सुशोभित श्रीरघुवीर, सुखों के स्रोतों से युक्त श्रीहरि का भजन करो। परब्रह्मस्वरूप मनुष्य की आकृति वाले सुमुख दशरथजी के ज्येष्ठ राजकुमार निष्पाप और **गिरिधर** कवि का भवभार हरने वाले परमानन्द श्रीहरि का भजन करो।

**विशेष-** यह गीत बहुचर्चित भजन '**भजो रे ब्रह्म रामगोविन्दहरी**' की ढाल में निबद्ध है।

## गीत संख्या-५

**रामसीता रामसीता रामसीताराम रामरामा रामरामा राम रामाराम।।**
**पश्य मिथ्या भूतलोकं न्यस्य मायामोहशोकम्।**
**जिह्वया जप जागरूकं शीलशोभाधाम राम सीताराम।।१।।**
**पश्य पामरपुरो माया भात्यभास्वरत्रिगुणकाया।**
**दुर्जया दूषणनिकाया त्यजैनामघधाम राम रामाराम।।२।।**
**पश्य ते पुरतः प्रभातं वाति मञ्जुलमलयवातम्।**
**मनसि मन दृग्वारिजातं ललितलोकललाम राम सीताराम।।३।।**

**भज विभीषणपूर्णकामं गिरिधरात्ममनोऽभिरामम्।**
**भविक भावय भव्यभामं रसनया रट राम राम सीताराम।।४।।**

**भौमी-** विभीषण भगवान का मंगलमय नाम ले रहे हैं–**'राम सीताराम, सीताराम सीताराम राम रामाराम, रामाराम रामाराम'** इस प्रकार भगवान का स्मरण कर रहे हैं। देखो, यह लोक मिथ्या है। अतः माया मोह और शोक को छोड़कर जागरुकता से, अपनी जिह्वा से, शील–शोभा के आश्रय श्रीसीताराम का जप करो। अरे पामर जीव! सामने देखो, यह दुष्ट माया अंधकार स्वरूपिणी और तीनों गुणों से युक्त और सर्वघ्न अजेय दोषों से युक्त अपना चमत्कार प्रस्तुत कर रही है, पाप का आश्रय इस माया को छोड़ दो। सीतारामजी का भजन करो। जीव, देखो, तुम्हारी ही दृष्टि के समक्ष यह मलय मधुर वायु चल रहा है। सुहावना प्रातःकाल अनुभव में आ रहा है। इस समय अपने मन में कमलनयन और सम्पूर्ण लोकों के स्वरूप श्रीसीतारामजी का मनन करो। हे विभीषण, पूर्णकाम और **गिरिधर** कवि के आत्मा और मन को आनन्द देने वाले श्रीराम को भज। हे कल्याणमय, जिनकी पत्नी भी कल्याणमयी हैं, ऐसे प्रभु की भावना कर रसना से रामनाम रट।

**विशेष–**यह गीत रूपक ताल में निबद्ध है, इसे जोग, जोगिया, वैरागी, भैरव, भैरवी आदि रागों में गाया जा सकता है, इस प्रकार के गीतों को सन्त परम्परा में प्रभाती गीत कहा जाता है।

## गीत संख्या-६

**मनो रे शृणु निर्बलबलमस्ति रामः।।**
**मरकघनदूर्वादलश्यामो यमुनाजलाभिरामः।**
**शतशतकोटिकामकमनीयः कलाकदर्थितकामः।।१।।**
**यावत् प्रभृति गजेन निजबलात् कृतो झषेण सङ्ग्रामः।**
**तावत् प्रभृति बभूव निर्जितो भयभृता स्मृतो रामः।।२।।**
**द्रुपदसुता यावत् स्वपतिमतिः कोऽभूत् तत्परिणामः।**
**निर्बलया यदास्मारि माधवो वसनवपुरभूत् श्यामः।।३।।**
**गणिकागृद्ध्राजामिलमुख्ये सुखदश्चात्मारामः।**
**निर्बलगृह्यो भाति राघवो गिरिधरगिराभिरामः।।४।।**

**भौमी-** रे मन सुन! श्रीराम निर्बलों के बल हैं, वे मरकतमणि मेघ और दूर्बादल के समान श्यामल तथा यमुना जल के समान सुन्दर हैं। वे करोड़ों कामदेवों से भी कमनीय और अपनी कला से कामदेव को निन्दित करने वाले हैं जब तक गजेन्द्र ने अपने बल से ग्राह के साथ संग्राम किया तब तक ग्राह से हारता रहा और हारकर जब राम का स्मरण किया, तब जीत गया। जब तक द्रौपदी अपने पतियों में बुद्धि लगाई रही, तब तक क्या परिणाम निकला? जब निर्बल होकर माधव का स्मरण किया, तब श्यामसुन्दर स्वयं वस्त्र ही बन गए। गणिका, गीध और अजामिल प्रमुख पतितों के प्रति आत्माराम प्रभु सुखद ही तो हुए **गिरिधर** कवि की वाणी को आनन्द देने वाले रघुकुल के प्रवर श्रीराम तो निर्बलों का पक्ष लेकर शोभित होते हैं।

**विशेष-**यह गीत **'सुनेरी मैंने निर्बल के बल राम'** के ढाल पर है। यहाँ विभीषण भक्ति पवित्र ऋतम्भरा प्रज्ञा से द्रौपदी की भविष्यत घटना का स्मरण कर रहे हैं इसलिए सन्देह नहीं करना चाहिए।

## गीत संख्या-७

राम श्रीराम सदा रट रसने त्यज मिथ्या परवादविवादम्।
वर्धितदूषणविषमविषादं रामाराम सदा रट रसने।।१।।
त्यज संसारवासनास्वादं भज भगवन्मुखशिष्टप्रसादम्।
जय जय राम सदा रट रसने राम श्रीराम सदा रट रसने।।२।।
विस्मर लोकविगर्हितहासं स्मर सीतावरशुभेतिहासम्।
जय श्रीराम सदा रट रसने राम श्रीराम सदा रट रसने।।३।।
काय कलं रघुनन्दनसीतां गाय सततमिह गिरिधरगीताम्।
सीताराम सदा रट रसने राम श्रीराम सदा रट रसने।।४।।

**भौमी-** हे रसने, हे मेरे जिह्वे! सदैव श्रीराम का रटन कर। मिथ्या, दोष और भयंकर विषाद को बढ़ाने वाले पर वाद-विवाद को छोड़, रामाराम श्रीराम का रटन कर। हे जिह्वे! संसार की वासना-स्वाद छोड़ भगवान के मुख का शिष्ट प्रसाद का सेवन कर। सदैव जय जय श्रीराम रट। लोक निन्दित हास-परिहास भूल जा और सीतापति भगवान श्रीराम के अमृतमय इतिहास का स्मरण कर। हे जिह्वे! सदैव जय श्रीराम रट। निरन्तर श्रीरघुनन्दन सीता का उच्चारण कर और **गिरिधर** कवि द्वारा रचित गीत को गा और हे मेरे जीभ! सदा तू सीताराम सीताराम रट।

## गीत संख्या-८

राघव मां त्वं कदा मुखचन्द्रं दर्शयिष्यसे।।
कदा सीतालक्ष्मणाभ्यां समेतः समुपागम्य।
मां विरम्य राम मम कामं कर्षयिष्यसे।।१।।
कदा हरिणाक्ष्या समम्।
विहरन् पुरतो मम हारं हारं हरे मञ्जुमनः संस्त्रयिष्यसे।।२।।
कदा श्रावं श्रावं श्रुतिसुखदाम्।
सुधितां गिरं गिरिधरदर्शनस्य तृषं तर्षयिष्यसे।।३।।
कदा कमलाक्ष्या कञ्जकरम्।
नवकञ्जनेत्र मूर्धनि मदीये त्रिमूर्धारि स्पर्शयिष्यसे।।४।।

**भौमी-** विभीषण पुनः कह रहे हैं–हे राघव! आप मुझे अपने मुखचन्द्र के दर्शन कब कराओगे? कब श्रीसीता-लक्ष्मण के साथ आकर आप श्रीराम विराम के बिना मेरी काम की भक्ति को समाप्त कर दोगे? हे श्रीहरे! मृगनयनी सीताजी के साथ मेरे समक्ष विहार करते हुए सुन्दर मन को बार-बार चुराकर कब उसमें विराजिएगा। हे राघव! कानों को सुख देने वाली अपनी अमृत वाणी सुना-सुनाकर **गिरिधर** कवि की स्वविषयक दर्शन तृष्णा को और कब बढ़ाइएगा। हे नवीन कमल नेत्र, हे त्रिसिरा के शत्रु श्रीराम! आप कमलनयनी सीताजी के साथ मेरे सिर पर अपने कमल कर का कब स्पर्श करेंगे?

## गीत संख्या-९

मनो रामं शरणं याहि रे मा मा कुरु मां कं मां कम्।।
मायामयं मृषा परिभावय स्वप्नसमं संसारम्।
राममृते सम्बन्धमसत्यं सुतकलत्रपरिवारम्।।
घनश्यामं शरणं याहि रे मा मा कुरु मां कं मां कम्।।१।।
यावदस्ति किञ्चित् तव पार्श्वे तावद् जनास्त्वदीयाः।
निष्किञ्चने भवति भवितारो भवत इमे परकीयाः।।
श्रीरामं शरणं याहि रे मा मा कुरु मां कं मां कम्।।२।।
जायाभगिनीसुतभ्रातरः स्वार्थं ते स्पृहयन्ते।
स्वार्थे गते समे कुक्कुरवत् त्याज्यतया गृहयन्ते।।
अभिरामं शरणं याहि रे मा मा कुरु मां कं मां कम्।।३।।
मनोनिरासं भवकुटुम्बतस्त्यज मिथ्या निर्बन्धम्।
स्वीकुरु गिरिधरप्रभुणा साकं दासस्वामिसम्बन्धम्।
सीतारामं शरणं याहि रे मा मा कुरु मां कं मां कम्।।४।।

**भौमी–** विभीषण अपने मन से कह रहे हैं–

मन राम शरण में जा, मत कर तू मेरा मेरा।
स्वप्न समान जगत कर चिन्तन, मायामय सब झूठा।।
पत्नी सुत परिवार राम बिन नाता मृषा अनूठा।
घनश्याम शरण में जा, मत कर तू मेरा-मेरा।।१।।
जब तक कुछ भी पास है तेरे सभी तभी तक तेरे।
लख निष्किञ्चन तुझे तजेंगे शत्रु सरिस ये डेरे।
श्रीराम शरण में जा, मत कर तू मेरा-मेरा।।२।।
स्वारथ लागि बहिन भाई तेरे हैं सुत हित जाया।
गए स्वार्थ छोड़ेंगे तुमको श्वान समान निकाया।
अभिराम शरण में जा, मत कर तू मेरा-मेरा।।३।।
मन निराश हो जा कुटुम्ब से मिथ्या ममता छोड़ो।
गिरिधर प्रभु से नाता जोड़ो सबसे मुखड़ा मोड़ो।
सीताराम शरण में जा, मत कर तू मेरा-मेरा।।४।।

## गीत संख्या-१०

**विभीषणो रावणं प्रति-**

सीतां निर्यातय दशकन्धर।
त्यज निर्बन्धं कुरु सम्बन्धं रामेण समं वीरधुरन्धर।।

मन्दोदर्याऽसकृद् बोधितो मन्दमते न त्वं मानयसे।
दीनबन्धुमथ करुणासिन्धुं रामं न त्वं सम्मानयसे।।१।।
यदा प्रभृत्या हृता मैथिली शून्याद् दण्डकविपिनाद् दीना।
तदा प्रभृत्यशान्तिरायाता लङ्का विपद्वारिधौ लीना।।२।।
सुतद्वयं हा हतं तावकं लङ्कापुरमलातमिव दग्धम्।
विध्वंसितमशोकवनमखिलं त्वदभिमानतृणमपि निर्दग्धम्।।३।।
सम्प्रसीद राक्षसकुलवल्लभ मा विषीद वैदेहिं यापय।
गिरिधरप्रभवे जगदगविभवे क्रूरतमं वैरं निर्यापय।।४।।

**भौमी–** अब विभीषण रावण के प्रति कहते हैं–हे रावण! सीताजी को लौटा दो। हे वीरश्रेष्ठ! हठ छोड़ दो, श्रीराम के साथ सेवक से व्यवहार सम्बन्ध कर लो। तुमको मन्दोदरी ने बार–बार समझाया, फिर भी मन्दबुद्धि रावण तुम नहीं समझ रहे हो। दीनों के बन्धु, करुणा के सागर, श्रीराम का सम्मान नहीं कर रहे हो। जबसे दण्डक वन की शून्य कुटी से तुम सीताजी को हर कर लाए हो, तभी से लंका में अशान्ति आ गई है और यह नगरी विपत्ति के सागर में डूब गई है। तुम्हारे दो पुत्र मार डाले गए, लंकापुरी सूखी घास के समान जला दी गयी और अशोक वन तहस–नहस हो गया। तुम्हारा अभिमान तृण भी भस्म हो गया। हे राक्षस कुल के स्वामी! आप प्रसन्न हो जाएँ, दुःखी न हों, जड़–चेतन के स्वामी, **गिरिधर** प्रभु के स्वामी श्रीराम को श्रीसीताजी को लौटा दो। प्रभु से वैर छोड़ दो।

**विशेष–** यह गीत भी त्रिताल १६ मात्रा में निबद्ध है।

## गीत संख्या–११

रामो नहि मनुजः सामान्यः।।
भुवनेश्वरः कालकालोऽयं भवता नैव विमान्यः।
सकललोकसम्पत्समन्वितः सनातनः सम्मान्यः।।१।।
हर्तुं महीमहाभयभारं परब्रह्म साकारम्।
अवातरद् धृतमनुजाकारं विगुणं विगतविकारम्।।२।।
गवां द्विजानां सतां सुराणां मोदवर्धनो रामः।
गिरिधरप्रभुः प्रकटितोऽवधपुरि मङ्गलमयपरिणामः।।३।।

**भौमी–** हे रावण! श्रीराम सामान्य मनुष्य नहीं हैं। ये भुवनेश्वर और काल के भी काल हैं। इनका अपमान मत करो। ये सम्पूर्ण लोकों की सम्पत्ति से युक्त तथा सनातन हैं, इनका सम्मान करिये। अरे! रावण! पृथ्वी का महान भार उतारने के लिए ही विकाररहित विशिष्ट गुणों से युक्त सगुण साकार परब्रह्म ही मनुष्य का आकार ग्रहण करके अवतार लिए हैं। गौओं, ब्राह्मणों, सन्तों और देवताओं के आनन्द को बढ़ाने वाले, मंगलमय परिणाम वाले, श्रीराम **गिरिधर** कवि के स्वामी श्रीराघव श्रीअवधपुर में प्रकट हुए हैं।

## गीत संख्या-१२

स्वीकुरु दशमौले मम शिक्षाम्।
रामायार्पय झटिति जानकीं देहिमां मे भिक्षाम्।।१।।
कालरात्रिरिव निशाचराणां भवता नीता सीता।
मृत्युदूतिका हृता त्वयेयं कुमतिस्ते विपरीता।।२।।
तव कुलकमलकाननं हन्तुं सीताशीतनिशेयम्।
यातुधानमृत्यवे राजते दक्षादक्षदिशेयम्।।३।।
कुलं रक्ष जानकीं यच्छ यक्षेशावरज विचारय।
गिरिधरप्रभवे निजं समर्पय लोकद्वयं सुधारय।।४।।

**भौमी-** हे रावण! मेरी भिक्षा स्वीकार करो, श्रीराम को सीताजी को शीघ्र सौंप दो। यही मुझे भीख दो। राक्षसों की कालरात्रि जैसी सीताजी को तुम ले आए हो, यह तो तुम्हारे द्वारा मृत्यु की दूतिका ही लाई गई है। तुम्हारी यह कुमति अत्यंत विपरीत है। तुम्हारे कुलरूप कमल वन को नष्ट करने के लिए ये सीताजी शीत-रात्रि के स्वरूप में (हेमन्त रात्रि) और यह चतुर जानकीजी राक्षसों की मृत्यु के लिए दक्षिण दिशा ही हैं। हे यक्षेश कुबेर के छोटे भाई! विचार करो, लंकापुर की रक्षा करो। **गिरिधर** प्रभु श्रीराम को जानकी जी को सौंप दो और अपने को भी उनके चरण में डाल दो, दोनों लोकों को सुधार लो।

## गीत संख्या-१३

श्रृणु दशमौले वचो मम भ्रातः त्यज रघुवरवैरं सुरभयदातः।।
शीघ्रं समर्पय राघवाय सीतां त्यज निजमनसः कुबुद्धिं विपरीताम्।।१।।
अन्यथा मरिष्यसि रघुवीरबाणैः शयनं करिष्यसि रणभूविप्राणैः।।२।।
माभूर्निशाचरवंशधूमकेतुः यक्षखरारये भौमिं रक्षःश्रुतिसेतुम् ।।३।।
गिरिधरप्रभुमेव शरणं प्रयायाः नीचमृत्युतो निखिल नैरितान् प्रपायाः।।४।।

**भौमी-** हे भाई दशमौले! (दस सिर वाले रावण) मेरी बात सुनो। हे देवताओं को दुःख देने वाले रावण! श्रीराम का वैर छोड़ दो। श्रीराम को सीताजी शीघ्र सौंप दो, अपने मन की विपरीत बुद्धि छोड़ दो। नहीं तो श्रीराम के बाणों से मरोगे और युद्ध भूमि में प्राणों के साथ सो जाओगे। राक्षस वंश के धूमकेतु मत बनो। खरशत्रु श्रीराम को सीताजी को समर्पित कर दो और वैदिक सेतु की रक्षा करो। अब **गिरिधर** के प्रभु श्रीराम की शरण में जाओ और राक्षसकुल को नीच मृत्यु से बचा लो।

## गीत संख्या-१४

श्रृणु श्रृणु वचनं मे विबुधारे विरोधं परिहर श्रीहरेः।।
करुणासिन्धुरशेषहितैषी जगतां श्रीराघवः सुभैषी।
श्रृणु श्रृणु वचनं मे निर्जरारे विरोधं परिहर श्रीहरेः।।१।।

**प्रणतपालकः परमकृपालुः यशोनिभालको दीनदयालुः।**
**शृणु शृणु वचनं मे त्रिदशारे विरोधं परिहर श्रीहरेः।।२।।**
**दाशरथये प्रदेहि मैथिलीं मा कुरु वृत्तिं हरौ पुंश्चलीम्।**
**शृणु शृणु वचनं मे त्वं सुरारे विरोधं परिहर श्रीहरेः।।३।।**
**गिरिधरेश्वरं भज भगवन्तं पत्नीव्रतं जानकीकान्तम्।**
**शृणु शृणु वचनं मे देवारे विरोधं परिहर श्रीहरेः।।४।।**

**भौमी-** हे विबुधों के शत्रु! मेरा वचन सुनिए और श्रीहरि का विरोध छोड़ दीजिए। श्रीराम करुणा के सागर और सबके हितैषी हैं और श्रीराम जगत के शुभैषी हैं। हे देवताओं के शत्रु। मेरी बात सुनिए। श्रीराम का विरोध छोड़ दीजिए। श्रीराम प्रणतजनों के पालक, परम कृपालु, यश का संभाल करने वाले और दीनों के दयालु हैं। हे त्रिदश अर्थात् तीन दशाओं वाले देवताओं के शत्रु श्रीराम का विरोध छोड़ दो। दशरथनन्दन श्रीराम को जानकीजी को सौंप दो, श्रीहरि के प्रति व्यभिचारिणी वृत्ति मत करो। हे देवताओं के शत्रु! मेरी बात सुनो, प्रभु का विरोध छोड़ दो। **गिरिधर** कवि के स्वामी पत्नीव्रत सीतापति प्रभु श्रीराम का भजन करो, हे देवशत्रु रावण! मेरी बात सुनो और सीताजी को लौटा दो।

## गीत संख्या-१५

**न रामं परब्रह्म किं वेत्सि।**
**जानन् कोसलराजकुमारं परमं प्रभुमववेत्सि।।**
**येन हतौ ताटकासुबाहू मारीचोऽब्धौ क्षिप्तः।**
**विश्वामित्रमखोऽपि त्रातो मुनिश्रमः संक्षिप्तः।।१।।**
**मृणालभञ्जं पुरहरचापं भङ्क्त्वा धनुर्मुरारेः।**
**नमितं भृगुपतिबलमपि दमितं शमितं दमं सुरारेः।।२।।**
**मिथिलास्वयम्वरेऽजीयत येनायोनिजापि सीता।**
**त्रिभुवननृणां महं पश्यतां श्रुतिविधिना परिणीता।।३।।**
**पितृनिदेशतो विपिनमागतं कुतुकाद्धतो विराधः।**
**ब्रह्मास्त्रतो जयन्तो दमितः क्षान्तः कृतापराधः।।४।।**
**खरदूषणो त्रिशिरसं हत्वा योऽहन् मृगमारीचम्।**
**मित्रं खलु प्रविधाय मित्रजं न्यहन् बालिनं नीचम्।।५।।**
**यद्दूतः क्रान्त्वा वारीशं तृणमिवादहल्लङ्काम्।**
**वनमशोकमक्षं हत्वा योऽकार्षीत् पुरीं सशङ्काम्।।६।।**
**तं क्षामय रघुवरं प्रभुं दशमौले प्रियप्रतीताम्।**
**झटिति समर्पय राजसूनवे सीतां गिरिधरगीताम्।।७।।**

**भौमी-** श्रीराम को तुम परब्रह्म क्यों नहीं समझ रहे हो? अयोध्या राजकुमार श्रीराम को परब्रह्म जानते हुए भी तुम उनका अपमान कर रहे हो। जिनके द्वारा ताड़का, सुबाहु मारे गए, मारीच सागर में फेंका गया, विश्वामित्र के यज्ञ की रक्षा की गई और मुनियों का श्रम भी संक्षिप्त कर दिया गया। अरे! शिव धनुष को कमलदंड के समान तोड़कर जिन्होंने विष्णुधनुष को चढ़ा दिया, उसी के साथ परशुरामजी के बल का भी दमन किया गया और तुम रावण के दम्भ का भी शमन किया गया। जिनके द्वारा मिथिला के स्वयंवर में अयोनिजा सीताजी भी जीती गईं और सभी प्राणियों के देखते-देखते, जिन्होंने अयोनिजा सीताजी का विधिवत पाणि- ग्रहण स्वीकारा। पिता की आज्ञा से जो वन में पधारे, खेल-खेल में विराध का वध किया और ब्रह्मास्त्र से जयन्त का दमन किया फिर सीताजी के अनुरोध पर, अपराध करने पर भी छोड़ दिया। जिन्होंने खर, दूषण, त्रिशिरा का वध करके मारीच-मृग का वध किया एवं सूर्यपुत्र सुग्रीव को मित्र बनाकर नीच बालि को मार डाला। जिनका दूत समुद्र लाँघकर लंका को तृण के समान भस्म कर गया और अशोक वन तथा अक्ष का वध करके लंकापुरी शंकाकुल कर दिया। हे रावण! **गिरिधर** कवि के प्रभु श्रीराम से क्षमा माँगो और प्रियतम के विश्वासपात्र सीताजी को जो **गिरिधर** कवि के गीत का विषय बन रही हैं, उनको राजपुत्र श्रीराम को सौंप दो।

## सन्दर्भश्लोकः

**दत्ता लत्ता क्रोधतो रावणेन भ्रातुर्वक्षस्यात्तकालक्रमेण।**
**ज्ञात्वादेशं सोऽपि रक्षः कनिष्ठः सीतानाथं सर्वभावैः प्रपन्नः।।१।।**

**भौमी-** अनन्तर कालाधिवश रावण ने क्रोध के आवेश में आकर भाई विभीषण की छाती में लात मारी, रावण के कनिष्ठ भ्राता विभीषण भी प्रभु का आदेश मानकर सब प्रकार से श्रीराम की शरण में चले गये।

## गीत संख्या-१६

**विभीषणः स्वगतम् -**

**रामं शरणमभियामि हो त्यक्त्वा सर्वपरिवारम्।।**
**यातुधानपतिना नितान्तं निराकृतो मध्येसभं ताडितोऽथ लत्तया तिरस्कृतः।**
**श्यामं शरणमभियामि हो त्यक्त्वा पुत्रभृत्यदारम्।।१।।**
**शिवमञ्जुमानसमनोज्ञकलहंसं हंसवंशावतंसं महितमनुवंशम्।**
**कामं शरणमभियामि हो त्यक्त्वा रक्षो राज्यभारम्।।२।।**
**भवसिन्धुपोतपूतपादारविन्दं सुरनरमुनिवन्द्यमानन्दकन्दम्।**
**नामं शरणमभियामि हो त्यक्त्वा भोगसुखसारम्।।३।।**
**सर्वसमर्थं प्रभुं त्रिजगतां शरण्यं गिरिधरगिरागीतं त्रिविबुधवरेण्यम्।**
**धामं शरणमभियामि हो त्यक्त्वा संसृतिविकारम्।।४।।**

**भौमी-** विभीषण अपने मन में कह रहे हैं। आज सम्पूर्ण परिवार को छोड़कर मैं रामजी की शरण में जा रहा हूँ। आज सभी के बीच राक्षसपति ने मेरा अपमान किया, लात से मारकर ठुकराया। अब मैं पुत्र, सेवक

और पत्नी को छोड़कर श्रीराम की शरण में जा रहा हूँ। आज शंकरजी के सुन्दर मन के मधुर हंस अर्थात् सूर्यवंश के आभूषण, वैवश्वत मनु के वंश को सम्मानित करने वाले (क) अर्थात् ब्रह्मा, (अ) अर्थात् विष्णु, (म) अर्थात् शिव इन तीनों के नियंता भगवान राम के शरण में जा रहा हूँ अर्थात् राक्षस राज्य का सम्पूर्ण भार छोड़कर सबके काम में श्रीराम की शरणागति स्वीकार कर रहा हूँ। लंका का भोग सुखसार छोड़कर जिनका पवित्र चरणारविन्द संसार सागर का जलयान है और ऐसे देवता मनुष्य-मुनियों से वंदित आनन्दकन्द, सबके नमनीय श्रीराम की शरण में जा रहा हूँ। संसार के वासनात्मक कामादि विकारों को छोड़कर सर्वसमर्थ, स्वामी, तीनों जगतों को शरण देने में समर्थ और **गिरिधर** कवि के वाणी से गीत और तीनों देवता ब्रह्मा, विष्णु, शंकर के वरणीय परमधामस्वरूप श्रीराम की शरण में जा रहा हूँ।

## गीत संख्या-१७

**त्यक्त्वा रावणराज्यभारं शरणमहं रामं प्रपद्ये।।**
**आनुकूल्यसङ्कल्पं कृत्वातिहृष्टः।**
**प्रातिकूल्यवर्जनं विधाय संप्रहृष्टः।।**
**त्यक्त्वा लङ्कागृहसुखसारं शरणमहं रामं प्रपद्ये।।१।।**
**रामो रक्षिष्यतीति विधाय सुविश्वासम्।**
**गोप्ता रामभद्र इति कृत्वा समाश्वासम्।।**
**त्यक्त्वा सुतवित्तमित्रदारं शरणमहं रामं प्रपद्ये।।२।।**
**दीनतां निधाय नित्यं दीनो दीनबन्धौ।**
**कार्पण्यं प्रकल्प्य सत्कृपाणे कृपासिन्धौ।।**
**त्यक्त्वा भवविषयं विकारं शरणमहं रामं प्रपद्ये।।३।।**
**सीतालक्ष्मणानुचरं श्यामलशरीरम्।**
**गिरिधरचातकजलधर रघुवीरम्।।**
**त्यक्त्वा संसारं निरासारं शरणमहं रामं प्रपद्ये।।४।।**

**भौमी-** रावण का राज्यभार छोड़कर अब मैं श्रीराम के शरण में जा रहा हूँ। मैं आनुकूल्य का संकल्प करके अत्यंत प्रसन्न हूँ और प्रातिकूल्य का वर्जन करके भी बहुत संतुष्ट हूँ, लंका भवन के गृहसुख तत्व को छोड़कर श्रीराम के शरण में जा रहा हूँ। रामजी रक्षा करेंगे, इस प्रकार विश्वास करके और रामजी ही मेरे रक्षक हैं इस प्रकार आश्वासन स्वीकार करके पुत्र धन, मित्र और पत्नी छोड़कर मैं रामजी की शरण में जा रहा हूँ। दीनबन्धु श्रीरामचन्द्रजी में नित्य दीनता धारण करके और सुन्दर कृपाण धारण किए हुए कृपा के सागर श्रीराम में कार्पण्य स्वीकार करके संसार के विषय विकार को छोड़कर सीताजी और लक्ष्मणजी से सेवित श्यामल शरीर वाले **गिरिधर** कविरूप चातक के स्वाति के बादल रघुवीर श्रीरामजी के शरण में जा रहा हूँ।

## गीत संख्या-१८

**रघुरामं शरणं याम्यहम्।।**
**गत्वा सिन्धोपारमपारं कूपारं पश्याम्यहम्।**

दीनानाथं श्रीरघुनाथं नाथं संपश्याम्यहम्।।
श्रीरामं शरणं याम्यहम्।।१।।
लब्ध्वा लोचनलाभमदभ्रं सुखसिन्धौ मज्जाम्यहम्।
स्मारं स्मारं करुणागारं भवभारं भृज्याम्यहम्।।
प्रभुरामं शरणं याम्यहम्।।२।।
नामं नामं जलदश्यामं संस्फीतोऽथ भवाम्यहम्।
इत्वा शुभमूलं बिना मूल्यं विक्रीतोऽपि भवाम्यहम्।।
अभिरामं शरणं याम्यहम्।।३।।
सर्वं तत्र समर्प्य राघवे भाग्यस्त्रजं सृजाम्यहम्।
गिरिधरप्रभुः शरणो विभीषणः कृतकृत्यतां व्रजाम्यहम्।।
सीतारामं शरणं याम्यहम्।।४।।

**भौमी-** मैं रघुकुल को रमाने वाले श्रीराम की शरण में जा रहा हूँ। समुद्र पार जाकर एक अपार समुद्र का आज दर्शन करूँगा और दीनों के आनाथ अर्थात् आदरणीय नाथ एवं दीना अहल्या, शबरी, तारा के नाथ श्रीरघुनाथजी को अपने स्वामी के रूप में निहारूँगा और श्रीराम की शरण में जाऊँगा। आज नेत्र-निर्दोष लाभ प्राप्त करके मैं सुख के सागर में डूब जाऊँगा और करुणा के भवन श्रीराम का स्मरण करके प्रभु के प्रतापाग्नि में भवभार को ही भून डालूँगा। मैं प्रभु राम की शरण में जाऊँगा। मैं मेघ श्याम श्रीराम को बार-बार नमस्कार करके कल्याण से परिपूर्ण हो जाऊँगा और शुभ के आशय प्रभु के पास जाकर बिना मोल के ही वहाँ बिक जाऊँगा। वहाँ राघव के चरणों में सब कुछ समर्पित करके मैं सौभाग्य की माला का निर्माण करूँगा। **गिरिधर** कवि के स्वामी श्रीराम की शरण अर्थात् रक्षक बनाया हुआ मैं विभीषण कृतकृत्य हो जाऊँगा। अब मैं सीताराम की शरण में जाऊँगा।

## गीत संख्या-१९

अहं रामं शरणमभियामि हो त्यक्त्वा पुरपरिवारम्।।
दीनानाथं दीनदयालुं करुणासिन्धुं परमकृपालुम्।
पूर्णकामं शरणमभियामि हो त्यक्त्वा पुत्रसुखदाराम्।।१।।
वक्षसि रावणलत्तयानिहतः मनसि तृष्णया प्रत्तया प्रहतः।
घनश्यामं शरणमभियामि हो त्यक्त्वा विषयविकारम्।।२।।
एतावद् जीवनं विषये प्रयुक्तं मिथ्याभूतं लङ्कापतिनिलये नियुक्तम्।
रामारामं शरणमभियामि हो त्यक्त्वा भीमभवभारम्।।३।।
अधुना यावद् विधात्रा भवाटव्यां वञ्चितः गिरिधरप्रभुं विहाय विकारैः प्रपञ्चितः।
सीतारामं शरणमभियामि हो त्यक्त्वा सारमसंसारम्।।४।।

**भौमी-** मैं पुर और परिवार को छोड़कर श्रीराम की शरण में जा रहा हूँ। मैं पुत्र, सुख और पत्नी को

छोड़कर दीनों के नाथ, दीनों पर दया करने वाले, करुणा के सागर, परम कृपालु, पूर्णकाम, श्रीराम की शरण में जा रहा हूँ। रावण के द्वारा छाती में लात से मारा हुआ और मन में भी संसारियों द्वारा दी हुई तृष्णा से पीड़ित मैं विभीषण विषय विकारों को छोड़कर घनश्याम श्रीराम की शरण में जा रहा हूँ। इतना बड़ा जीवन मैंने शब्द, स्पर्श, रूप, रस, गन्ध नामक विषयों में लगा दिया और यह निरर्थक चला गया क्योंकि इसे मैंने रावण के भवन में नियुक्त किया था। अतः अब भयंकर संसार के भार को छोड़कर मैं रामाराम अर्थात् परशुराम के भी आरमण के स्थान श्रीराम की शरण में जा रहा हूँ। अब तक मैं विधाता के द्वारा इस संसार के वन में ठगा गया। **गिरिधर** कवि के प्रभु श्रीराम को छोड़कर विषयों के द्वारा प्रवंचित हुआ। अब तो असार संसार को छोड़कर मैं श्रीसीतारामजी की शरण में जा रहा हूँ।

## गीत संख्या-२०

**रामादन्यं कं वा भजेयं दयालुं कं वा शरणं व्रजेयम्।।**
**रामं विना कोऽकारणकरुणासमुद्रः कश्चरित्रमूर्तिः कश्चशीलसिन्धुचन्द्रः।**
**कमतोऽन्यमनन्यो निजेयं दयालुं कं वा शरणं व्रजेयम्।।१।।**
**कश्चैक नारीव्रतो रामादन्यो विश्वे कश्च वेदधर्मरतो रामादन्यो नीष्वे।**
**कमन्यं कदापि न त्यजेयं दयालुं कं वा शरणं व्रजेयम्।।२।।**
**कस्य निरन्तरं भवति निजरक्षलज्जा कं च सातयति सदा पापिपापमज्जा।**
**कस्य कृते सुस्त्यजं त्यजेयं दयालुं कं वा शरणं व्रजेयम्।।३।।**
**अजामिलसमानाः खलाः कस्य सदसि भाता गिरिधरसमाश्च केन पापाः परित्राता।**
**रामादन्यं किं स्त्रजं स्त्रजेयं दयालुं कं वा शरणं व्रजेयम्।।४।।**

**भौमी-** श्रीराम के अतिरिक्त किसका भजन करूँ और उन प्रभु के अतिरिक्त किस दयालु की शरण में जाऊँ? श्रीराम के अतिरिक्त करुणा का सागर और कौन है? उनके अतिरिक्त और कौन है? चरित्र मूर्ति और शील सागर का चन्द्रमा? अतः उनके अतिरिक्त किसको मैं अनन्य बनकर अपना बनाऊँ और किसकी शरण में जाऊँ? इस संसार में श्रीराम के अतिरिक्त एक नारी-व्रत कौन है और श्रीराम को छोड़कर वैदिक धर्म में रत कौन है? श्रीराम के अतिरिक्त ऐसा कौन दयालु देवता है, जिसे मैं कभी नहीं छोड़ सकूँ? किसको अपने रक्षणीय की निरंतर लज्जा रहती है और पापियों के पाप की मज्जा किसको सदा सताती है? किसके लिये मैं न छोड़ने वाली वस्तु भी छोड़ सकता हूँ? अजामिल के समान खल किसकी सभा में सुंदर लगे? और **गिरिधर** कवि के समान अनेक पापियों को किस स्वामी ने तारा? रामजी के अतिरिक्त और किसको अपनी प्रेममाला से अलंकृत करूँ और किसकी शरण में जाऊँ?

**विशेष-** यह गीत नचारी धुन में निबद्ध है।

## गीत संख्या-२१

**त्यक्त्वा परिवारं भीमबाधासमुद्रं व्रजामि शरणम्।**
**सर्वभावैर्राममभद्रं व्रजामि शरणम्।।**

तपो नैव तप्तं तापैरहमेव तप्तः।
जपं नैव जप्तं जापैरहमेव जप्तः।।
हित्वा सुतदारं दावदारुणमुदग्रं व्रजामि शरणम्।
सर्वभावैर्रामभद्रं व्रजामि शरणम्।।१।।
पूर्वस्मिन् जन्मनि द्विजेन्द्रैरभिशप्तः।
सम्प्रतिके रक्षःक्रूरकर्मणानुतप्तः।।
उज्झित्वाहङ्कारं कालकालन्ममद्रं, व्रजामि शरणम्।
सर्वभावैर्रामभद्रं व्रजामि शरणम्।।२।।
किं करिष्ये दारैरहं सुतैः कुप्रकृतिभिः।
किं विधास्ये दशमुखवशम्बदविकृतिभिः।।
मुक्त्वा भवनभारं सर्वसङ्कटसमग्रं व्रजामि शरणम्।
सर्वभावैर्रामभद्रं व्रजामि शरणम्।।३।।
गिरिधरप्रभोः समेत्य कृपासुप्रसादम्।
राघवं प्रसाद्य विभीषणो निष्प्रमादम्।।
वान्त्वा भवविकारं प्राणहरविषयविषाग्रं व्रजामि शरणम्।
सर्वभावैर्रामभद्रं व्रजामि शरणम्।।४।।

**भौमी–** भयंकर बाधाओं के सागर परिवार को छोड़कर सर्वभाव से मैं विभीषण रामभद्र की शरण में जा रहा हूँ, शरण में जा रहा हूँ। मैंने कोई तप नहीं किया, उल्टे मैं ही तापों से तप गया। मैंने कोई जप भी नहीं किया, उल्टे जपों ने ही मुझे जप लिया। अब तो मैं विषयाग्नियों से भयंकर पुत्र–पत्नी आदि को छोड़कर रामभद्र की शरण में जा रहा हूँ। पूर्व जन्म में मैं ब्राह्मणों द्वारा अभिशप्त हुआ, इस जन्म में क्रूर–कर्मा रावण द्वारा संतप्त हुआ। अतः काल को समीप बुलाने वाले कल्याण रहित अहंकार को छोड़कर मैं रामभद्र की शरण में जा रहा हूँ। मैं पत्नी से और बुरी प्रकृति वाले पुत्रों से क्या करूँगा और रावण के वश में रहने वाले दुर्धर्ष राक्षसों से मैं किस समस्या का समाधान करूँगा? इसलिए सम्पूर्ण संकटों से भरे हुए घर के भार को छोड़कर मैं श्रीराम की शरण में चला जाऊँगा। **गिरिधर** कवि के प्रभु श्रीराम की कृपासुख से भरा हुआ प्रसाद लेकर प्रमाद रहित होकर श्रीराम को प्रसन्न करके अब प्राण को हरने वाले विषय–विष ही जिसके परिणाम हैं, ऐसे संसार के विकार को कै के समान उलटी करके समभाव से श्रीरामभद्र की शरण में जा रहा हूँ।

## गीत संख्या–२२

व्रजामि शरणं रामं सर्वजनशरण्यम्।।
आत्मारामं पूर्णकामं प्राप्तसर्वकामम्।
कमलचरणशरणगतसमाप्तसर्वकामम् ।।
व्रजामि शरणम् रामं दीनजनशरण्यम्।।१।।

दृष्ट्वाप्युपेक्ष्यमाणं निजदासदोषम्।
श्रुत्वाप्यपेक्ष्यमाणं स्वजनस्वगुणकोषम्।।
व्रजामि शरणं रामं मुनिजनशरण्यम्।।२।।
मेरुसमं रजयन्तं सेवकापराधम्।
शोषयन्तं भक्तपापवारिधिमगाधम्।।
व्रजामि शरणं रामप्रेमधनशरण्यम्।।३।।
सीतालक्ष्मणानुचरं कौसल्याकुमारम्।
गिरिधरसारङ्गवारिधरं कृपागारम्।।
व्रजामि शरणं रामं त्रिभुवनशरण्यम्।।४।।

**भौमी–** सभी लोगों को शरण देने में समर्थ, श्रीराम की शरण में जा रहा हूँ। आत्माराम, पूर्णकाम और सभी कामनाओं को प्राप्त किए हुए और कमल चरण के शरण में आए हुए महानुभावों की सभी सांसारिक इच्छाएँ समाप्त किए हुए दीनजनों के शरण देने वाले श्रीराम की शरण में जा रहा हूँ। देखकर भी अपने भक्त की दोष की उपेक्षा करने वाले और सुनकर भी स्वजनों के गुण कोष की अपेक्षा करने वाले मुनिजनों के शरण दाता श्रीराम की शरण में जा रहा हूँ। सुमेरु के समान होने पर भी सेवक के अपराध को धूलि के समान करते हुए और भक्त के अगाध पाप सागर को सुखाते हुए प्रेम को ही एकमात्र धन मानने वाले महापुरुषों के शरणदाता श्रीराम की शरण में जा रहा हूँ। श्रीसीता और लक्ष्मणजी ही जिनके अनुचर हैं ऐसे कौसल्याजी के पुत्र **गिरिधर** कवि रूप चातक के मेघ स्वरूप तीनों लोकों की शरण देने में समर्थ श्रीराम की शरण में मैं विभीषण जा रहा हूँ।

## गीत संख्या–२३

श्रीरामदीनबन्धो करुणाकृपैकसिन्धो।
शरणागतस्तवाहं चरणाश्रितस्तवाहम्।।
हे रघुनन्दन त्रिभुवनचन्दन दशरथराजकिशोर।
नीरजलोचन जलभयमोचन भुवनविलोचनचोर।।
चारित्रचारुमूर्ते जनभावपूतपूर्ते।
शरणागतस्तवाहं चरणाश्रितस्तवाहम्।।१।।
हे नरभूषण भूषणभूषण दूषणदूषण राम।
जानकीजीवन निष्किञ्चनधनकरुणाघन सुखधाम।।
कामारिसौख्यहेतो सन्त्रातधर्मसेतो।
शरणागतस्तवाहं चरणाश्रितस्तवाहम्।।२।।
हे स्मरसुन्दर भवनिधिमन्दर गुणमन्दिर सुखकन्द।
हे जनरञ्जन हे भवभञ्जन मोहितमदन मुकुन्द।।

**आनन्दकन्दमोहन शोभनभवव्यपोहन।**
**शरणागतस्तवाहं चरणाश्रितस्तवाहम्।।३।।**
**हे हरमानसमानसहंस हंसकुलकलावतंस।**
**हे हनुमत्सुमनोगृह सत्स्पृहसुग्रहकृतप्रशंस।।**
**जनतापपापहारिन् गिरिधरमनोविहारिन्।**
**शरणागतस्तवाहं चरणाश्रितस्तवाहम्।।४।।**

**भौमी-** विभीषण पुनः कह रहे हैं- हे दीनों के बन्धु, हे करुणा और कृपा के एकमात्र सागर श्रीराम! मैं विभीषण आपका शरणागत हूँ, मैं चरण में आश्रित हूँ। हे रघुकुल के नन्दन! अपने जनों को प्रसन्न करने वाले दशरथजी के राजकिशोर, कमल नेत्र, भवभय को नष्ट करने वाले, सम्पूर्ण भुवनों के नेत्रों को चुराने वाले चारित्र्य रूप, सुन्दरमूर्ति धारण करने वाले सन्तों के भावों के पवित्र पूर्ति करने वाले श्रीराघव सरकार मैं आपकी शरण में आया हूँ मैं आपके चरण में आश्रित हूँ। हे मनुष्यों के आभूषण और हे आभूषणों के भी आभूषण, दूषण राक्षस के शत्रु, जानकीजी के जीवन, निकिञ्चनों के भी धन, करुणा के मेघ, सुख के आश्रय, शिवजी के सुख के उपादान कारण, वैदिक धर्म सेतु के रक्षक श्रीराम मैं विभीषण आपके शरण में हूँ, मैं आपके श्रीचरणों के भरोसे हूँ। हे कामदेव से भी सुन्दर, भवसागर के मन्दराचलस्वरूप, काम को मोहित करने वाले, भुक्ति-मुक्ति देने वाले, हे भक्तों के सुखदाता, हे भयनाशक, हे गुणों के मन्दिर, हे सुख के उपादानकारण, हे आनन्द के मेघ, सबके मोहक शोभायमान, सांसारिक भाव को नष्ट करने वाले, प्रभु मैं आपका शरणागत हूँ, आपका चरणाश्रित हूँ। हे शंकरजी के मनमानस सरोवर के हंस, हे हंस अर्थात् सूर्यकुल के सुन्दर अलंकार, हे हनुमानजी के सुन्दर मन को अपना भवन बनाने वाले, हे सन्तों की स्पृहा के केन्द्र, हे गुणग्राही जनों की प्रशंसा के विषय, हे भक्तों के पाप-ताप को नष्ट करने वाले, हे **गिरिधर** कवि के मन में विहार करने वाले प्रभु श्रीराम, मैं विभीषण आपके शरण में आया हूँ, मैं आपके चरणों के आश्रित हूँ।

## गीत संख्या-२४

**रघुनन्दन राघव राम हरे शरणं करवाणि तवाङ्घ्रिमहम्।**
**जनचन्दन राघव राम हरे शरणं करवाणि तवाङ्घ्रिमहम्।।**
**दशशीर्षकृताभिभवेन विभो स्वमनोभवशुक्प्रभवेण प्रभो।**
**भवभञ्जन भावुकधाम हरे शरणं करवाणि तवाङ्घ्रिमहम्।।१।।**
**दशकण्ठविनाशनचण्डशरं भुवनैकधनुर्धरमेमिकरम्।**
**जनरञ्जन रञ्जननाम हरे, शरणं करवाणि तवाङ्घ्रिमहम्।।२।।**
**अव भक्तविभीषणमाप्तभयं भवभूपविभूषणरोचिरयम्।**
**सुखवर्धन नीरदश्याम हरे शरणं करवाणि तवाङ्घ्रिमहम्।।३।।**
**परिपाहि कृपाकर भीमभवात् गिरिधरमव राघव घोरदवात्।**
**हृतबन्धनलोकललाम हरे शरणं करवाणि तवाङ्घ्रिमहम्।।४।।**

**भौमी-** हे रघुनन्दन राघव! सबको रमाने वाले श्रीहरि मैं आपके चरण को ही अपना शरण बना रहा हूँ।

**प्रतिश्रृण्वता ज्ञायसे यद्यपि रावणकुतुकतुलितकैलाशः।**
**गिरिधरप्रभौ तथापि जृम्भते श्रीरामेऽङ्गददृढविश्वासः।।४।।**

**भौमी-** अब अंगद रावण को सम्बोधित करते हुए कहते हैं–हे दुष्ट! यदि पृथ्वी पर जमे हुये मेरे चरण को तुम हिला सकोगे तो मुझे तुम्हारे यहाँ छोड़कर सीतारामजी श्रीअवध लौट जायेंगे और मैं भी अपनी प्रतिज्ञा का पालन करके तेरी सेवा करता रहूँगा। फिर तो मैं पराजित होकर तुम्हारे ही नगर में बन्दी बनकर सुग्रीव का विषाद बढ़ाता हुआ, तुम लोगों द्वारा भजन के प्रमाद का अनुभव कराया जाता हुआ, निश्चित व्रत करके निराहार रह लूँगा। यदि तुम मेरा चरण डिगा दोगे तो मैं पराजय स्वीकार कर लूँगा और वानरी सेना तुम पर आक्रमण नहीं करेगी, वह किष्किन्धा लौट जायेगी और तुम्हारे सेवक राक्षस मेरा माँस नोच-नोच कर खायें और लज्जा से झुके हुये स्कन्ध वाली मेरी चर्बी को पियें। यदि तुम मेरा चरण डिगा भर दोगे तो मैं रामजी के पास नहीं जाऊँगा। सीताजी भगवान राम के साथ अयोध्या लौट जायेंगी और मैं वानरी सेना की रक्षा नहीं करूँगा। हे रावण! यद्यपि प्रतिज्ञा करते समय मैं यह जान चुका हूँ कि तुम वही रावण हो जिसने खेल-खेल में कैलास उठा लिया था फिर भी **गिरिधर** कवि के स्वामी श्रीराम पर मुझ अंगद का दृढ़ विश्वास सबसे उत्कृष्ट रूप में विराजमान हो रहा है।

## गीत संख्या-२०

**विजयते अङ्गदविश्वासः कलितहरिभक्तमुखोल्लासः।।**
**न शक्ता यातुधानसेना कपिचरणसञ्चालने सेना।**
**निरस्ता नीचविलसितेना विवृद्धो रावणनिःश्वासः।।१।।**
**संयुगे सुरासुराः सेन्द्रा जिता येनानिलरविचन्द्राः।**
**विभग्ना विबुधवधूमद्रा स इह जिह्रेति महोच्छ्वासः।।२।।**
**पुरन्दरजित्प्रमुखा योधाः परावृत्ताः कलितक्रोधाः।**
**विषीदद्वदना गतबोधा शुचा क्लिन्नो दशमुखहासः।।३।।**
**प्रसन्ना सुराः सुमान् ववृषुः प्रनृत्यन्त्यो देव्यो जहृषुः।**
**दनुजललनालालान् चक्रुषुः विलसते कविगिरिधरलासः।।४।।**

**भौमी-** अब कवि स्वयं गा रहे हैं- श्रीराम भक्तों का मुखोल्लास बढ़ाता हुआ श्रीअंगद का श्रीराम पर विश्वास विजयी हुआ, विजयी हो रहा है और विजयी होता रहेगा। अहो! सेना अर्थात् इन अपने स्वामी रावण के साथ राक्षसों की सेना अंगदजी का चरण डिगाने में समर्थ नहीं हो सकती और नीच, शोभाहीन, अल्पप्राण, राक्षसों के स्वामी, रावण का निःश्वास बढ़ा कर अंगदजी का विश्वास जीता। जिसके द्वारा युद्ध में इन्द्र के सहित देवता और दानव जीते गये और वायु, सूर्य और चन्द्र जैसे देवता जिसके द्वारा परास्त किये गये, देववधुओं का कल्याण करने वाले, विषयी देवता जिसके द्वारा पीट-पीटकर भगा दिये गये वही रावण यहाँ आज ऊँची-ऊँची साँसें लेकर लज्जित हो रहा है और इधर अंगदजी का विश्वास जीत रहा है। सूखते मुख वाले, अज्ञानी इन्द्र को जीतने वाले, मेघनाद आदि प्रमुख योद्धा अंगद के चरण को उठाने

में असमर्थ होकर लौट गये और रावण की हँसी भी आँसुओं से गीली हो गयी अर्थात् रोने में बदल गयी और अंगद का विश्वास जीत गया। प्रसन्न हुये देवता पुष्प बरसाने लगे। नृत्य करती हुई देवांगनाएँ प्रसन्न होने लगीं और राक्षसियाँ सूखी हुई लार चाटने लगीं। **गिरिधर** कवि का मुखोल्लास सुशोभित हो रहा है और अंगदजी का विश्वास विजयी हो रहा है।

**विशेष–** यह गीत '**आरती कुंज-बिहारी की**' शीर्षक सुगम संगीतीय ढाल में बद्ध है।

## गीत संख्या-२१

**इदानीमपि मानय दशकण्ठ।।**
**परिहर रामविरोधं क्रोधं भज भगवन्तं विलसितबोधम्।**
**त्यज भगवति पतितं प्रतिशोधं तपस्तुष्टशितिकण्ठ।।१।।**
**नो शक्यो रामो युधि जेतुं सुरासुरैः संयति सञ्जेतुम्।**
**कुणपपुङ्गवैरपि निर्जेतुं मावगम्य विषकण्ठ।।२।।**
**शरणं याहि सपदि रघुनाथं निगमागमकीर्तितगुणगाथम्।**
**करुणामूर्तिं जगदगनाथं स्मर हरकररसकण्ठ।।३।।**
**निर्यातय रामाय विनीतां स्वाहिताय लङ्कामानीताम्।**
**सीतां कविवरगिरिधरगीतां रघुवरशरवशकण्ठ।।४।।**

**भौमी–** फिर अंगदजी रावण से कहते हैं–हे रावण! इस समय भी मान जाओ, अभी कुछ नहीं बिगड़ा है। हे तपस्या से शिवजी को संतुष्ट करने वाले रावण! श्रीराम के प्रति विरोध और उनके प्रति अपना क्रोध छोड़ दो। ज्ञान से सुशोभित भगवान राम का भजन करो और भगवान के प्रति आपतित प्रतिशोध को छोड़ दो। हे विष से भरे कण्ठ वाले रावण! श्रीराम तुम्हारे द्वारा युद्ध में नहीं जीते जा सकते। वे देवताओं और असुरों के संयुक्त युद्ध में भी नहीं जीते जा सकते, इन्हें बड़े-बड़े राक्षस भी नहीं जीत सकते, ऐसे अजेय प्रभु का अपमान मत करो। वेद और पुराणों द्वारा जिनकी कीर्ति का गान किया गया है, ऐसे करुणा के सागर, जड़ों और चेतनों के स्वामी श्रीरघुनाथजी की शरण में जाओ और शिवजी के करकमल से जिसके कंठ को जीवनदान मिला है, ऐसे हे रावण! तुम प्रभु का स्मरण करो। हे रामजी के बाण से वशीभूत कण्ठ वाले! अब तो परम विनम्र, अपने ही अकल्याण के लिए लंका में लायी हुई और **गिरिधर** कवि द्वारा गाई गई सीताजी को श्रीराम को सौंप दो।

## सन्दर्भश्लोकः

**प्रत्यागते वालिसुतेऽथ रामं निर्मथ्य वीर्यं दशकन्धरस्य।**
**सायं गतं सद्म शुचातिखिन्नं मन्दोदरी मन्दमुवाच मन्दम्।।१।।**

**भौमी–** इसके पश्चात् रावण का पराक्रम चूर-चूर करके जब बालिपुत्र अंगद श्रीराम के पास चले आये तब सायंकाल सभा का विसर्जन करके चिन्ता से व्याकुल रावण अपने घर लौटा। फिर मन्दोदरी मन्द बुद्धि रावण को समझाती हुई मन्द स्वर में बोली।

## गीत संख्या-२२

मानय वचनं दशकन्धर मे परिहर रामविरोधं रे।
व्रज हरि शरणं त्यज निजमरणं स्वीकुरु ममानुरोधं रे।।
रामो विग्रहवान् किल धर्मः अकरणकरुणाकूपारः।
एकनारिव्रतरतो महात्मा विलसितमङ्गलसुखसारः।।
भज श्रीरामं जलधरश्यामं कुरु निजमनो निरोधं रे।।१।।
त्वं न राघवं तुलयितुमीशस्त्यज मिथ्या निजदम्भं रे।
किमु खद्योतो दिनकरसदृशो विसृज मुधा संरम्भं रे।।
कलय मनसि सन् मनसिजमधुरं रघुवीरं निष्क्रोधं रे।।२।।
सिन्धुमतार्षीत् तस्य वानरस्त्वं न धनूरेखामतरः।
त्वया न दग्धं हनुमत्पुच्छं स तु ज्वालित त्वन्नगरः।।
श्रीसीतां रामाय समर्पय अनुसर निजावरोधं रे।।३।।
मृतौ द्वौ सुतौ लङ्का दग्धा अधुनापि इच्छा पूरय रे।
भज भर्तर्भौमीभर्तारं मोहमपारं दूरय रे।।
श्रय शरणं गिरिधराभिरामं रामं विलसित बोधं रे।।४।।

**भौमी-** हे रावण! मेरी बात मान जाओ। तुम श्रीराम का विरोध छोड़ दो और प्रभु की शरण में जाओ। अपने मरण की आशंका छोड़ो, मेरा अनुरोध स्वीकार कर लो। श्रीराम विग्रहवान धर्म हैं। वे अहेतुक करुणा समुद्र हैं और वे एक पत्नीव्रती तथा मंगल सुख के तत्व से सुशोभित हैं। ऐसे मेघश्यामल श्रीराम का भजन करो और मन को नियन्त्रित करो। अरे रावण! तुम राघवजी की तुलना नहीं कर सकते। अपना मिथ्या दम्भ छोड़ो। क्या जुगुनूँ सूर्य के समान हो सकता है? अपना क्रोध छोड़ दो और काम के समान मधुर, क्रोधरहित रघुवीरजी को मन में धारण करो। अरे रावण! श्रीराम का वानर तो समुद्र लाँघ गया और तुम लक्ष्मण द्वारा बनाई गई धनुष की रेखा भी नहीं लाँघ सके। तुम हनुमानजी की छोटी-सी पूँछ नहीं जला पाये और हनुमानजी तुम्हारी लंका को भस्मसात करके चले गये। इसलिए हे रावण! श्रीसीताजी को रामजी के हाथों सौंप दो और अपने रनिवास में जाओ। दो पुत्र मर गये, लंका जल गई अभी भी अपनी इच्छापूर्ति कर लो। हे पति रावण! सीतापति श्रीरामजी का भजन करो और अपना अपार मोह छोड़ दो। अतः **गिरिधर** कवि को आनन्द देने वाले भगवान श्रीराम की शरण लो।

## गीत संख्या-२३

रामचन्द्रं शरणमभियाहि विरोधं त्यज रावण।
रघुचन्द्रं शरणमभियाहि स्वक्रोधं त्यज रावण।।
परमकृपालुं दीनदयालुं सञ्जागरितामितनिद्रालुम्।
शोभासान्द्रं शरणमभियाहि विरोधं त्यज रावण।।१।।

निखिलधनुर्धरपरमाचार्यं परमोदारं गुणनिधिमार्यम्।
कोसलेन्द्रं शरणमभियाहि विरोधं त्यज रावण।।२।।
यस्य सदा निजरक्षस्य लज्जा।
यं नहि निन्दति शत्रुसमज्या।।
राघवेन्द्रं शरणमभियाहि विरोधं त्यज रावण।।३।।
करुणां विधाय यो न तनुते रोषं यो नैव ध्यायति गिरिधरदोषम्।
रामभद्रं शरणमभियाहि विरोधं त्यज रावण।।४।।

**भौमी-** हे रावण! श्रीराम की शरण में जाओ और विरोध छोड़ दो। रघुकुल के चन्द्रमा श्रीराम की शरण में जाओ और अपना क्रोध छोड़ दो। परमकृपालु, दीनों पर दया करने वाले और अनेक निद्रामग्न लोगों को जगाने वाले, शोभा के घनीभूत विग्रह श्रीराम की शरण में जाओ और विरोध छोड़ो। सम्पूर्ण धनुर्धरों के परमाचार्य, परम उदार गुणों के महासागर, आर्य भगवान कोसलेन्द्र की शरण में जाओ, विरोध छोड़ दो। जिसको अपनी रक्षणीय की निरन्तर लज्जा रहती है, शत्रुओं की सभा भी जिसकी कभी निन्दा नहीं करती, उन भगवान राघवेन्द्र की शरण में जाओ और विरोध छोड़ दो। जो करुणा करके क्रोध नहीं करते और जो **गिरिधर** कवि के दोषों को नहीं ध्यान में लाते उन रामभद्र की शरण में जाओ, विरोध छोड़ दो।

## सन्दर्भश्लोकः

सर्वेषामुपदेशमञ्जुलसुधाधारागिरोऽवक्षिपन्
यन्मन्दोदरिमाल्यवत् प्रभृतिभिः सञ्जल्पितं भूतये।
चक्रे बन्धुविभीषणोऽपि यतनं सर्वं समाहेल्य तत्
सीताकालनिशामुखे स्म मरणं रोरुच्यते रावणः।।१।।

**भौमी-** जो मन्दोदरी माल्यवान आदि लोगों ने रावण के कल्याण के लिये सुझाव दिये। इन सबकी उपदेशामृत की मधुर धाराओं को एक ओर रखते हुये अर्थात् इनकी कोई चिन्ता न करते हुये किंबहुना भाई विभीषणजी ने भी जो प्रयास किये इन सबकी अवहेलना करके रावण ने श्रीसीतारूप कालरात्रि के मुख में अपने मरण को ही अच्छा माना।

## गीत संख्या-२४

**कविर्गायति-**

रामरावणीयमहोयुद्धमभ्यवर्तत ।
सीताकालनिशाकं विरुद्धमभ्यवर्तत।।
वानरा महाद्रिशिलावृक्षतुङ्गधारिणः।
राक्षसाः प्रचण्डकाण्डशक्तिसम्प्रहारिणः।।
छिन्धि भिन्धि धर मार क्रुद्धमभ्यवर्तत।।१।।

वानरप्रवीरा रणे राघवजयकाङ्क्षया।
यातुधानधीरा रावणाभिमुक्तिवाञ्छया।।
अन्योन्यं प्रहृत्य तद्विरुद्धमभ्यवर्तत।।२।।
कोटिकोटिनिशाचरा हनुमता निपातिता।
लक्षलक्ष राक्षसाश्च लक्ष्मणेन घातिताः।।
रक्षोवानराणां द्वन्द्वयुद्धमभ्यवर्तत।।३।।
जयताच्च रामो रणे भाषन्ते स्म वानराः।
क्षयतात् दशास्यो रणे ब्रूवते स्म निशाचराः।।
गिरिधराभिरामरामबुद्धमभ्यवर्तत ।।४।।

**भौमी-** अब कवि स्वयं गा रहे हैं- अहो! अब श्रीराम और रावण का युद्ध प्रारम्भ हुआ जो सीतारूप काल-निशा को सुख दे रहा था और एक दूसरे के विरुद्ध था। एक ओर वानर विशाल शिला और बड़े-बड़े वृक्षों को धारण किये हुये थे और दूसरी ओर राक्षस भयंकर बाण, शक्ति आदि शस्त्रों से प्रहार कर रहे थे। इस प्रकार काटो, फोड़ो, पकड़ो, मारो आदि शब्दों के प्रयोगों से भरा हुआ क्रोधपूर्ण युद्ध होने लगा। वीर वानर श्रीराम के विजय के आकांक्षी थे और धीर राक्षस सबन्धु-बान्धव रावण की मुक्ति चाह रहे थे। इस प्रकार एक दूसरे पर प्रहार करके विरोधपूर्ण युद्ध चल पड़ा। करोड़ों-करोड़ों राक्षसों को हनुमानजी ने मार डाला और लाखों-लाखों राक्षसों को लक्ष्मण जी ने समाप्त किया। इस प्रकार वानरों और राक्षसों का द्वन्द्व युद्ध होने लगा। 'रामजी की जय हो' इस प्रकार वानर बोल रहे थे। 'रावण की क्षय हो' इस प्रकार राक्षस चिल्ला रहे थे और गिरिधर कवि को आनन्द देने वाले भगवान राम के ज्ञान से यह युद्ध हो रहा था।

## गीत संख्या-२५

जयति रणभुवि महावीरः।
परमवीरः परमधीरः हृदिमहितरघुवंशवीरः।।
समरचनमारुतकुमारः कमनकाञ्चनशैलसारः।
बलनिधी रुद्रावतारः तपनतर्जनतरुणधीरः।।१।।
सुनखपादपकुधरधारी वज्रदेहो ब्रह्मचारी।
जनकतनया शोकहारी भजनधनपावनशरीरः।।२।।
दशमुखान्वयकदनकर्ता भयमहामयमदनहर्ता।
त्रिदशपुङ्गवसदनभर्ता चरणपङ्कजनमितधीरः।।३।।
ललितलघुलाङ्गूलशोभः रामचन्द्रपदाब्जलोभः।
सुकविगिरिधरगीतमङ्गलवपुर्लसन् मनःकुटीरः।।४।।

**भौमी-** परम पूजनीय वीर, परम श्रेष्ठधीर, हृदय में रघुकुल के वीर, श्रीराम की आराधना करने वाले, महावीर हनुमानजी युद्धभूमि में विजयी हो रहे हैं। युद्ध में कुशल वायु के पुत्र सुन्दर स्वर्ण पर्वत के सार सर्वस्व, बल के महासागर, रुद्रावतार, सूर्यनारायण को भी भयभीत करने वाले, धीर युवक, हनुमानजी की जय हो रही है। सुन्दर नख, वृक्ष और पर्वत धारण करने वाले वज्रमय शरीर ब्रह्मचारी जनकनन्दिनी सीताजी का शोक हरने वाले और भगवदभजन के धन से युक्त पवित्र शरीर हनुमानजी की जय हो रही है। रावण वंश का विनाश करने वाले, भय, महान रोग और कामवासना को हरण करने वाले, श्रेष्ठ देवताओं के भवनों की रक्षा करने वाले और धीर मुनियों द्वारा प्रणाम किये हुये चरणकमल हनुमानजी की जय हो रही है। सुन्दर, चंचल, लाल-लाल पूँछ की शोभा से युक्त श्रीरामचन्द्र के चरणकमल में लोभ करने वाले, कवि श्रेष्ठ **गिरिधर** द्वारा गाये हुये मंगलमय विग्रह मनरूप कुटीर को सुशोभित करने वाले महावीर श्रीहनुमानजी महाराज लंका के समरांगण में विजयी हो रहे हैं।

## गीत संख्या-२६

**रावणसुतो मनसि विचार्य।।**
**हन्तुमना विभीषणं प्रति शक्तिमहन् प्रचार्य।**
**वीरघातिनीनामिकां सम्मन्त्र्य गवि सञ्चार्य।।१।।**
**हन्तुमेति विभीषणं लक्ष्मण इति व्यवधार्य।**
**पृष्ठयंस्तं स्वयं सेहे सर्वतः सन्धार्य।।२।।**
**वीरघातिन्याहतो विमुमुर्च्छ बलं विधार्य।**
**भुवि पपात महीधरोऽपि निजैश्वरं विनिवार्य।।३।।**
**वीक्ष्य वानरबलं तस्थौ राघवं सम्वार्य।**
**गिरिधरेश्वरबाहुसेतुं नयनवनमावार्य।।४।।**

**भौमी-** अब महाकवि लक्ष्मण शक्ति-प्रसंग को उपस्थित कर रहे हैं। रावणपुत्र मेघनाद ने मन में विचार करके विभीषण को मारने की इच्छा से पूर्ण अभिमन्त्रित करके अपनी वाणी में संचारित कर वीरघातिनी नामक शक्ति ललकार कर छोड़ दी। यह शक्ति विभीषण को मारने आ रही है, इस प्रकार विचार करके विभीषण को पीछे करते हुये शक्ति को समेटकर लक्ष्मणजी ने सहन कर लिया। वीरघातिनी शक्ति से आहत होकर थोड़ी देर के लिए अपने बल की उपेक्षा करके लक्ष्मणजी मूर्च्छित हो गये। पृथ्वी को धारण करने वाले भी अपना ऐश्वर्य रोककर पृथ्वी पर ही गिर पड़े। **गिरिधर** कवि के ईश्वर श्रीराम के लिये जिनकी भुजा ही सेतु बनी, ऐसे लक्ष्मणजी को मूर्च्छित देखकर उन्हें घेरकर नेत्र से आँसू गिराती हुई वानर सेना वहीं स्थिर हो गई।

## गीत संख्या-२७

**लक्ष्मणं व्रणितं रणे विलोक्य।**
**आनीतं हनुमता पुरो हरिरारुरोद सँल्लोक्य।।१।।**

क्रोडीकृत्य शक्तिजर्जरतनूमीक्ष्यमाण ईशोऽपि।
धैर्यं जहद् रुरोद कृपाधैर्यामृतवारीशोऽपि।।२।।
चुम्बं चुम्बं बन्धोर्वदनं विलपन् वारिजनयनः।
स्वाहाकारचणोऽपि ररौ हाहाकारं सुखचयनः।।३।।
स्मारं स्मारं लक्ष्मणसेवां धीरो धरति न धैर्यम्।
को गिरिधरप्रभुमद्य शीलयेद्रणे विना सोदर्यम्।।४।।

**भौमी-** लक्ष्मणजी को युद्ध में घायल देखकर हनुमानजी द्वारा अपने समक्ष लाये हुये, लक्ष्मणजी को अचेतन अवस्था में निहारकर श्रीहरि भगवान राम फूट-फूटकर रो पड़े। लक्ष्मणजी को शक्ति से जर्जरित देखते हुये कृपाधैर्यरूप अमृत के सागर होते हुये भी भगवान श्रीराम धैर्य छोड़कर फूट-फूटकर रोने लगे। भाई लक्ष्मण का मुख चूम-चूमकर कमलनयन सुख के संग्रह श्रीराम स्वाहाकार में कुशल होकर भी हा-हाकार करने लगे। भाई लक्ष्मण की सेवा का स्मरण करते हुये, धीर होकर भी श्रीराम धैर्य नहीं धारण कर रहे हैं। आज युद्ध में छोटे भाई लक्ष्मण के बिना **गिरिधर** कवि के प्रभु श्रीराम को कौन विश्वास देकर संतुष्ट करे?

## गीत संख्या-२८

मदीयो हतो निखिलपुरुषार्थः।
विना लक्ष्मणं गतस्त्रिवर्गः किमुघटतां परमार्थः।।
शृणु सुकण्ठ साम्प्रतं तु मत्तो विमुखो भाति विधाता।
अस्मिन् समये समरसङ्कटेऽत्याक्षील्लक्ष्मणभ्राता।।१।।
येन मदर्थं त्यक्ता जननी पत्नी पुरजनतातः।
सैव मया कृतघ्नचूडामणिना न हरिजितस्त्रातः।।२।।
प्रयास्यन्ति कपयो गिरिगहनेऽहं त्वनुजं ग्लायामि।
कुत्र गमिष्यति मम विभीषणः शुचानया म्लायामि।।३।।
गिरिधरप्रभुं रुदन्तं चेत्थं वीक्ष्य सचिवसुग्रीवः।
हा हा कृत्वा रुदत् भृषार्तो मुहुः सन्नतग्रीवः।।४।।

**भौमी-** मेरा सभी पुरुषार्थ समाप्त हो गया, जब लक्ष्मण के बिना मेरा त्रिवर्ग अर्थात् धर्म, अर्थ, काम ही चला गया तो मोक्ष कैसे संपन्न हो सकेगा? हे सुग्रीव सुनिये! इस समय विधाता मुझ पर रूठे हैं। ऐसे समय में, युद्ध के संकट में मुझे लक्ष्मण जैसे भाई ने छोड़ दिया। जिन लक्ष्मण के द्वारा मेरे लिये माता, पत्नी, पुरजन और पिता का त्याग किया गया, मुझ कृतघ्न चूड़ामणि ने उन्हीं लक्ष्मण को मेघनाद से नहीं बचाया। वानर पर्वत की गुफाओं में चले जायेंगे, मैं लक्ष्मण का अनुगमन करूँगा, परन्तु मेरे भक्त विभीषण कहाँ जायेंगे? इस चिन्ता से मैं व्याकुल हो रहा हूँ। इस प्रकार **गिरिधर** कवि के स्वामी श्रीराम को रोते देखकर मित्र सुग्रीव अपनी गर्दन झुकाकर हा-हाकार करके आर्त्त स्वर में रोने लगे।

## गीत संख्या-२९

रामो विलपति-

अहं वै सकलानर्थकमूलम्।
यद्धेतोरसहिष्टलक्ष्मणो वीरघातिनीशूलम्।।
त्यक्त्वा राज्यं वनमायान्तं बन्धुर्मामनुयातः।
दारनिमित्तं सोऽपि हापितो मया प्राणप्रियतातः।।१।।
मत्कीर्तिं रक्षता बन्धुना वीरघातिनी सोढा।
घ्नन्ती विभीषणं भ्रात्रा मे हठान्निजोरसि वोढा।।२।।
हतः शक्रयिना समरे किल भानुवंशवरकेतुः।
भग्नो मया समरसागरसन्तरणवाहुवरसेतुः।।३।।
किं वक्ष्यामि सुमित्रां देवीं सतीमुर्मिलां बालाम्।
यस्यै सन्दातास्मि विधिवसात् भर्तृवियोगजहालाम्।।४।।
फणी मणिं मत्स्यः कीलालं यथा विनाप्यतिदीनः।
गिरिधरप्रभुर्लक्ष्मणं त्यक्त्वा जीवति तथैव हीनः।।५।।

**भौमी-** श्रीराम विलाप कर रहे हैं-मैं सभी अनर्थों का मूल हूँ। जिसके कारण मेरे लक्ष्मण ने वीरघातिनी का यह कष्ट सहन किया। राज्य छोड़कर वन में आते हुये मेरे पीछे-पीछे मेरे छोटे भाई लक्ष्मण भी आये। उन प्राणप्रिय अपने भाई को भी मैंने पत्नी के लिये खो दिया। मेरी कीर्ति की रक्षा करने के लिये मेरे भाई लक्ष्मण ने वीरघातिनी शक्ति को सहन किया। यह विभीषण को मारना चाह रही थी, परंतु मेरे भैया ने बीच में आकर इसे अपनी छाती पर ले लिया। अहो! इन्द्रजीत ने सूर्यवंश के श्रेष्ठ केतु लक्ष्मण को क्या युद्ध में समाप्त कर दिया? क्या समर-सागर को पार करने के लिये जिनकी भुजाएँ मेरे लिये सेतु बनीं, क्या उन लक्ष्मण को मैंने खो दिया? मैं माता सुमित्रा से क्या कहूँगा और छोटी अवस्था वाली सती उर्मिला से क्या कहूँगा? जिसको मैं उनके पतिवियोग से उत्पन्न विष देने वाला हूँ। जिस प्रकार मणि को छोड़कर सर्प, जल के बिना मछली, उसी प्रकार **गिरिधर** कवि का प्रभु मैं राम, लक्ष्मण को छोड़कर अत्यंत हीन भावना से जी रहा हूँ।

## गीत संख्या-३०

लक्ष्मण कुत्र यासि मां त्यक्त्वा।
अस्मिन् सङ्कटकलितानेहसि मामुचितं खलु मुक्त्वा।।१।।
त्यक्तो मत्कारणं पिता पत्नी मनस्विनी माता।
सैव साम्प्रतं समरे व्रणितो भवान् कृतज्ञो भ्राता।।२।।

तातं जननीं राज्यं भरतं नैवाहं शोचामि।
काङ्गतिको विभीषणो भवितेत्यहं समनुशोचामि।।३।।
नो चिन्तये जटायुर्मरणं नैव मैथिलीहरणम्।
नैव सिन्धुतरणं कदाप्यहं यथा विभीषणशरणम्।।४।।
स्वर्मयि गते लक्ष्मणे जाते सीता चापि गमिष्यति।
गिरिधरप्रभुमन्तरा विभीषण भक्तो न परिरमिष्यति।।५।।

**भौमी-** हे लक्ष्मण! मुझे छोड़कर कहाँ जा रहे हो? इस संकटपूर्ण समय में मुझे छोड़ना तुम्हारे लिये उचित नहीं है। मेरे कारण आपने पिता, पत्नी और मनस्विनी माता को छोड़ दिया। वही मेरे कृतज्ञ भाई आप इस समय युद्ध में घायल हो गये हैं। मैं पिता, माता, राज्य और भरत की कोई चिन्ता नहीं कर रहा हूँ। परंतु विभीषण की क्या गति होगी, इसी पक्ष पर मैं बहुत चिंतित हूँ। मैं जटायु के मरण पर, सीताजी के हरण पर, समुद्र तरण पर उतना चिंतित नहीं हूँ जितना कि विभीषण की शरणागति के संबंध में चिन्तित हूँ। मेरे स्वर्ग चले जाने पर लक्ष्मणजी चले जायेंगे, सीताजी भी मेरा अनुगमन कर लेंगी, परंतु **गिरिधर** कवि के स्वामी मुझ राम के बिना अनाथ विभीषण सुखी नहीं होंगे।

## गीत संख्या-३१

बन्धुं विना विहतं मम युग्मम्।
धिङ्मां मूढमतिं कृतघ्नकं येन त्याजितमनुपं रुक्मम्।।१।।
किमुत्तरं दद्यां मागध्यै यत्सूनुना घटितमिह युग्मम्।।२।।
क्वायोध्या क्व च नगरी लङ्का वैद्यो वसति शत्रो रावणतुक्मम्।।३।।
गिरिधरप्रभुशिरस्ताडं प्ररोदिति कथमसौ जीवतु पश्यन्न युग्मम्।।४।।

**भौमी-** भाई के बिना मेरी जोड़ी टूट गयी। मुझ मूढ़ मति कृतघ्न को धिक्कार, जिसने ऐसा उपमारहित स्वर्ण खो दिया। अरे! मैं सुमित्रा माता को क्या उत्तर दूँगा, जिनके पुत्र ने यह सुंदर जोड़ी निभाई। कहाँ अयोध्या, कहाँ नगरी लंका और वैद्य भी शत्रु रावण के नगर में रहता है। आज **गिरिधर** कवि के प्रभु श्रीराम सिर पीट-पीटकर रो रहे हैं। अरे! वे अपने को अकेले देखते हुये कैसे जियें?

**विशेष-** यह गीत एक पारंपरिक अवधी लोकगीत के ढाल में निबद्ध है। उसके बोल हैं-

''बंधु बिना बिछुरलि मोरि जोड़ी।''

## सन्दर्भश्लोकः

रुदन्तं राघवं वीक्ष्य बाष्पपर्याकुलेक्षणम्।
जाम्बवान् बोधयामास हनूमन्तं कपीश्वरम्।।१।।

**भौमी-** इस प्रकार आँसुओं से भरे नेत्र वाले राघवजी को रोते हुये देखकर जाम्बवानजी ने वानर श्रेष्ठ हनुमानजी को जगाया।

## गीत संख्या-३२

हनुमान् श्रीराघवं प्रति-

यद्यहं भवदाज्ञामधियायाम्।
तदा चन्द्रमापीड्यचैलवत् पीयूषञ्च गृहीत्वा यायाम्।।१।।
अथवा भुवनावरणं भित्वा भानुं तत्र राहुणा लायाम्।।२।।
किंवा भङ्क्त्वा यम पटुपाशं शीघ्रं सौमित्रयेऽप्यमरतां रायाम्।।३।।
भुवि विपोथ्य मूषकवन्मृत्युं मरणभयात् वैष्णवांश्च पायाम्।।४।।
तथा निदेशं देहि हनुमते यथा च गिरिधरप्रभवे भायाम्।।५।।

**भौमी-** यदि मैं आपकी आज्ञा पा जाऊँ तो चन्द्रमा को वस्त्र की भाँति निचोड़कर अमृत लेकर चला आऊँ। अथवा भुवनों का आवरण भेदकर सूर्य को बाहर करके वहाँ राहु को ढककर लगा दूँ। अथवा यमराज का पाश तोड़कर निद्रित लक्ष्मण को पूर्ण अमरता दे दूँ। अथवा चूहे की भाँति मृत्यु को पृथ्वी पर पटककर सभी वैष्णवों को मरणभय से बचा लूँ, मुझ हनुमान को उसी प्रकार का निर्देश दीजिए जिससे **गिरिधर** कवि के प्रभु आपश्री को मैं भाऊँ।

## गीत संख्या-३३

जाम्बवान् हनुमन्तं प्रति-

हनुमन् द्रोणाचलमेव लाहि सौमित्रयेऽसुदानं प्राहि।।
नत्वा रामं किल गच्छ वीर आगच्छौषधिभिर्महावीर।
गत्वा दूरं पन्थानमेव आनयौषधं हे महादेव।।१।।
प्रभुसङ्कल्पा विघ्नानि दान्तु विपदोविपदो दूरं प्रयान्तु।
तव विजयपताका समाभान्तु सन्तस्तुभ्यं मङ्गलं रान्तु।।२।।
गच्छन् हनुमन्त्वं मा विषीद मायानिशि निष्ठे मा निशीद।
लक्ष्यैकचक्षुरुत्तमोत्सङ्ग उत्सर्गसर्गरामान्तरङ्ग।।३।।
कृतकार्यः शीघ्रं समायाहि लक्ष्मणप्राणदाता प्रभाहि।
रामायणमालारत्नरम्य जय जय हनुमन् गिरिधरप्रणम्य।।४।।

**भौमी-** अब जाम्बवान हनुमानजी के प्रति कहते हैं-हे हनुमान! आप द्रोणाचल पर्वत ले आओ, लक्ष्मणजी को प्राणदान दो। हे वीर! श्रीराम को प्रणाम करके जाओ और हे महावीर संजीवनी औषधि के साथ आओ। यह मार्ग दूर मानकर भी हे महादेव! आप जाकर औषधि अवश्य ले आएँ। भगवान के संकल्प सारे विघ्नों को नष्ट कर दें और विपत्तियाँ विशिष्ट गति के साथ दूर चली जाएँ। आपकी विजय पताकाएँ सदा शोभित रहें, सन्त आपके लिये मंगल प्रदान करें। हे हनुमान! जाते हुये तुम्हें किसी प्रकार का कष्ट न हो। इस मायारात्रि

में निम्न स्थान में भूलकर भी मत बैठो, लक्ष्य को एकमात्र नेत्र मानकर सर्वोत्तम प्रभु की गोद में विराजने वाले, त्याग को ही अपना स्वभाव बनाने वाले, श्रीराम के अंतरंग सेवक कार्य करके शीघ्र आइये और लक्ष्मणजी को प्राण दानकर सुशोभित होइये। हे रामायणमाला के सुंदररत्न, हे **गिरिधर** कवि के द्वारा प्रणम्य हनुमानजी! आपकी जय हो, जय हो।

**विशेष-** इसे मालकौश और केदारा में गाना चाहिये।

## सन्दर्भश्लोकः

**हत्वाऽसौ कालनेमिं पथिदुरितकरं पर्वतेशञ्च गत्वा**
**प्राप्तायोध्यः सशैलो भरतशरहतो मूर्छितो बोधितश्च।**
**सम्भाष्यैनं हनूमान् अथ च ददृशिवान् राममात्रा सुमित्रा**
**मागध्या रामसाह्यो रिपुकुलदमनः प्रेषितः तत्र गन्तुम्।।१।।**

**भौमी-** मार्ग में विघ्न करने वाले, कालनेमि को मारकर और द्रोणाचल के पास जाकर, औषधि के साथ अयोध्या के पास पहुँचकर पुनः भरतजी द्वारा बाण से घायल होकर हनुमानजी मूर्च्छित हुये। पुनः श्रीभरत द्वारा जगाये गये। उनसे वार्तालाप करके हनुमानजी ने कौसल्या के सहित सुमित्रा को देखा। पुनः मगधवंशा सुमित्राजी शत्रुओं के नाश के लिये श्रीराम के सहायार्थ शत्रुघ्न को भी भेजने लगीं।

## गीत संख्या-३४

सुमित्रा प्राह शत्रुघ्नम्-

**हे शत्रुसूदन रघूत्तमचरणमभिगमनं विचारय हे।**
**गच्छाशु लङ्कामशङ्को हनूमता शत्रून् प्रचारय हे।।**
**राघवस्य कार्ये समाहतस्ते वरीयान्।**
**धन्यं धन्यमकार्षीत् स्वजीवनं गरीयान्।।**
**तमनुगच्छ गच्छाशु लङ्कारणाङ्गणं राममलङ्कारय हे।।१।।**
**धन्यं मम जठरं लक्ष्मणो यतो जातः।**
**रामसेवाहुतात्मा महात्मा त्वभिजातः।।**
**त्वमपि तदीयां पदवीं प्रयाहि हे ललन प्रभुं धृति धारय हे।।२।।**
**मा विलम्बं कृथा मा स्म प्राक्षीः श्रुतिकीर्तिम्।**
**गिरिधरप्रभौ कुरु मनोरथानां पूर्तिम्।।**
**सीताचित्तचातकसजलश्यामघनसेवकत्वं प्रधारय हे।।३।।**
**मेघनादं संहर समाहर सुचित्तम्।**

**रामपादपङ्कजे उपाहरात्मवित्तम्।।**
**साकमाञ्जनेयेन व्रज सज्जनैकधन जीवनं सुधारय हे।।४।।**

**भौमी-** अब सुमित्रा जी शत्रुघ्नजी से कहती हैं–हे शत्रुघ्न! श्रीराम के चरण में जाने का विचार करो और हनुमानजी के साथ निर्भीक होकर लंका जाओ और वहाँ शत्रुओं को ललकारो। हे शत्रुघ्न! श्रीराम की सेवा में तुम्हारे बड़े भाई समाप्त हो गये। उन श्रेष्ठवीर ने अपने जीवन को धन्य कर लिया। इसलिये तुम लक्ष्मण का अनुगमन करो, शीघ्र लंका के समरांगण में जाओ और अपनी उपस्थिति से श्रीराम को शोभित करो। मेरी कोख धन्य है, जहाँ लक्ष्मण उत्पन्न हुये। उन्होंने श्रीराम की सेवा में अपने शरीर को ही हवन कर दिया क्योंकि वे जन्मना महात्मा थे। तुम भी उनकी पदवी का अनुसरण करो और श्रीराम जैसी धृति धारण करो। हे शत्रुघ्न! विलम्ब मत करो। श्रुतकीर्ति से मत पूछो। **गिरिधर** के प्रभु श्रीराम से ही अपने मनोरथों की पूर्ति करो और सीताजी के चित्तरूप चातक के जलयुक्त श्याम बादल श्रीराम के प्रति सेवकत्व का पालन करो। युद्ध में मेघनाद का वध करो। अपने चित्त को समाहित कर लो। श्रीराम के चरणकमल में आत्मारूप धन को उपहृत कर लो। हे सज्जनों के एकमात्र धन शत्रुघ्न! हनुमानजी के साथ शीघ्र जाओ और अपना जीवन सुधार लो।

## सन्दर्भश्लोकः

**ततो महावीरमुवाच धीरा नीरं वहन्ती शतपत्रनेत्रे।**
**निवार्य शत्रुघ्नमनुव्रजन्तं श्रीराममाता हनुमन्तमीड्या।।१।।**

इसके पश्चात् हनुमानजी के पीछे-पीछे लंका की ओर जाते हुए शत्रुघ्नजी को रोककर स्तुति करने योग्य अत्यंत धीर भगवान राम की माता कौसल्याजी कमलनेत्र में आँसू भरकर महावीरजी को संबोधित करती हुयी इस प्रकार बोलीं–

## गीत संख्या-३५

**कौसल्या हनुमन्तं प्रति-**

**हनुमन् राघवं प्रतियाहि।।**
**एक एव विलम्ब मा कालं स्वकं सम्माहि।**
**वाचिकं मे वाग्मिनं रघुचन्द्रमेवाख्याहि।।१।।**
**यदपि वत्स कदवसरे त्वं लक्ष्मणेन विनाद्य।**
**वैरिणं मोपेक्ष्य तदपि कदापि हे निरवद्य।।२।।**
**एहि लक्ष्मणयुतोऽयोध्यां हतदशास्यो राम।**
**लक्ष्मणेन विना ललितमथ लगति नहि तव नाम।।३।।**
**समं लक्ष्मणजानकीभ्यां पुरमवधमागच्छ।**
**कोसलानधिवसन् कुशली गिरिधरं संरक्ष।।४।।**

**भौमी-** अब कौसल्याजी हनुमानजी से बोलीं-हे हनुमान! तुम अकेले श्रीराम के पास जाओ। मार्ग में विलंब मत करो। अपना समय संभाल लो और प्रशस्त वाणी से सम्पन्न श्रीरामचन्द्रजी से मेरा एक संदेश कह देना। हे वत्स! यद्यपि आज लक्ष्मण के बिना तुम बहुत बुरे समय में फँस गये हो फिर भी हे निष्पाप! शत्रु की कभी भी उपेक्षा मत करना। हे राघवेन्द्र! रावण को मारकर लक्ष्मण के साथ अयोध्या लौटकर आना क्योंकि लक्ष्मण के बिना तुम्हारा नाम सुंदर नहीं लगता। लक्ष्मण और सीता के साथ अवधपुरी आओ और श्रीअवध में सकुशल निवास करते हुए **गिरिधर** कवि की भी रक्षा करो।

**विशेष-** यह गीत रूपक ताल में निबद्ध है। इसे वागेश्री में गाना चाहिये।

## सन्दर्भश्लोकः

**प्रणम्य जननीं हरेर्भरतभावितो धीधनो**
**रघूत्तममुपागतः प्रणिनिधाप्य सञ्जीवनीम्।**
**स लक्ष्मणमुखे कपिः शमितरामचित्तातुरि-**
**स्तुरीयपरिलालितो विजयतेऽञ्जनानन्दनः।।१।।**

**भौमि-** परम बुद्धिमान हनुमानजी श्रीराम की माता कौसल्याजी को प्रणाम करके भरतजी से सम्मानित होकर श्रीराम के पास आकर लक्ष्मणजी के मुख में संजीवनी देकर श्रीरामजी की चिंता और आतुरता को समाप्त करके तुरीय अर्थात् तुरीयावस्था के विभु भगवान राम से दुलार पाकर अंजनानंदवर्धन हनुमानजी सब प्रकार से विजयी हो रहे हैं।

## गीत संख्या-३६

**कविर्गायति-**

**व्रणस्तु मम हृदये पीडा च रघुवीरे।।**
**लब्धौषधिर्जीवितो लक्ष्मण आह दृशौ श्रितनिर्मलनीरे।।१।।**
**समाहिता सकला च समस्या हनूमता विलपति रणधीरे।।२।।**
**श्रीराघवे निरस्तलाघवे शोककण्टकितसुभगशरीरे।।३।।**
**हनिष्यामि राक्षसानेकलो राजति रघुवरवंशप्रवीरे।।४।।**
**सह सीतया विहरताद्रामो नित्यं गिरिधरनयनकुटीरे।।५।।**

**भौमि-** अब स्वयं कवि गा रहे हैं- हनुमानजी से औषधि प्राप्त करके, पुनर्जीवित होकर, निर्मल नेत्र में जलभरकर श्रीलक्ष्मण बोल पड़े-घाव तो मेरे हृदय में हुआ है पर पीड़ा श्रीरघुवीर को हुयी है। रणधीर श्रीराम के विलाप करते रहने पर ही हनुमानजी के द्वारा संपूर्ण समस्याओं का समाधान हो गया। लघुता का निरसन करने वाले, शोक से पुलकित शरीर, श्रीराघव के विद्यमान रहते ही सारे संकटों के बादल छट गये। अब तो रघुवंशवीर श्रीराघव के देखते-देखते मैं अकेले संपूर्ण राक्षसों का वध कर दूँगा और सीताजी के सहित भगवान राम **गिरिधर** कवि के नेत्ररूप कुटीर में नित्य विहार करते रहें।

## उपसंहारश्लोकः

**विलोक्य सञ्जीवितमेव लक्ष्मणं समेत्यरामः श्रुतवल्गुभाषणः।**
**पुनर्हनूमन्तमुदूह्य वक्षसा प्रहर्षयामास कपीन् रघूद्वहः।।१।।**

**भौमी–** अब कवि उपसंहार श्लोक प्रस्तुत करते हैं। इस प्रकार लक्ष्मणजी को सम्यक्–जीवित देखकर और उनसे मिलकर तथा लक्ष्मणजी का सुंदर भाषण सुनकर पुनः हनुमानजी को हृदय से लगाकर भगवान श्रीराम ने संपूर्ण वानरों को प्रसन्न कर दिया।

**इति**
**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये युद्धकाण्डे**
**गीतरणकर्कशो नाम प्रथमः सर्गः**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के युद्धकाण्ड में गीतरणकर्कश नामक प्रथम सर्ग संपन्न हुआ।

**।।श्रीराघवः शन्तनोतु।।**

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये युद्धकाण्डे

## गीतरावणारिर्नाम

## द्वितीयः सर्गः

### मङ्गलाचरणम्

किं विग्नोऽर्यस्तसैन्यः किमवनितनया चोरिता किन्न भुक्ता
सा वै रामैकनिष्ठा स नहि किमभवो नास्मि शक्तस्तथात्वे।
स्वान्ते श्रीरामरूपे लसति मम समा योषितो मातृरूपाः
भान्तीत्थं रावणेन स्तुतशुभचरितो राघवो रातु शन्नः।।१।।
तूणीरे द्रढयन् जटाः सुजटयन् कोदण्डमासज्जयन्
नाराचान् परितेजयन् हृदि लषन् सीतां मणिं मानयन्।
चण्डीशं स्त्रजयन् भुवं सुभवयन् हृष्यन् बलं व्यूहयन्
रायाद्रावणरावणोद्यमपरो रामः सतां मङ्गलम्।।२।।

**भौमी–**यहाँ कवि कुम्भकर्ण रावण के संवाद व्याज से प्रभु के उदात्त चरित का स्मरण करते हुए आशीर्वादात्मक मंगलाचरण प्रस्तुत करते हैं। हनुमानजी के प्रयास से लक्ष्मणजी की मूर्च्छा समाप्त होने के पश्चात् रावण ने कुम्भकर्ण को जगाया। रावण को उदास देखकर कुम्भकर्ण ने प्रश्न किया किं विग्नः– अरे भाई! आज तुम इतने उद्विग्न क्यों हो? रावण ने कहा अर्यस्त सैन्यः–शत्रु राम ने मेरी सेना को समाप्त कर डाला। किं–? क्यों अवनितनया चोरिता– क्योंकि मैंने पृथ्वीपुत्री सीताजी को चुरा लिया, इसीलिए श्रीराम ने मुझ पर आक्रमण किया और युद्ध में उनकी वानर सेना द्वारा हमारी सेना मार डाली गई। कुम्भकर्ण ने पूछा–किं न भुक्ता– यदि तुमने सीताजी का हरण किया ही था तो उन्हें अपनी पटरानी क्यों नहीं बना ली? रावण ने कहा–सा वै रामैकनिष्ठा सीताजी की निष्ठा एकमात्र श्रीराम में हैं। इसी से मैं उन्हें समझाने में सफल नहीं हुआ। नलकूबर के शाप के कारण सीताजी पर मैं बल का प्रयोग भी नहीं कर सकता था क्योंकि ऐसा करने पर मेरे सिर के दो टुकड़े हो जाते। कुम्भकर्ण ने पूछा– स नहि किम भवः– तुम तो मायावी थे, तुम माया के बल से श्रीराम क्यों नहीं हो गए, श्रीराम का रूप क्यों नहीं धारण कर लिया? रावण ने उत्तर दिया– नास्मि शक्तस्तथात्वे– मैं श्रीराम नहीं बन सकता क्योंकि किसी भी माया के बल से श्रीराम का रूप धारण नहीं किया जा सकता। स्वान्ते श्रीरामरूपे लसति मम समा योषितो– मातृरूपा भान्ति– किं बहुना–श्रीराम रूप धारण करना तो बहुत दूर है जो मैं नहीं कर पाऊँगा, यहाँ तक कि जब मैं श्रीराम रूप का चिन्तन भी करता हूँ और मेरे अन्तःकरण में जब मेघवर्णी श्रीराम का श्यामलरूप स्फूर्ति होने लगता है उस समय संसार की सभी

स्त्रियाँ मुझे माता के रूप में दिखने लगती हैं। इत्थं रावणेन स्तुतशुभचरितः राघव नः– इस प्रकार रावण के द्वारा जिनके शुभचरित की स्तुति की गई है, ऐसे श्रीराघव भगवान राम हम सबको मंगल प्रदान करें। दोनों तरकशों को कटि में दृढ़ता से कसते हुए जटा को ठीक–ठीक बाँधते हुए धनुष पर प्रत्यंचा चढ़ाते हुए बाणों को पत्थरों पर घिसकर नुकीला बनाते हुए, हृदय में सीताजी की इच्छा करते हुए, कौस्तुभमणि का सम्मान करते हुए, शिवजी को अपने बाणों से काटे हुए रावण के शिरों को माला पहनाते हुए, पृथ्वी का कल्याण करते हुए, स्वयं रोमांचित होते हुए वानरी सेना का व्यूह बनाते हुए, ऐसी क्रियाओं द्वारा रावण को रुलाने के उद्यम में लगे हुए परमात्मा परब्रह्म भगवान् श्रीराम सन्तों को मंगल प्रदान करें।

## गीत संख्या–१

**रावणेन बोधितः कुम्भकर्णो रावणं प्रति–**

**राघवमेव शरणं यामि।**
**कोटि तीर्थपसदृश हरिशरतो मरणमुपयामि।।**
**देहि मेऽनुज्ञां दशानन क्वापि नैव द्रामि।**
**बोधितः सुप्तोत्थितो नो पुनरहं निद्रामि।।१।।**
**राममेव विलोक्य लोचनपापमपानुदामि।**
**सुजनचन्द्रविधुन्तुदं स्वं संयुगेऽद्य तुदामि।।२।।**
**प्रेक्ष्य सीतापतिं पतितो निजपतिं वरयामि।**
**खरद्विड्गुणगणगरिम्णा स्वान्तमपि गरयामि।।३।।**
**यामि गिरिधरप्रभुं शरणं त्वत्पदं श्लिष्यामि।**
**रामविधुमुखमद्य दृष्ट्वा नैव ते पश्यामि।।४।।**

**भौमी–** मैं श्रीराम की ही शरण में जा रहा हूँ। करोड़ों तीर्थों के समान पावन श्रीराम के बाणों से ही मैं मरण के समीप जाऊँ। हे रावण! अब मुझे अनुमति दो मैं कहीं भी कुत्सित कार्य न करूँ। पहले सोता रहा, बीच में ही तुमने जगा दिया। अब सोकर, फिर नहीं सोऊँगा श्रीराम के दर्शन करके आज मैं नेत्रों के पापों को नष्ट करूँगा और आज युद्ध में ही सज्जन रूप चन्द्रमा के राहुस्वरूप अपने को ही युद्ध में पीड़ित करूँगा। अर्थात् प्रभु राम के बाणों को सहूँगा कोई वास्तविक प्रतिक्रिया नहीं करूँगा। पतित होकर भी मैं सीतापति श्रीराम के दर्शन करके उन्हीं को पति रूप में वरण करूँगा। और खर के शत्रु श्रीराम के गुणगणों की गरिमा से अपने मन को ही गौरवशाली बना लूँगा। अब मैं **गिरिधर** कवि के प्रभु श्रीराम के शरण में जा रहा हूँ। तुम्हारा चरण छू रहा हूँ। श्रीराम के मुखचन्द्र के दर्शन करके फिर तुम्हें कभी नहीं देखूँगा।

**विशेष–** यह गीत रूपकताल में निबद्ध है।

## गीत संख्या–२

**गच्छन् पथि प्रणमन्तं विभीषणं प्रति कुम्भकर्णः–**

**याहि रे रामं शरणं याहि।।**
**मा विलम्बय भो विभीषण सुखं स्वस्मै राहि।**

पार्वतीपतिपूज्यमित्वा यातुधानान् पाहि।।१।।
कर्मणा मनसा च वाचा राममनुचर तात।
मा छलं कार्षीः प्रभुं प्रति किल विहितशुभजात।।२।।
अनुज्ञाप्य दशाननं रामं शरणमिह यामि।
अलं मामनुरुध्य वत्स निजाध्वकं मृगयामि।।३।।
कुम्भकर्णः कुम्भकर्णे हरिसुधां कलयामि।
व्रजन् परलोकं हरेश्चरितं च सम्बलयामि।।४।।
रावणं मा शोच गिरिधरप्रभोश्चरणं गच्छ।
सुखी भव राजन् विभीषण कुणपवंशं रक्ष।।५।।

**भौमी-** युद्ध के लिए जाता हुआ कुम्भकर्ण मार्ग में मिलकर प्रणाम करते हुए विभीषण के प्रति कहता है। अरे विभीषण! जाओ श्रीराम की शरण में जाओ। अरे विभीषण! मत विलम्ब करो, स्वयं को सुख प्रदान करो, पार्वती के पति शिवजी के भी पूज्य श्रीराम को प्राप्त करके राक्षसों की रक्षा कर लो। हे तात! कर्म से, मन से, वाणी से, श्रीराम की सेवा करना। प्रभु के प्रति किसी प्रकार का छल मत करना। मैं रावण से अनुज्ञा लेकर रामजी की शरण में जा रहा हूँ। अब मुझसे अनुरोध करना भी व्यर्थ है। मैं अब अपना मार्ग ढूँढ़ रहा हूँ। मैं कुम्भकर्ण हूँ, इसलिए कुम्भ अर्थात् घड़े के समान अपने कान में भगवान की कथा-सुधा का संचय करूँगा और परलोक में जाता हुआ भी मैं श्रीहरि के चरित को पाथेय बना रहा हूँ। रावण की कोई चिन्ता न करके अब तुम **गिरिधर** प्रभु श्रीराम के चरण में जाओ। हे राजन विभीषण! सुखी होओ और राक्षस वंश की रक्षा करो।

## गीत संख्या-३

कुम्भकर्णो राघवं पश्यन्-

हरन् मच्चित्तगारल्यं अहो श्रीराम माधुर्यम्।
दिशन् मे स्वान्तसारल्यं अहो घनश्याम सौन्दर्यम्।।१।।
निसर्गात् पातकी पश्यन्नहं रामं सुखी जातः।
दिशन् मे चित्ततारल्यं अहो जितकामसौन्दर्यम्।।२।।
न तृप्तिं याति मे स्वान्तं प्रभोः रूपं विलोकयतः।
हरन् मे चित्तचाञ्चल्यं अहो सुखधामसौन्दर्यम्।।३।।
इयं नो कल्पना धातुः सुसृष्टिर्लक्ष्मणभ्रातुः।
तुदन् मे क्रूरचापल्यं अहो रघुरामसौन्दर्यम्।।४।।
विचित्रं स्नेहकारुण्यं पवित्रं देहि तारण्यम्।
नुदद् गिरिधरमनःशल्यं अहो अभिरामसौन्दर्यम्।।५।।

**भौमी-** कुम्भकर्ण श्रीराघव को देखता हुआ-अहो मेरे चित्त के विष को चुरा रहा श्रीराम का माधुर्य कितना अपूर्व है? मेरे मन को सरलता प्रदान कर रहा मेघवर्णी श्रीराम का सौन्दर्य कितना अद्भुत है? अरे!

स्वभाव से पापी मैं कुम्भकर्ण प्रभु श्रीराम को देखता हुआ सुखी हो गया। मेरे चित्त को तरल बना रहा, काम विजेता भगवान राम का कितना अद्‌भुत सौन्दर्य है? प्रभु का रूप देखते हुए मेरे मन को तृप्ति नहीं हो रही है। मेरे चित्त की चञ्चलता को दूर करता हुआ। सुखधाम श्रीराम का सौन्दर्य कितना अपूर्व है? अरे! यह ब्रह्मा की कल्पना नहीं है। अहो लक्ष्मण के भ्राता श्रीराम की यह अपनी सृष्टि है। मेरे क्रूर चपलता को नष्ट करता हुआ रघुकुल को रमाने वाले प्रभु राम का सौन्दर्य कितना अद्‌भुत है? अहो! प्रभु का स्नेह और कारुण्य कितना विचित्र है? प्रभु के शरीर की पवित्रता कितनी विचित्र है और **गिरिधर** कवि के मन के कष्ट को दूर करता हुआ श्रीराम का सौन्दर्य कितना प्यारा है।

## गीत संख्या-४

**इमं प्रकटय्य रघुचन्द्रं निशल्या भाति कौसल्या।**
**इमं निकटय्य प्रभुचन्द्रं विशल्या भाति कौसल्या।।**
**असितनीरजघनश्यामं विभाव्रीडितविविधकामम्।**
**इमं प्रकटय्य श्रीचन्द्रं निशल्या भाति कौसल्या।।१।।**
**नखादाशिखं निरवद्यं स्मरणविनिहतजनावद्यम्।**
**इमं प्रकटय्य हरिचन्द्रं निशल्या भाति कौसल्या।।२।।**
**अहो रामस्य सौन्दर्यं रणेऽपि त्यजति नो धैर्यम्।**
**इमं प्रकटय्य सुरचन्द्रं निशल्या भाति कौसल्या।।३।।**
**अहो रामस्य कारुण्यं अहो रामस्य तारुण्यम्।**
**इमं प्रकटय्य नरचन्द्रं निशल्या भाति कौसल्या।।४।।**
**प्रणतजनतामनोरामं सुकविगिरिधरदृगभिरामम्।**
**इमं प्रकटय्य भूचन्द्रं निशल्या भाति कौशल्या।।५।।**

**भौमी–** रघुकुल के चन्द्रमा श्रीराम को प्रकट करके संसार की पीड़ा से रहित कौसल्या बहुत सुन्दर लग रही हैं और प्रभुओं को भी आह्लादित करने वाले उन श्रीराम को हमारे निकट करके कौसल्या की दुःख से रहित प्रतीत हो रही हैं। नीले कमल और मेघ के समान श्यामल अपनी कान्ति से करोड़ों कामों को लज्जित करने वाले श्रीजी को भी आह्लादित करने वाले इन श्रीराम को प्रकट करके भगवती कौसल्या सांसारिक पीड़ा से रहित होकर सुशोभित हो रही हैं। नख से शिखापर्यन्त पापरहित स्मरणमात्र से भक्तों का पाप नष्ट करने वाले इन हरि अर्थात् सूर्य-चन्द्र-अग्नि-वायु-यम इन्द्र किं बहुना विष्णु को भी आह्लादित करने वाले, इन श्रीराम को प्रकट करके, सभी पीड़ा दूर करके कौसल्या जी सुशोभित हो रही हैं। अहो! अद्‌भुत है, श्रीराम का सौन्दर्य युद्ध में भी जो अपना धैर्य नहीं छोड़ रहे हैं। इन्हीं देवताओं को आह्लादित करने वाले प्रभु को प्रकट करके सभी दुःखों से रहित कौसल्या सुशोभित हो रही हैं। अद्‌भुत है श्रीराम की करुणा और अनुपम है श्रीराम की युवावस्था। मनुष्यों को आह्लादित करने वाले इन श्रीराम को प्रकट करके सभी मन पीड़ाओं से रहित कौसल्या सुशोभित हो रही हैं। शरणागतजनों के मन को आनन्द देने वाले और कवि श्रेष्ठ **गिरिधर** के नेत्रों को सुखी करने वाले इन पृथ्वी के आह्लादक श्रीराम को प्रकट करके तीनों तापों से रहित कौसल्या सुशोभित हो रही हैं।

## गीत संख्या-५

कुम्भकर्णो ब्रह्माणं प्रति-

कथमनेन युद्धेय विधातः।।
निष्ठुरं हि संयोगं दत्त्वा किमु त्वं शठो न जातः।
वनगमनं सीताहरणं किं भवता कृत उत्पातः।।१।।
भरतमातृमन्थरामती संप्रेर्य कृतोऽस्ति कुघातः।
मन्ये कमलदलं विद्धं हा विधे पविशलाकातः।।२।।
यं दृष्ट्वा सङ्कुचति रविः शिशिरति खरकिरणव्रातः।
तस्मिन् मया कथं क्रियतां गिरिपादपमुष्टिनिपातः।।३।।
किं करवाणि विसङ्कटसङ्कटमहं साम्प्रतं यातः।
गिरिधरहृद्गहने लीयस्व सपदि हे भरतभ्रातः।।४।।

**भौमी–**हे विधाता! मैं इन श्रीराम से कैसे युद्ध करूँ? यह निष्ठुर संयोग देकर विधाता क्या तुम निष्ठुर नहीं बन गए हो? अरे! इनका वनगमन सीताजी का हरण तुमने क्या यह उत्पात नहीं किया? अरे विधाता! तुमने ही तो सरस्वती द्वारा भरत की माता कैकेयी और मन्थरा की बुद्धि को भ्रष्ट कराकर कुघात किया। मुझे तो लगता है कि तुमने वज्र की सलाई से कमलदल को वेध दिया। अरे! जिन्हें देखकर सूर्यनारायण भी संकुचित होकर अपने कठोर किरणों के समूह को शीतल कर देते हैं। अरे विधाता! उन्हीं उत्पन्न कोमल प्रभु पर मैं पर्वत गुहा और मुष्टिका का प्रहार कैसे करूँगा? मैं कुम्भकर्ण क्या करूँ? इस समय बहुत बड़े संकट में पड़ गया हूँ। अतः हे भरत के बड़े भैया! अब तो आप **गिरिधर** कवि के हृदय वन में ही छिप जाइए।

## गीत संख्या-६

भवतु क्रियतां रणकर्म कठोरम्।
सङ्कोचं त्यक्त्वा विधीयतां हरिणा युद्धं घोरम्।।
आयुधपातं समभिनयन् हरिगात्रं नो व्रणयिष्ये।
दर्शं दर्शं प्रभुमुखकमलं रणक्षणं क्षणयिष्ये।।१।।
कोटिकोटिकपिवीरऋक्षकान् प्रसभं मुखे भरिष्ये।
संह्लादयन् समररसिकान् रणकौशलमहं करिष्ये।।२।।
त्यक्ष्याम्यशून्योधयन् रामं सुरदुष्कररणयागे।
तरिष्यामि नूनं गिरिधरप्रभुः सायकपुण्यप्रयागे।।३।।
करिष्यते रामेण मया सह सुरभीषणरणलीला।
तरिष्यते भवसागरमनया जनमण्डली सुशीला।।४।।

**भौमी–**अब मेरे द्वारा कठोर रणकर्म किया जाय। अब संकोच छोड़कर श्रीहरि के साथ मैं घोर युद्ध करूँ। मैं शस्त्र के प्रहार का नाटक करता हुआ प्रभु के शरीर को घायल नहीं करूँगा। श्रीहरि का मुखकमल निहार–

निहार कर युद्ध के क्षणों को उत्सव में परिवर्तित कर लूँगा। करोड़ो-करोड़ों वीर वानर और भालुओं को मुख में भर लूँगा। युद्ध के रसिकों को आह्लादित करता हुआ मैं युद्ध का कौशल करूँगा। देवों द्वारा भी न किए जा सकने वाले इस युद्ध-यज्ञ में श्रीरामजी को लड़ाता हुआ मैं अपने प्राणों को छोड़ दूँगा और निश्चित ही मैं **गिरिधर** कवि के प्रभु श्रीराम के बाणरूप पवित्र प्रयाग में तर जाऊँगा। श्रीराम मेरे साथ देव-दुर्लभ युद्ध-लीला करेंगे और सुशील भक्त मण्डली इसे गा-गाकर भव सागर से तर जायेगी।

## गीत संख्या-७

**कविर्गायति-**

**राजति लङ्कारणभुवि रामः।**
**निखिललोकलावण्यलालितो विभाविनिन्दितशतशतकामः।।१।।**
**अरुणचरणराजीवपीतवल्कलकटिमण्डितरुचिरनिषङ्गः।**
**करतलकलितरुचिरशरचापो विलसितयौवनतरलतरङ्गः।।२।।**
**श्रीवत्साङ्कितितुलसिमालिकामण्डितकलकपाटवरवक्षाः।**
**सिंहस्कन्धो मांसलपरिघसमानबाहुवरमर्दितरक्षाः।।३।।**
**कम्बुग्रीवो जीवितजीवो भूषणमयकपोतकलकण्ठः।**
**बिम्बाधरो विमलविधुवदनो मधुरमूर्तिमोहितशितकण्ठः।।४।।**
**मसृणकपोलः कुण्डललोलः कीरनासिको नीरजनयनः।**
**गिरिधरप्रभुः सकलसौन्दर्यः सीताहृदयकमलकृतशयनः।।५।।**

**भौमी-** अब कवि स्वयं गा रहे हैं-सम्पूर्ण लोकों की सुन्दरता से पालित अपनी कान्ति से कोटि-कोटि कामों को लज्जित करने वाले भगवान राम लंका के समरांगण में सुशोभित हो रहे है। प्रभु के कमल के समान श्रीचरण हैं तथा उनके कटि तट पर पीला वल्कल और सुन्दर तरकस है। हाथ में अत्यन्त प्यारे धनुष-बाण और प्रभु में युवावस्था की तरल तरंगें भी शोभित हो रही हैं। श्रीवत्सलाञ्छन से चिन्हित और तुलसी माला से सुशोभित किवाड़ के समान चौड़ा वक्षस्थल तथा सिंह के जैसा स्कन्ध एवं प्रभु ने स्थूल तथा परिघ के समान बाहु से राक्षसों का मर्दन किया है। शंख के समान प्रभु का गला और जीवों को भी जीवन देने वाले प्रभु राम का आभूषणों से सुशोभित कबूतर के गले के समान कंठ, बिम्बजल के समान अधर, निर्मल चन्द्रमा के समान मुख है और श्रीराघव अपनी मधुर मूर्ति से शिव जी को भी मोहित कर रहे हैं। प्रभु का कपोल बहुत चिकना और उनके कुंडल चंचल हैं। उनकी तोता के चोंच के समान नासिका और कमल के समान नेत्र हैं। इस प्रकार संपूर्ण सौंदर्यमय सीताजी के हृदय-कमल में शयन करने वाले **गिरिधर** कवि के स्वामी श्रीराम लंका के समरांगण में विराजमान हैं।

## गीत संख्या-८

**नारदो गायति-**

**रणाङ्गणे राघवो विजयते।।**
**निहतकुम्भकर्णो धृतकरणो मनुवरणो मानवो विजयते।।१।।**

वानरभल्लुवरूथवल्गितो दलितदृप्तदानवो विजयते।।२।।
रुधिरकणाङ्कितनीलशरीरो ललितहस्तलाघवो विजयते।।३।।
अरुणपक्षिपक्षिततमाल इव रणधीरोऽलाघवो विजयते।।४।।
कोदण्डाश्रितशरंसंस्पृशन् रिपुवारिधिवाडवो विजयते।।५।।
गिरिधरगीतयशा नारदसर्वस्वं करुणार्णवो विजयते।।६।।

**भौमी-** अब प्रभु को देखकर नारद जी गा रहे हैं–रणांगण में श्रीराम राघव विजयी हो रहे हैं। कुंभकर्ण को मारकर स्वस्थ इन्द्रियों वाले मंत्रों के वरणीय मनुवंश में प्रकट श्रीराम विजयी हो रहे हैं। वानरों, भालुओं की गर्जना से सुशोभित अहंकारी दानव कुंभकर्ण का वध करने वाले प्रभु श्रीराम विजयी हो रहे हैं। प्रभु का नीलवर्णी शरीर कुम्भकर्ण के खून के छीटों से भर गया है। ऐसे लालित्यपूर्ण हस्तलाघव वाले श्रीराम विजयी हो रहे हैं। लाल चिड़ियों से सुशोभित तमाल वृक्ष के समान सांसारिक लघुता से रहित रणधीर श्रीराम विजयी हो रहे हैं। धनुष पर चढ़े हुए बाण का स्पर्श करते हुए रिपुरूप सागर के वाडवानल श्रीराम विजयी हो रहे हैं। **गिरिधर** कवि के द्वारा जिनका यश गाया गया है ऐसे मुझ नारद के सर्वस्व करुणा के महासागर श्रीराम लंका के रणांगण में विजयी हो रहे हैं।

## गीत संख्या-९

संङ्ग्राममूर्धनि धन्विनो रामस्य जितकामच्छविः।
रणरङ्गसीम्नि मनस्विनो रामस्य सुखधामच्छविः।।
नवनीलनीरजजलदमरकतमञ्जुसौभगशालिनः ।
श्रीवत्सलाञ्छनहृल्लसत्तुलसीमनोहरमालिनः ।।
संयुगसुयोगमहस्विनः रामस्य जनरामच्छविः।।१।।
प्रत्यूषशिशुदिनकरविभानिन्दकसुवल्कलवाससः ।
सौमित्रिसद्ध्रीचो विभो रणरौद्रजितदिग्वाससः।।
रविवंशहंससरस्विनः रामस्य चिद्रामच्छविः।।२।।
वरवीररसपावनपयोनिधिचारुचन्द्रमसो हरेः।
पौलस्त्यकुलनाशव्यशनशरसालिसद्धनुषो हरेः।।
रणकर्कशस्य तरस्विनो रामस्य सद्रामच्छविः।।३।।
विबुधावतंसशुभांशवीरमहाबलीमुखशोभिनः ।
योगीन्द्रमुनिगणपरमहंसमहात्ममण्डललोभिनः ।।
गिरिधरगिरीड्ययशस्विनः रामस्यदृग्रामच्छविः।।४।।

**भौमी-** इस संग्राम के शिखर पर धनुर्धारी श्रीराम की काम–विजयिनी छवि अद्भुत है। युद्ध रङ्गभूमि की सीमा में मनस्वी श्रीराम की छवि सुख की धाम बन गई है। नवीन नीलकमल मेघ और मरकत मणि की मधुर शोभा से युक्त और श्रीवत्सलांछन हृदय में विराजित तुलसी की सुन्दर माला धारण किये हुए। ऐसे युद्ध के

सुयोग के तेज से युक्त श्रीराम की छवि भक्तों को रमा रही है। प्रातःकालीन सूर्य की शोभा को निन्दित करने वाला बल्कल-वस्त्र धारण किये हुए और लक्ष्मण ही जिनके सहचर हैं, ऐसे सर्वव्यापक और रणयुद्ध के रौद्र कर्म से दिगम्बर शिव को भी जीतने वाले श्रीराम की अद्‌भुत छवि है। ऐसे सूर्यवंश रूप हंस मानससर में विहार करने वाले श्रीराम की छवि चेतनों को रमा रही है। श्रेष्ठ वीर रसरूप क्षीरसागर के पूर्ण चन्द्रमा श्रीहरि और पौलस्त्य रावण के वंश नाश के व्यसन से युक्त सुन्दर बाण और श्रेष्ठ धनुष से युक्त महाविष्णु युद्ध में कठोर और वेगशाली श्रीराम की छवि सन्तों को रमा रही है। श्रेष्ठ देवताओं के सुन्दर अंशरूप महापराक्रमी वानरों से सुशोभित श्रेष्ठयोगी मुनिजन परमहंस और महात्माओं के मण्डल लुभाने वाले और **गिरिधर** कवि द्वारा गाए हुए सुन्दर यश वाले श्रीराम की छवि नेत्रों को आनन्द दे रही है।

## सन्दर्भश्लोकौ

**हते कुम्भकर्णे रणे राघवेण प्रवीरेण बालिद्विषा रावणिर्वै।**
**विशिष्टात्ममायो महाभीमकायो नगं नागपाशेन रामं बबन्ध।।१।।**
**रामे निबध्ये ननु नागपाशैः सुग्रीवमुख्ये भयविह्वले च।**
**देवर्षिणा प्रेषित एत्य देवं सलब्धसेवो गरुडो जगाद।।२।।**

**भौमी-** परमवीर राघवजी द्वारा कुम्भकर्ण का वध किए जाने पर रावण पुत्र मेघनाद जो कि विशिष्ट योगमाया सम्पन्न और भयंकर शरीर वाला था, ने तमाल वृक्ष स्वरूप श्रीराम को नागपाश में बाँध लिया। मेघनाद द्वारा श्रीराम के नागपाश में बद्ध हो जाने पर तथा सुग्रीव आदि वानर वीरों के भय से विह्वल हो जाने पर देवर्षि नारदजी के द्वारा भेजे हुए गरुड़ देव श्रीराम के पास आकर इस प्रकार बोले।

## गीत संख्या-१०

**अद्य रामरुद्रो दरीदृश्यते।।**
**कलितरौद्ररसके सङ्ग्रामे रौद्रो भवन् हि सुभटाऽभिरामे।**
**निहतविनतजनदारुणकामः कश्चित् परामृश्यते।।१।।**
**पावकशरहतभसितिमण्डितो कपिनन्दीरणकर्मपण्डितः।**
**प्रवीरकाचण्डिकाचण्डितो धर्मवृषभो वृश्यते।।२।।**
**नागपाशमयनागभूषणो नाकभूषणोऽनाकभूषणो।**
**विमलभक्तिगङ्गाविभूषणो रिपून् न वै मृश्यते।।३।।**
**सीतानुजहनुमत्त्रिलोचनो जनत्रिशूलधृग् भीतिमोचनो।**
**सुवात्सल्यशिशुशशिविरोचनो गिरिधरगिरास्पृश्यते।।४।।**

**भौमी-** आज भगवान राम रुद्ररूप में दर्शन दे रहे हैं, रौद्ररस से पूर्ण वीरों को आनन्द देने वाले, रौद्र रस से युक्त, इस संग्राम में भक्तों की दारुण वासना को समाप्त करने वाले एक अपूर्व लीला सम्पन्न प्रभु विचार के विषय बन रहे हैं। आग्नेय बाण से उत्पन्न राक्षसों के जले शरीर के भस्म से सुशोभित और वानर वर श्रीहनुमान ही जिनके नन्दी हैं ऐसे युद्ध में विशारद और वीररस की भावना रूप चण्डिका से उत्साहित और धर्मरूप नन्दी

बैल पर सवार शिव स्वरूप प्रभु दर्शन दे रहे हैं। नाग पाशरूप नागों के आभूषण बनाने वाले नाकभूषण अर्थात् स्वर्ग के आभूषण स्वरूप, न अक भूषण अर्थात् दु:ख को नष्ट करने वाले विमलभक्तिरूप गंगाजी को आभूषण बनाने वाले श्रीरामरुद्र शत्रुओं को नहीं सहन कर रहे हैं। सीताजी, लक्ष्मणजी और हनुमानजी तीन नेत्रों से और भक्तों के तापरूप त्रिशूल को धारण करने वाले वात्सल्यरूप बाल चन्द्रमा से सुशोभित श्रीरामरूप **गिरिधर** कवि के वाणी के भी गेय बन रहे हैं।

## गीत संख्या-११

**लक्ष्मणो मेघनादवधप्रतिज्ञां कुर्वन् श्रीरामं प्रति-**

**यदि च घननादं रणे नैव हन्याम्।।**
**तदा नहि स्यां रामसेवकः प्रभुपदपरिकरभावं विहन्याम्।।१।।**
**न स्यां तदा वसिष्ठविधेयो यदि रणभुवि नैर्ऋतं न हन्याम्।।२।।**
**यदि धूलिसात् खलं युद्धे नैव कुर्यां तदा निजवंशप्रभावं प्रणिहन्याम्।।३।।**
**शतशङ्करसहायमपि नीचं यदि समाहूय रणभूमौ न हन्याम्।।४।।**
**गिरिधरेशकृपापात्रं तदा न भवेयं निजविद्याव्यसनानुभावमभिहन्याम्।।५।।**

**भौमी-** मेघनाद के वध की प्रतिज्ञा करके लक्ष्मणजी भगवान राम से कह रहे हैं-यदि मैं मेघनाद को युद्ध में न मार पाऊँ तो श्रीराम का सेवक भी न कहलाऊँ और आपके श्रीचरणों के सेवकभाव को भी समाप्त कर दूँ। यदि मैं युद्धभूमि में राक्षस मेघनाद का वध न कर लूँ तो मैं वसिष्ठजी का शिष्य भी न कहलाऊँ। यदि युद्ध में इस खल को मैं धूलिसात् न कर लूँ तो अपने वंश के प्रभाव को भी नष्ट कर लूँ। सैकड़ों शिव के सहायक होने पर भी यदि नीच मेघनाद को मैं ललकार कर न मार डालूँ तो मैं **गिरिधर** कवि के स्वामी श्रीराम का कृपापात्र न बनूँ और अपने शस्त्र विद्या के व्यसन का अनुभव भी समाप्त कर दूँ।

**विशेष-**यह गीत दादरा में निबद्ध है।

## सन्दर्भश्लोकः

**निहतं युधि वीक्ष्य शात्रवं फणिपेनेन्द्रजितं महाबलम्।**
**त्रिदशा ववृषुः प्रसूनकै रघुवीरस्य जगुर्यशोऽमलम्।।१।।**

**भौमी-** युद्ध में लक्ष्मणजी द्वारा अपने शत्रु महाबली इन्द्रजीत को मारा गया देखकर देवता पुष्पों की वर्षा करने लगे और श्रीराम का निर्मल यश गाने लगे।

## गीत संख्या-१२

**जयसि रणभुवि ललितलक्ष्मण।**
**रामचन्द्रप्रतापपालित विमलसेवाफलित लक्ष्मण।।१।।**
**चारुचम्पककनकसौभग विपुलभुजबलभग्नदुर्भग।**
**चरितचर्चितचकितजगदग सुजनकरुणाकलित लक्ष्मण।।२।।**

जानकीवात्सल्यभाजन विशदरामकथासभाजन।
कोसलेश्वरश्यामनवघनचतुरचातकचलित लक्ष्मण।।३।।
रामसेवाव्रतविलक्षण रणकलाकौशलविचक्षण।
रामभक्तिसुभव्यलक्षण हरियशःसङ्कलित लक्ष्मण।।४।।
शुचि सुमित्रातनय सुन्दर दशरथात्मज निहतनिशिचर।
उर्मिलावर सुखितगिरिधर प्रभुचरितसंवलित लक्ष्मण।।५।।

**भौमी-** इस युद्धभूमि में ललित लक्ष्मण कुमार आप विजयी हो रहे हैं, श्रीराम के प्रताप से पालित विमलयश से युक्त कुमार लक्ष्मण आप विजयी हो रहे हैं। हे चम्पा और स्वर्ण के समान शोभा वाले! अपनी अपरिमित भुजबल से दुष्टों का दमन करने वाले, अपने दिव्यचरित से जड़-चेतन को चकित करने वाले, सुजनों पर करुणा करने वाले, लक्ष्मण कुमार आपकी जय हो रही है। हे सीताजी के वात्सल्य भाजन, हे निर्मल रामकथा के सम्मान कर्ता श्रीराम रूप श्यामघन के चञ्चल और चतुर चातक लक्ष्मण! आपकी विजय हो रही है। विलक्षण रामसेवा-व्रत वाले युद्धकला कौशल में निपुण, श्रीरामभक्ति के लक्षणों से युक्त रघुनाथ यश के संकलन रूप लक्ष्मण! आप विजयी हो रहे हैं। हे पवित्र सुन्दर सुमित्रापुत्र दशरथ जी के तृतीय तनय! राक्षसों का वध करने वाले उर्मिलापति! **गिरिधर** कवि को सुखी करने वाले श्रीराम के चरित्रमय लक्ष्मण युद्धभूमि में आपकी जय हो रही है।

## गीत संख्या-१३

**श्रीरामो लक्ष्मणं प्रति-**

युगं युगं जीव लक्ष्मणलाल।
रणनिहतघननाद विगतविषादनिर्जरजाल।।१।।
ब्रह्मचर्यव्रतनिरत रणचण्डकालकराल।
प्रलयवह्निज्वालयार्चित वदनदुर्जनकाल।।२।।
त्यक्तपुरपरिजनसदनसुखपरमपत्नीबाल ।
आचतुर्दशवर्षमिह सूज्झितविषयसुखमाल।।३।।
इन्द्रजिदरे स्निग्धसीताकृपावापिमराल।
चिरञ्जीव सुखेन गिरिधरगिराहंसिमृणाल।।४।।

**भौमी-** श्रीराम लक्ष्मण के प्रति कहते हैं-हे लक्ष्मण लाल! तुम जुग-जुग जीते रहो। हे ब्रह्मचर्य व्रत में तत्पर, युद्ध में भयंकर काल के भी काल और प्रलयकालीन अग्निज्वाला से युक्त मुखमण्डल, दुर्जनों के लिए कालस्वरूप लक्ष्मण! तुम युग-युग तक जियो। नगर, परिजन, सुख, भवन एवं श्रेष्ठ युवती-पत्नी का भी त्याग करके चौदह वर्षपर्यन्तपूर्णरूप से विषयों का त्याग करके कठिन व्रत निभाने वाले लक्ष्मण! तुम युग-युग तक जियो। अरे! इन्द्रजित मेघनाद के शत्रु एवं सीताजी के वात्सल्यमय स्नेह वाटिका के हंस और **गिरिधर** कवि की वाणीरूप हंसिनी के विहार स्थल कमलदण्डस्वरूप लक्ष्मण! तुम सुखपूर्वक अनादिकाल तक जीते रहो।

**विशेष-** यह गीत रूपक ताल में निबद्ध है।

## गीत संख्या-१४

विभीषणो रामं प्रति-

प्रभो रिपुं कथं जेष्यसि रणे।।
वीक्ष्य रथिनं रावणं रामं विरथमत्र क्षणे।
मानसे सन्दिहे दीनो दयानिधौ विलक्षणे।।१।।
प्रेक्ष्य प्रभो पुलस्त्यपौत्रं रथस्थं समराङ्गणे।
भवन्तं च विना पदत्राणं शिरस्त्रं सक्षणे।।२।।
विदन्त्वां वीराग्रणीं सन्तिष्ठमानं लक्ष्मणे।
तदपि नाथ विभेमि भीतं प्रेक्ष्य कपिवलमुल्बणे।।३।।
पाहि पार्थिवपार्थिवीवर सतर्को भव कर्मणे।
रामरणकर्कशघटय गिरिधरं सेवाशर्मणे।।४।।

**भौमी-** अब विभीषण श्रीराम के प्रति कहते हैं–हे प्रभो! युद्ध में आप शत्रु को कैसे जीतेंगे? इस समय रावण को रथी और आप श्रीराम को विरथ देखकर मैं विलक्षण होने पर भी आपश्री दयानिधान में संदेह करने लगा हूँ। हे प्रभो! इस उत्सवपूर्ण युद्धस्थल में पुलस्त्य पौत्र रावण को रथस्थ देखकर और आपको पनहीं और शिर के टोपे के बिना देखकर मेरे मन में संदेह स्वाभाविक है। आपको लक्ष्मण पर भरोसा करते हुये यद्यपि मैं वीर शिरोमणि जानता हूँ फिर भी इस भयंकर युद्ध में वानरदल को भयभीत देखकर मैं भी डर रहा हूँ। हे महाराज! हे पृथ्वीपुत्री के पति! रक्षा कीजिये। इस युद्ध कर्म के लिए सतर्क हो जाइये। हे रण में कठोर श्रीराम! **गिरिधर** कवि को भी अपनी सेवा सुख के लिये उपयुक्त मान लीजिए।

## गीत संख्या-१५

श्रीरामः विभीषणं प्रति-

विभीषण सखे मा स्म भैषीः कदाचित्।
विभूषणसखे मा स्म क्षैषीः कदाचित्।।
अयोध्यातो मया धर्मरथः समानीतः।
ततो वैरिगणो जातो मत्तो भीतभीतः।।
स्वधैर्यं सखे मा स्म नैषीः कदाचित्।।१।।
शीलं सुपताका सत्यमेव चास्य केतुः।
शौर्यं धैर्यं चक्रवान् रथो मे विजयहेतुः।।
स्वचित्तमसुखे मा स्म रासीः कदाचित्।।२।।
बलं विवेको दमः परोपकारो घोटकाः।
क्षमाकृपा समतासक्ताः पापमोटकाः।।

**सन्देहसम्मुखे मा स्म यासीः कदाचित्।।३।।**
**ईश्वरभजननामचतुरचारुसूतः ।**
**विरतिचर्मसुसुतोषखड्गधारापूतः ।।**
**चरणं दुर्मुखे मा स्म दासीः कदाचित्।।४।।**
**विमलस्वान्ततूणो यमनियमशिलीमुखः।**
**गिरिधरेशगुरुपूजाकवचः सतां सुखः।।**
**भजनविमुखे मा स्म भाषीः कदाचित्।।५।।**

**भौमी-** श्रीराम विभीषण के प्रति कहते हैं–हे मित्र विभीषण! कभी मत डरो। हे मुझ विभु के पास ऊषण अर्थात् निवास करने वाले मित्र! क्षीण मत हो। अयोध्या से मेरे द्वारा धर्मरथ लाया गया है। इसलिये शत्रुगण मुझसे बहुत डर गये हैं। हे मित्र! कभी अपना धैर्य मत छोड़ना। इस रथ का सत्य ही ध्वज और शील ही पताका है। शौर्य और धैर्य यही दो इसके चक्के हैं। अतः यही रथ मेरे विजय का कारण है। तुम अपने चित्त को दुःख में मत लगाओ। बल, विवेक, दम और परोपकार ये चारों घोड़े क्षमा, कृपा और समता रूप रस्सियों से बँधे हैं, ये पाप राशि के नासक हैं। अतः मित्र! कभी भी संदेह के सम्मुख मत जाओ। ईश्वर का भजन ही यहाँ चतुर सारथी है, जो वैराग्यरूप ढाल और संतोषरूप तलवार से पवित्र है। इसलिए इस दुर्मुख अर्थात् दुःखद परिणाम वाले संशय के विषय में अपना चरण मत रखो। हे विभीषण! उस धर्म रथ का निर्मल मन ही तरकस है और संयम, नियम, बाण तथा **गिरिधर** कवि के प्रभु मुझ राम एवं गुरुदेव की पूजा ही इसका कवच है। अतः भजन विमुख के समक्ष कभी मत उपस्थित होवो।

**विशेष-** यह गीत दादरा ताल में निबद्ध है।

## गीत संख्या-१६

देवाः प्रार्थयन्ते-

**जहि रावणं हरे सङ्ग्रामे।।**
**मा दयस्व दयितावमानिनः प्रजहि प्रजहि विवशमिह कामे।**
**अलं लम्ब्य समालम्ब्य पौरुषं घटय बलं विदलितविश्रामे।।१।।**
**अलमुपेक्ष्य जयिनं विजयीन् जहि शत्रुं रणे कुपुरुषश्रामे।**
**छिन्धि शिरश्श्रेणीः शितवाणैर्दशवदनस्य कातरक्षामे।।२।।**
**सीता सीदति सदाधिलङ्कं बल्गाति वैरिणि भीमभ्रामे।**
**किमुपेक्ष्यसे रुदन्तीं जायां सङ्कटगहने कुणपक्रामे।।३।**
**घटय पौरुषं हे पुरुषोत्तम पुरुषाधमे क्षपाटललामे।**
**गायतु गीतं मुदा गिरिधरः सम्प्रति मङ्गलमयपरिणामे।।४।।**

**भौमी-** अब देवता भगवान श्रीराम से प्रार्थना करते हैं। हे श्रीहरे! संग्राम में रावण का वध कीजिये। हे प्रभो! आपकी पत्नी श्रीसीता का अपमान करने वाले इस रावण पर दया मत कीजिए। काम विवश रावण को

वितनुत गृहे गृहे तोरणद्वारं रचयत प्रतिधाम मङ्गलाचारम्।
व्रज व्रज री अवधपुरनारि सीतारामौ वर्द्धयितुम्।।३।।
अभिशमयेमहि नेत्रपिपासां प्रपूरयेम मनोमृदुलाशाम्।
एहि एहि री अवधपुरनारि सीतारामौ वर्द्धयितुम्।।४।।
दर्शं दर्शं गिरिधरनाथं नेत्रं स्वं कुर्याम सनाथम्।
आव आव री अवधपुरनारि सीतारामौ वर्द्धयितुम्।।५।।

**भौमी–** माताएँ गा रही हैं– ऐ अवधपुरी की नारियों! सीतारामजी को बधाई देने के लिये चलो, चलो। अरे अवधपुर की नारियों! सीतारामजी को बधाई देने के लिये शीघ्रता करो, शीघ्रता करो। चौदह वर्ष के वनवास के पश्चात् अयोध्या में पधारे हुये अपने मुख की कांति से कमल को लजाने वाले सीतारामजी को बधाई देने के लिये अवधपुर की नारियों दौड़ो–दौड़ो। अरे अवधपुर की नारियों! घर–घर में तोरणद्वार सजाओ। प्रत्येक भवन में मंगलाचार करो। श्रीसीताराम को बधाई देने के लिये प्रस्थान करो, प्रस्थान करो। अरे अवधपुर की नारियों! हम अपने आँखों की प्यास बुझायें और मन की कोमल आशाएँ पूर्ण करें सीतारामजी को बधाई देने के लिए आओ–आओ। **गिरिधर** कवि के नाथ रघुनाथ को देख–देखकर हम अपने नेत्रों को सनाथ करें। अरे अवधपुर की नारियों! सीतारामजी को बधाई देने के लिये आओ, आओ।

**विशेष–** यह गीत ब्रजभाषा के बधाई गीत के ढाल पर निबद्ध है। इसका बोल है–

**चलो चलो री सकल ब्रजनारि बधाई देवे लालन को।।**

## गीत संख्या–११

**अथ तरुण्यो गायन्ति–**

भाव्या भवितव्यता नान्यथास्ति नव्यता।
एकदिने आसीद् वनवास इमं पश्य राजतिलकम्।।
यस्य सुमूर्धनि पुरा विलसिता जटामुकुटकृतलेखा।
तस्य ललाटेऽद्यैव लसित्री राजतिलकशुभरेखा।।
भाव्या भवितव्यता नान्यथास्ति नव्यता।
एकदिने आसीद् वनवास इमं पश्य राजतिलकम्।।१।।
यस्य सुचरणौ पुरा स्म चलतः कठिने कण्टकविपिने।
तावेवाद्य सुखं भविष्यतो भव्ये हाटकभवने।।
भाव्या भवितव्यता नान्यथास्ति नव्यता।
एकदिने आसीद् वनवास इमं पश्य रामतिलकम्।।२।।
यस्य करौ श्रितकुशपवित्रिकौ पुरा कठिनतां यातौ।

**ताविह कटकमुद्रिकामुदितौ भास्यत इमौ विभातौ।।**
**भाव्या भवितव्यता नान्यथास्ति नव्यता।**
**एकदिने आसीद् वनवास इमं पश्य राजतिलकम्।।३।।**
**यस्य शिरो रविदीधितितप्तं छत्रविहीनं दृष्टम् ।**
**गिरिधरप्रभोस्तस्य द्रक्ष्यामः सुभगच्छत्रं सृष्टम् ।।**
**भाव्या भवितव्यता नान्यथास्ति नव्यता।**
**एकदिने आसीद् वनवास इमं पश्य राजतिलकम्।।४।।**

**भौमी-** अब युवती माताएँ गा रही हैं– भवितव्यता होकर ही रहती है, टलने पर नहीं टलती। एक दिन श्रीराम का वनवास हुआ था। अब यह राजतिलक देखो। जिनके मस्तक पर आज से पहले जटा–मुकुट की झाँकी दिखती थी, उन्हीं के मस्तक पर आज यह राजतिलक की रेखा सुशोभित होगी। होनी होकर ही रहती है, वहाँ कोई नया परिवर्तन नहीं होता। एक दिन श्रीराम का वनवास हुआ था, अब यह राजतिलक देखो। जिनके श्रीचरण आज से पहले कठिन कंटकाकीर्ण वन में भ्रमण करते थे, वे ही प्रभु श्रीराम के श्रीचरण भव्य कनक भवन में आज फूल और मखमल के स्तरणों पर सुशोभित होंगे। क्योंकि भवितव्यता होकर रहती है उसे टाला नहीं जा सकता। पहले वनवास और आज राजतिलक। जिनके श्रीहस्त आज से पहले वनवास काल में कुश की पवित्री धारण करके कठोर हो गये थे, वे ही कंकण–स्वर्णमुद्रिका धारण करके आज शोभित होते हुये भी और शोभित होंगे। क्योंकि भवितव्यता होकर रहती है, उसमें कोई दूसरे प्रकार की नवीनता नहीं होती। भवितव्यता ने एक दिन वनवास और आज राजतिलक घटा दिया। आज से पूर्व जिन श्रीराम के सिर पर कोई छत्र नहीं था और सूर्यनारायण की किरणों से वह तप्त हुआ करता था उन्हीं **गिरिधर** कवि के स्वामी श्रीराम के सिर पर आज हम सूर्यवंश की परम्परा से प्राप्त सुन्दर छत्र के दर्शन करेंगी, क्योंकि भवितव्यता होकर ही रहती है। उसे टाला नहीं जा सकता। एक दिन श्रीराम का वनवास हुआ था आज यह राज्याभिषेक देखो।

**विशेष-** यह गीत एक पारम्परिक गीत की ढाल पर निबद्ध है, उसका बोल है–

**'होनी होके रहती टाले नहीं टलती इक दिन हुआ था, वनवास आज देखो राजतिलक है।**

## गीत संख्या-१२

**पुष्पकारूढो रामः सुग्रीवविभीषणौ प्रति-**

**पश्यतं सखायौ पुरीं अयोध्यां रम्याम्।**
**प्रणम्या यत्र सरयू राजते।।**
**सकलभुवनवन्दितोऽनिन्दितो भाति भारतो देशः।**
**तस्योत्तरभागे विराजते कोशलनामप्रदेशः।।**
**पश्यतं सखायौ योगिमुनीनां गम्याम्।।१।।**
**सप्तपुरीणां चूडामणिरिव नगरी लसत्ययोध्या।**

इक्ष्वाकूद्वहराजराजधानी समवसत्ययोध्या।।
पश्यतं सखायौ महिमस्तके प्रणम्याम् ।।२।।
त्रेतारम्भे कार्तिकशुक्ले यानिरुपमानमम्याम्।
आयाता भारतं मदर्थं यानुपमाप्यनवम्याम्।।
पश्यतं सखायौ पुरीं तुरीयां नम्याम्।।३।।
अत्र सरव्याः दक्षिणे भागे जन्ममही मे भाति।
कोटिकोटिवर्षेभ्यो या हिन्दूनामास्थां पाति।।
पश्यतं सखायौ पुरीं सतां सङ्गम्याम्।।४।।
यत्र क्षणनिवासितो धीरो जयति सकलशुभराशिम्।
हसत्यनिन्द्या भववन्द्या मथुराप्रयागमथ काशीम्।।
पश्यतं सखायौ गिरिधरगीतनिगम्याम्।।५।।

**भौमी-** अब श्रीअवध के निकट आकर पुष्पकारूढ श्रीराम सुग्रीव-विभीषण को संबोधित करके कहते हैं। हे मित्रों! तुम दोनों मेरी इस रमणीय अयोध्यापुरी को देखो। जहाँ प्रणम्य सरयू माता विराज रही हैं। हे मित्रों! सम्पूर्ण लोकों में वन्दित और निन्दारहित हमारा भारत देश सुशोभित हो रहा है। उसी भारत के उत्तर भाग में कोसल नाम का प्रदेश सुशोभित हो रहा है। मित्रों! योगियों और मुनियों के आश्रयरूप इस अयोध्या को देखो, जहाँ पूज्य सरयू जी विराजती हैं। हे मित्रों! सात (७) मोक्षदापुरियों की चूड़ामणि के समान यह हमारी अयोध्या नगरी सुशोभित हो रही है। यही अयोध्या सभी इक्ष्वाकुवंशी राजाओं की राजधानी बनकर व्यवस्थित बसी हुयी है। हे मित्रों! पृथ्वी के मस्तक पर पूजनीय इस अयोध्या को देखो। जो त्रेता के आरम्भ में कार्तिक शुक्ल पक्ष में अनुपम नौमी तिथि को सभी उपमाओं और सादृश्यों से रहित होकर मेरे लिये भारतवर्ष में आयी। हे मित्रों! उसी मुझ तुरीयतत्व राम के भी आदरणीय और पूज्य इस अयोध्या को देखो जहाँ वन्दनीय सरयूजी विराज रही हैं। हे मित्रों! इसी श्रीअयोध्यापुरी में सरयूजी के दक्षिण भाग में मेरी जन्मभूमि विराजमान है। जो करोड़ों वर्षों से (न्यूनातिन्यून एक करोड़, अस्सी लाख, पचास हजार वर्षों से) हिन्दुओं की आस्था की रक्षा करती आ रही है। हे मित्रों! सन्तों के समागम से युक्त मेरी इस पुरी को देखो, जहाँ पूज्य सरयूजी विराज रही हैं। जहाँ एक क्षण भर निवास करके भी प्राणी सभी शुभ राशियों को जीत लेता है और निन्दारहित जगतवन्द्या अयोध्या मथुरा-प्रयाग और काशी की भी हँसी उड़ाती है। हे मित्रों! **गिरिधर** कवि के गीतों की निदर्शनारूप मेरी इस पुरी को देखो। जहाँ पूजनीय सरयू विराज रही हैं।

## गीत संख्या-१३

यो द्वारे द्वारे गोमातुर्गोमयहुंकृत शुचिदेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।
यः काण्डे काण्डे खगपतिभिः कल्पितनवमीड्यो देशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।

यस्मिन् सत्यं वद धर्मं चर, प्रथमं समुपदिशति वेदः।
वसुधैव कुटुम्बकमितिघोषो, यस्मिन् विलसति गतभेदः।।
आसिन्धुहिमालयमखण्डितो यो मङ्गलमयप्रदेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।१।।
यस्मिन् साधवोऽपि जगदर्थं कुर्वन्त्यस्थनामपि दानम्।
यस्मिन् राजापि कपोतार्थं कुरुते स्वामिषप्रदानम्।।
सर्वे भवन्तु सुखिनो नित्यं यस्यास्ति सुखदसन्देशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।२।।
यस्मिन् शिशवो वै सिंहशिशुनामपि दन्तान् गणयन्ते।
यस्मिन् ललना निजपतिव्रततः स्वर्देवीरवगणयन्ते।।
सञ्जातुं यत्र सुराणामपि सम्भवत्सुत्सवोऽशेषः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।३।।
यस्मिन्नित्यं सञ्जाघटीति मातृतातातिथिगुरुभक्तिः।
सत्सङ्गपरोपकाररक्तिः सततं दुर्व्यसनविरक्तिः।।
यस्मिन् शाश्वतः समवतर्तुं नित्यं वाञ्छतिभुवनेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।४।।
यस्मिन् हरिरपि हरितक्रान्तिं समवतरति सदा चिकीर्षन्।
दण्डयन् खलान् रक्षन् साधून्, श्रुतिधर्मं समुद्दिधीर्षन्।।
भारतसंस्कृतिनिष्ठो भवति वेदानां यत्र निदेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।५।।
सूर्योऽपि प्रथमकिरणैरर्चति नित्यं यस्यप्रत्यूषम्।
चन्द्रमाः सदा पाययतेऽयं शुचिकरचषकैः पीयूषम्।।
गङ्गादिसरिद्भिः सुधाजलैरभिषिक्तप्रतिप्रदेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।६।।
यस्मिन् समाननागरिकसंहिता योऽस्ति धर्मसापेक्षः।
सत्तासद्भिः समनुशासिता यः सदा पान्थनिरपेक्षः।।
यो धर्मनियन्त्रितराजनीतिनिर्णीतशासनादेशः।
सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।७।।

**यस्मिन् मर्यादापुरुषोत्तमएकलनारिव्रतधारी।**
**वह्निं श्रीखण्डयते गिरिधरगीता पतिव्रता नारी।।**
**पादुका भूपः सचिवो भ्राता यत्राभितपत्यसुशेषः।**
**सोऽयं मम भारतदेशः सोऽयं मम भारतदेशः।।८।।**

**भौमी-** जो द्वार-द्वार पर गोमाता के गोबर और हुँकारों से अपने विभाग को पवित्र करता रहता है, वही है—मेरा भारत देश। जो प्रत्येक वृक्ष की डाली पर श्रेष्ठ पक्षियों के घोंसलों से सुशोभित है वही है—मेरा भारत देश। जहाँ सत्यं वद-धर्मं चर अर्थात् सत्य बोलो-धर्माचरण करो इस प्रकार वेद सर्वप्रथम उपदेश देता है और जहाँ '**वसुधैव कुटुम्बकम्**' का उद्घोष (नारा) से सहित होकर सुशोभित हो रहा है और जो समुद्र से लेकर हिमालयपर्यन्त अखण्ड और मंगलमय प्रदेशों वाला है, वही मेरा भारत देश है। जिस देश में साधु लोग जगत कल्याण के लिये हड्डियों का भी दान कर देते हैं और जिस देश का राजा कबूतर की भूख मिटाने के लिये अपने शरीर के माँस को भी प्रदान कर देता है। 'सर्वे भवन्तु सुखिनः'—सभी सुखी हों—(इस प्रकार का जिसका सुखद संदेश है), वही मेरा भारत देश है। जहाँ के बालक सिंह के बच्चे का दाँत गिनते हैं और जहाँ स्त्रियाँ अपने पतिव्रत से स्वर्ग की देवियों की भी हँसी उड़ाती हैं और जहाँ जन्म लेना देवताओं के लिये भी सम्पूर्ण उत्सवों का स्थान बन जाता है, वही मेरा भारत देश है। जिस भारत में माता-पिता-गुरु और अतिथि की भक्ति निरन्तर विद्यमान रहती है और जहाँ सत्संग और परोपकार में अनुराग होता है। और दुर्व्यसनों से जहां के लोगों का वैराग्य रहता है और जिस भारतवर्ष में शाश्वत होकर भी परमात्मा अवतार लेने की इच्छा करते हैं—मेरा वही भारत देश है। जहां श्रीहरि भी हरितक्रान्ति करने की इच्छा से अवतार लेते हैं और जहाँ दुष्टों को दण्ड देते हुए साधुओं की रक्षा करते हुये और वैदिक धर्म का उद्धार करने की इच्छा करते हुये अवतार लेते हैं और जहाँ वेद स्पष्ट आज्ञा करते हैं कि भारतीय संस्कृति में निष्ठा रखो, वही भारत मेरा देश है। सूर्यनारायण भी अपने प्रथम किरणों से जिसके प्रातःकाल की पूजा करते हैं और चन्द्रमा भी अपने किरण पात्रों से जिसे अमृत पिलाया करते हैं और गंगादि नदियाँ अपने अमृत-जल से जिसके प्रत्येक प्रदेश का सिंचन करती हैं, वही मेरा भारत देश है। जिसमें समान नागरिक संहिता की व्यवस्था है और जो निरन्तर धर्म-सापेक्ष रहता है, जिसकी सत्ता संतों से अनुशासित है और जो पन्थ-निरपेक्ष है और जिसमें राजनीति धर्म से नियंत्रित है, इस प्रकार जिसका शासनादेश निर्णीत है—वही मेरा भारत देश है। जिस भारत में मैं राम मर्यादा पुरुषोत्तम और एक नारीव्रत धारी हूँ और जहाँ **गिरिधर** कवि द्वारा गायी हुयी पतिव्रता नारी सीताजी अग्नि को भी चन्दन बना देती हैं और जहाँ का भ्राता पादुकारूप राजा का मंत्री बनकर केवल प्राणों को शेष रखता है, मेरा वही भारत देश है।

## गीत संख्या-१४

**पुष्पकादवतीर्य श्रीरामः प्रथमं वसिष्ठं प्रणमति-**

**प्रभु हो प्राणमद् गुरुं वसिष्ठम्।**
**पुष्पकतोऽवतीर्य सीतालक्ष्मणसहितः श्रुतिबोधवरिष्ठम्।।१।।**
**प्रणमन्तं विलोक्य रघुचन्द्रं मुनिरुत्थाप्य सस्वजे रामम्।**

मन्ये पीतसरोरुहकोषो नीलोत्पलमभिदलमभिरामम्।।२।।
चुम्बं चुम्बं हरिमुखकमलं मुनिवृन्दारकोऽपि नो तृप्यति।
नूनं नवलनीरदं भानुर्मुहुर्लालयन् मनसि न दृप्यति।।३।।
पृष्टोऽनामयोऽथ कुलगुरुणा रामोऽवदन् निसर्गविनीतः।
सर्वं नो वार्तं यत्रास्ते मुनिर्दयालुर्गिरिधरगीतः।।४।।

**भौमी-** पुष्पक से उतरकर श्रीराम पहले वसिष्ठजी को प्रणाम करते हैं। इसके पश्चात् पुष्पक विमान से उतरकर सीताजी एवं लक्ष्मणजी सहित प्रभु श्रीराम ने वेदज्ञानियों में श्रेष्ठ वसिष्ठजी को प्रणाम किया। प्रणाम करते हुये रघुकुल के चन्द्रमा श्रीराम को देखकर उठकर मुनि वसिष्ठ ने उन्हें हृदय से लगा लिया। मुझे लगता है कि जैसे पीले कमल ने अत्यन्त सुन्दर अभीष्ट दल वाले नीलकमल को ही समेट लिया हो। प्रभु के मुखकमल को चूम-चूम कर मुनिश्रेष्ठ वसिष्ठजी तृप्त नहीं हो रहे हैं। निश्चित ही आज सूर्यनारायण नवीन नीले मेघ को दुलारते हुये अघा नहीं रहे हैं। कुलगुरु के द्वारा कुशल पूछे जाने पर **गिरिधर** कवि के गीतों के विषय स्वभाव से विनम्र श्रीराम बोले- जिन पर आप श्रीगुरुदेव मुनिवर दयालु हैं, ऐसे हम तीनों राम-लक्ष्मण-सीता का सब कुछ कुशल ही कुशल है।

**विशेष-** यह गीत सोलह मात्रा त्रिताल में निबद्ध है।

## गीत संख्या-१५

**श्रीरामलक्ष्मणौ कृतप्रणामावासास्यप्रणमन्तीं सीतां प्रति भगवती अरुन्धती-**

त्वं समेधिषीष्ठाः सीते सती भवाखण्डसौभाग्यवती।।
वह्निज्वालाविशुद्धे विशुद्धव्रते सर्वदैवाविरुद्धेऽविरुद्धे रते।
त्वं प्रवर्धिषीष्ठाः प्रीते सती।।१।।
त्वत्पतिव्रतप्रभावेण रामो रणे सर्वरक्षांसि व्यजेष्ट विसङ्कटक्षणे।
त्वं विवर्धिषीष्ठाः स्फीते सती।।२।।
भारतीयं ललनादर्शं दर्शितवती रावणस्य वैभवं च पदा धर्षितवती।
शंवर्धिषीष्ठाः सीते सती।।३।।
त्वं शिशुर्यदि वा शिष्या यदसि तत्तथा त्वय्यरुन्धत्या वर्धते।
रतिरश्लथा व्यजेष्ठा गिरिधरगीते सती।।४।।

**भौमी-** प्रणाम किये हुये श्रीरामलक्ष्मण को आशीर्वाद देकर प्रणाम करती हुई सीताजी को सम्बोधित करके भगवती अरुन्धती कहती हैं। हे सती सीता! तुम्हारी सम्यक वृद्धि हो। तुम अखण्ड सौभाग्यवती रहो। हे अग्निज्वाला को भी शुद्ध करने वाली! हे पवित्रव्रत वाली! हे सदैव किसी से भी विरोध न करने वाली! और अविरुद्ध अर्थात् सभी जड़-चेतनों के विरोध से रहित श्रीराम में तन्मय, परमप्रसन्न सीते! तुम निरन्तर बढ़ती रहो। हे सर्वगुणों से सम्पन्न सती शिरोमणि! तुम्हारे ही पतिव्रत के प्रभाव से श्रीराम ने भयंकर क्षणों में भी सभी

राक्षसों को जीत लिया। तुम विशिष्ट वृद्धि को प्राप्त करो और सदैव अखण्ड सौभाग्यवती रहो। तुमने भारतीय महिला के श्रेष्ठ आदर्श के दर्शन कराये और तुमने अपने वाम चरण से रावण का वैभव कुचल दिया। हे सीते! अर्थात् जनकजी के हल के अग्र भाग से प्रकट होने वाली सती! तुम सदैव सब प्रकार से वृद्धिमती होओ और तुम्हारा सौभाग्य सदैव अखण्ड रहे। हे देवी! तुम मेरी पुत्री हो या शिष्या? जो भी हो वह रहो परन्तु तुममें मुझ अरुन्धती की भक्ति सुदृढ़ होती जा रही है। **गिरिधर** कवि के द्वारा अनेक गीतों में गायी गई तुम सीता ने सबको जीत लिया। विजयिनी बन गई। विजयश्री प्राप्त कर ली। सदैव अखण्ड सौभाग्यवती रहो।

**विशेष–** यह गीत गुजराती लोक धुन की ढाल में निबद्ध है, बोल हैं–

**''तने साँचवे सीता सती अखण्डसौभाग्यवती''**

## सन्दर्भश्लोकः

**अथ रघुपतिपादाम्भोजमाद्यन्मरन्दस्नपित -**
**तनुविराजत्पादुकोद्भासिभालम् ।**
**जनकदुहितृमातुः क्रोडमेवाश्रयन्तं**
**भरतमवनिरामो राम आश्लिक्षदेनम्।।१।।**

**भौमी–** इसके पश्चात् रघुपति श्रीराम के चरणकमल के निस्पन्दमान प्रेममकरन्द से जिनका दिव्य शरीर स्नात है और जिनके मस्तक पर श्रीराम की पादुका विराजमान हैं, ऐसे जनकराज कन्या सीताजी की माता पृथ्वी की गोद का आश्रय लेते हुये भरतजी को भूमण्डल को रमाने वाले श्रीरामजी ने हृदय से लगा लिया।

## गीत संख्या–१६

**भरतभ्रातरं राम आश्लिष्यतीड्यम्।।**
**चरणे पतन्तं धरणौ निपतन्तम्।**
**विषमविरहबहलवह्निज्वालया ज्वलन्तम्।।**
**भरतभ्रातरं राम आश्लिष्यतीड्यम्।।१।।**
**आचतुर्दशाब्दमब्दमिवाम्भो वर्षन्तम्।**
**वर्षचातकं वा रूपपयसे तर्षन्तम्।।**
**भरतभ्रातरं राम आश्लिष्यतीड्यम्।।२।।**
**शिष्कं शिष्कं हिक्कं हिक्कं करुणं रुदन्तम्।**
**बाष्पवारिवर्षे सोरसताडं तुदन्तम्।।**
**भरतभ्रातरं राम आश्लिष्यतीड्यम्।।३।।**
**मुदा जानुबाहुभ्यामुत्थाप्य लम्बमानो।**
**गिरिधरेशो यथार्भं सस्नेहमम्बमानो।।**
**भरतभ्रातरं राम आश्लिष्यतीड्यम्।।४।।**

**भौमी–** आज भैया भरत को रामजी हृदय से लगा रहे हैं। चरणों पर गिरते हुये, पृथ्वी पर लोटते हुये और विरह की भयंकर अग्नि ज्वाला में जलते हुये स्तुतियोग्य भाव में रत भरतजी को श्रीरामजी हृदय से लगा रहे हैं। चौदह वर्षपर्यन्त मेघ की भाँति अश्रुधारा की वर्षा करते हुये वर्षाकालीन चातक की भाँति रूप स्वाति जल के लिये तरसते हुए, भजन में निरत भाई भरत को श्रीराम हृदय से लगा रहे हैं। सिसक–सिसककर, हिचक–हिचककर अत्यन्त करुण–क्रन्दन करते हुये, आँसुओं की वर्षा करते हुये, छाती पीट–पीटकर रोते हुए भगवान राम में निरत स्तुति करने योग्य भरतजी को श्रीराम हृदय से लगा रहे हैं। **गिरिधर** कवि के ईश्वर श्रीराम आजानबाहुओं से भरतजी को उठाकर हृदय से लगाते हुये और एक माँ की भाँति दुलार करते हुये, भगवद्‌भक्तों में निरत भरत को श्रीराम हृदय से लगा रहे हैं।

**विशेष–** इस गीत में कवि ने श्लेष के माध्यम से प्रत्येक स्थायी में प्रयुक्त 'भरत' शब्द का नवीन अर्थ ही विकसित किया है।

## गीत संख्या–१७

**रामः परिष्वजत इह भरतम्।।**
**वनं प्रोषितः पुरं प्रोषितं दोर्भ्यां परिष्वजत इह भरतम्।।१।।**
**भुवि निपतन्तं मुहू रुदन्तं सन्तं परिष्वजत इह भरतम्।।२।।**
**धैर्यपादपं विलपन् दात्रैर्दान्तं परिष्वजत इह भरतम्।।३।।**
**विरह चेतसं गिरिधरहृदये भान्तं परिष्वजत इह भरतम्।।४।।**

**भौमी–** श्रीराम आज भरतजी को हृदय से लगा रहे हैं। स्वयं वन में प्रेषित होकर (प्रवास किये हुए) प्रभु श्रीराम अयोध्यापुर में निवास करते हुये भी वनवास जैसा आचरण करते हुये भरतजी को दोनों भुजाओं से उठाकर हृदय से लगा रहे हैं। पृथ्वी पर गिरते हुये और बहुत अधिक रोते हुए सन्त भरतजी को श्रीराम हृदय से लगा रहे हैं। अपने विलापरूप कुल्हाड़ों से धैर्यरूप वृक्ष को काटते हुये, भरत जी को श्रीराम हृदय से लगा रहे हैं। विरहपूर्ण चित्त वाले और इसी रूप में **गिरिधर** कवि के हृदय में स्थित होकर शोभायमान भरतजी को श्रीराम हृदय से लगा रहे हैं।

**विशेष–** यह गीत सोलह मात्रा त्रिताल यमनकाल राग में निबद्ध है।

## गीत संख्या–१८

**सीताचरणवनजातं हो वन्दत इह भरतः।।**
**यद्‌दण्डकवनधरणिमण्डनं यत्सुरपतिसुतदुरितखण्डनम्।**
**जानकीचरणजलजातं हो वन्दत इह भरतः।।१।।**
**यत्कोसलनृपभवनभूषणं यत्सेवकदूषणविदूषणम्।**
**भौमीचरणसरो जातं हो वन्दत इह भरतः।।२।।**
**यन्मुनियोगिमनोमानसहंसं यन्नृपमैथिलवंशावतंशम्।**
**पार्थिवीचरणपयोजातं हो वन्दत इह भरतः।।३।।**

**यद् दशमुखनतिशत्कृतघातं समरुणं कविगिरिधरपारिजातम्।**
**मैथिलीचरणसलिलजातं हो वन्दत इह भरतः।।४।।**

**भौमी-** सीताजी के श्रीचरणकमल को भरत जी यहाँ वन्दन कर रहे हैं। जो दण्डकवन की पृथ्वी के आभूषण बने और जिन्होंने इन्द्रपुत्र जयन्त के दोषों को भी समाप्त किया, जनकनन्दिनीजी के उन्हीं चरणकमलों को आज भरतजी वन्दन कर रहे हैं। जो कोसलराज के भवन के अलंकार बने और जिन्होंने सेवकों के दोषों को भी दूषित किया सीताजी के उन्हीं चरणकमलों को यहाँ भरतजी नमन कर रहे हैं। जो योगी-मुनियों के मनमानस सरोवर के हंस बने, जो मैथिलवंशी राजाओं के वंश के आभूषण कहलाये, पृथ्वीनन्दिनी सीताजी के उन्हीं चरणकमलों को आज भरतजी वन्दन कर रहे हैं। जिन्होंने रावण के करोड़ों नमस्कारों को कुचल दिया और जो **गिरिधर** कवि के लिये कल्पवृक्ष स्वरूप हैं, उन्हीं लाल-लाल मिथिलाधिराज कन्या सीताजी के चरणकमल को आज भरतजी नमन कर रहे हैं।

## गीत संख्या-१९

**रामं निरीक्ष्य कैकेयी हो लज्जमाना परिष्वजते।।**
**सीतालक्ष्मणाभ्यां कुशलमायातम्।**
**प्रणमन्तं सस्मितवदनवनजातम्।।**
**रामं प्रवीक्ष्य कैकेयी हो मज्जमाना परिष्वजते।।१।।**
**स्मारं स्मारं निरागसे दत्तं वनवासम्।**
**भावं भावं भर्तृमृत्युं लोकपरिहासम्।।**
**रामं परीक्ष्य कैकेयी हो सज्जमाना परिष्वजते।।२।।**
**देवं देवं भरतशीलसमुल्लसद्भक्तिम्।**
**नन्द्रिग्रामवासं तस्य भोगतो विरक्तिम्।।**
**रामं समीक्ष्य कैकेयी हो त्यज्यमाना परिष्वजते।।३।।**
**चिन्तं चिन्तं सीता क्लेशं तथा शून्यहरणम्।**
**श्रावं श्रावं गिरिधरप्रभो कराद्रक्षोमरणम्।।**
**रामं प्रतीक्ष्य कैकेयी हो भज्यमाना परिष्वजते।।४।।**

**भौमी-** आज नमन करते हुये श्रीराम को देखकर लज्जित होती हुई कैकेयी हृदय से लगा रही हैं। सीताजी एवं लक्ष्मणजी के साथ सकुशल वन से लौटे हुये मन्द हासपूर्ण-कमलबदन श्रीराम को प्रणाम करते हुये देखकर लज्जा महासागर में डूबती हुई कैकेयी हृदय से लगा रही हैं। निर्दोष श्रीराम को दिये हुये वनवास का बार-बार स्मरण करके और पति दशरथजी की मृत्यु तथा लोक परिहास का बार-बार चिन्तन करके, श्रीराम की परीक्षा करके, संकोच से सिकुड़ती हुई कैकेयी हृदय से लगा रही हैं। भरतजी के शील और उससे सुशोभित भक्ति की बार-बार स्तुति करके और नन्दीग्राम में निवास और संसार के प्रति विरक्ति की बार-बार

प्रशंसा करके, श्रीराम की समीक्षा करके, कैकेयी अपने ही द्वारा स्वयं छोड़ी जाती हुई, श्रीराम को हृदय से लगा रही हैं। सीताजी के क्लेश का, सूनी कुटिया से उनके हरण का बार–बार चिन्तन करके और **गिरिधर** कवि के प्रभु श्रीराम के हाथों राक्षसों के मरण का बार–बार श्रवण करके, श्रीराम की प्रतीक्षा करके, कैकेयी अपने से ही टूटती हुई प्रभु को गले से लगा रही हैं।

## गीत संख्या–२०

**श्रीरामः कैकेयीं प्रति–**

**मातर्मा हृदि लज्जां धारय।।**
**अहं त्वदीयः पुत्रो मातर्मनसा दृढं निधारय।**
**सीतास्नुसा तवेयं सुमुखी सपदीमां श्रृङ्गारय।।१।।**
**नाभविष्यदथ चेद् वनवासः किमु सीतामहरिष्यत्।**
**नीचरावणो किमसौ युद्धे मद्बाणैरमरिष्यत्।।२।।**
**कथमभविष्यन् सुरा विशोका भूभारःकिमयास्यत्।**
**शक्रजितं हत्वाथ लक्ष्मणस्त्रीन् लोकान् किमपास्यत्।।३।।**
**किममोक्षन् सुरललना वन्द्यः कारागारजशोकम्।**
**अग्निविशुद्धां सीतामेत्य किमकरिष्यं निःशोकम्।।४।।**
**कथं रामराज्ये भारतवर्षे मङ्गलमाधास्यम्।**
**कथं गीतरामायणसौख्यं गिरिधरकवयेऽदास्यम्।।५।।**

**भौमी–** अब श्रीरामजी कैकेयी के प्रति कहते हैं। हे माँ! आप अपने हृदय में लज्जा धारण न करें। मैं आपका बेटा हूँ यह बात मन में दृढ़पूर्वक निश्चित कर लीजिये। ये सुन्दर मुख वाली सीता जो आपकी पुत्रवधू हैं। इनको शीघ्र सजाइये। यदि यह वनवास न हुआ होता तो यह नीच रावण सीताजी का हरण कैसे करता और फिर मेरे बाणों से मरता कैसे? यदि आपके निमित्त यह बनवास न हुआ होता तो देवता निश्चिन्त कैसे होते? यह पृथ्वी का भार कैसे समाप्त होता? और इस वनवास के बिना लक्ष्मण इन्द्रजीत मेघनाद का वध करके तीनों लोकों की रक्षा कैसे करते? वनवास के बिना रावण के यहाँ बन्दी बनायी गई, देवियाँ अपना शोक कैसे छोड़तीं? और अग्नि में पवित्र सीता को प्राप्त कर मैं सभी को शोकरहित कैसे कर पाता? यदि वनवास न हुआ होता तो रामराज्य में मैं भारतवर्ष में मंगल का आधान कैसे कर पाता? और **गिरिधर** कवि को गीत रामायण का मैं सुख कैसे दे पाता?

## गीत संख्या–२१

**रामो मरकतश्यामो नमति कौसल्यासुमित्रे।**
**सीतानुजाभ्यां चरणान् स्पृष्ट्वा वात्सल्यभावाद् विचित्रे।।१।।**

नामं नामं शुभपरिणामं शोभाशीलपवित्रे।।२।।
वन्दं वन्दं नितरामनिन्दे अनवद्ये अनघचरित्रे।।३।।
संवाहं संवाहं तच्चरणनलिने गिरिधरभवनिधिवहित्रे।।४।।

**भौमी-** मरकत के समान श्यामल श्रीराम, कौसल्या और सुमित्राजी को प्रणाम कर रहे हैं-सीताजी तथा लक्ष्मणजी के साथ चरणों को स्पर्श करके, श्रीराम वात्सल्य-भाव से विचित्र कौसल्या सुमित्राजी को नमन कर रहे हैं। सुन्दर परिणाम के साथ शोभा और शील से पवित्र कौसल्या-सुमित्राजी को प्रभु श्रीराम नमन करके पुनः प्रणाम कर रहे हैं। सदैव निन्दारहित, पापरहित, निर्दोष चरित्र वाली कौसल्या-सुमित्रा जी को प्रभु अनेक बार वन्दन करके प्रणाम कर रहे हैं। **गिरिधर** कवि के भवसागर के लिये जलयान के समान कौसल्या-सुमित्राजी के चरणकमलों को बार-बार चम्पन करते हुये (सेवाभाव से दबाते हुये) श्रीराम दोनों माताओं को नमन कर रहे हैं।

## सन्दर्भश्लोकः

अथाभिषेकं रघुवंशकेतोः संयोजयिष्यन् द्विजमन्त्रिवर्यैः।
शुद्धं मुहूर्तं परिशोध्य विद्वान् विप्रानुवाचैव वशी वसिष्ठः।।१।।

**भौमी-** इसके पश्चात् ब्राह्मणों और श्रेष्ठ मंत्रिगणों के साथ रघुवंश के ध्वजस्वरूप श्रीराम के पट्टाभिषेक को आयोजित करते हुए, शुद्ध मुहूर्त का परिशोधन करके विद्वान् संयमी गुरु वसिष्ठ जी ब्राह्मणों से बोले।

## गीत संख्या-२२

अनुज्ञां दत्त हे विप्रा भवतु रामो महाराजः।
शमाज्ञां दत्त हे विप्रा भवतु रामो महाराजः।।
नृपादेशात् द्विसप्ताब्दं वनं भुक्त्वा समायातः।
शुभाज्ञां दत्त हे विप्रा भवतु रामो महाराजः।।१।।
प्रजघ्ने रावणो रामेण सह बलबान्धवो युद्धे।
वराज्ञां दत्त हे विप्रा भवतु रामो महाराजः।।२।।
निरातङ्काकृता भारतमही रामेण निःसीमा।
मुदाज्ञां दत्त हे विप्रा भवतु रामो महाराजः।।३।।
अयोध्या भातु सन्नाथा लसितगिरिधरप्रभूद्‌गाथा।
निजाज्ञां दत्त हे विप्रा भवतु रामो महाराजः।।४।।

**भौमी-** हे ब्राह्मणों! अनुमति दो। श्रीराम अयोध्या के महाराज बनें। हे ब्राह्मणों! ठीक-ठीक आज्ञा दो श्रीराम महाराज बनें। महाराज का आदेश पालन करते हुये चौदह वर्षों का वनवास भोगकर श्रीराम अयोध्या पधार आये हैं, अब इन्हें महाराज बनने की शुभाज्ञा दो। श्रीराम द्वारा युद्ध में बन्धु-बान्धवों सहित रावण मारा

गया है। हे ब्राह्मणों! अब श्रेष्ठ आज्ञा दो। श्रीराम महाराजा बनें। हे ब्राह्मणों! श्रीराम ने भारतभूमि को सभी सीमाओं से रहित और आतंकवाद से रहित कर दिया है। अब तुम सब इन्हें महाराज बनने के लिये प्रसन्नता से आज्ञा दो। यह अयोध्या **गिरिधर** कवि के प्रभु श्रीराम की उत्कृष्ट गाथाओं से सुशोभित होती हुई परमात्मा श्रीराम रूप स्वामी से युक्त हो जाय। हे ब्राह्मणों! अब तुम अपनी आज्ञा दो। श्रीराम अवधराज सिंहासन पर आसीन होकर महाराज बनें।

## गीत संख्या-२३

**ब्राह्मणा ऊचुः-**

**कुर्वन्तु महाराजं रामं न विलम्बो वै भवता कार्यः।**
**तन्वन्तु नृपं मेघश्यामं न विलम्बो धर्मवता कार्यः।।**
**संग्रामे हतरावणं प्रभुं जगदेकधनुर्धरमाद्यविभुम्।**
**कुर्वन्तु नृपं सीतारामं न विलम्बो ज्ञानवता कार्यः।।१।।**
**आतंकवादरहितं देशं रामोऽकृत हतरक्षक्लेशम्।**
**कुर्वन्तु नृपं भुजबलधामं न विलम्बो ध्यानवता कार्यः।।२।।**
**महनीयगुणं रणकलाचणं भूसुताक्षणं क्षणविलक्षणम्।**
**कुर्वन्तु नृपं रामारामं न विलम्बो वेदवता कार्यः।।३।।**
**राघवाभिषेको विधीयतां मङ्गलं गिरिधरेण गीयताम्।**
**कुर्वन्तु नृपं हरिमभिरामं न विलम्बो नियमवता कार्यः।।४।।**

**भौमी-** अब ब्राह्मण कहने लगे- आप अब श्रीराम को महाराज बनायें। इस समय आप विलम्ब न करें। मेघवर्णी श्रीराम को राजा बनायें। आपश्री धार्मिक वसिष्ठ द्वारा विलम्ब न किया जाय। संग्राम में रावण का वध किये हुये सर्वसमर्थ संसार के अद्वितीय धनुर्धर आद्यविभु अर्थात् तुरीयावस्था के विभु परमेश्वर सीतापति श्रीराम को राजा बनाइये। हे ज्ञानवान! आप विलम्ब न करें। श्रीराम ने राक्षसों के क्लेश से रहित करके इस भारत देश को भी आतंकवाद से रहित कर दिया है। अतः बाहुबल के आश्रय श्रीराम को राजा बनायें। हे ध्यानवान गुरुदेव! इस सम्बन्ध में विलम्ब न किया जाय। पूजनीय गुणों वाले, युद्ध में कुशल भूमिनन्दिनी सीताजी को महोत्सव प्रदान करने वाले और प्रत्येक क्षण को विलक्षण बनाने वाले, परशुराम को भी आनन्दित करने वाले, श्रीराम को अवध का राजा बनायें। हे वेद-निधान! आपके द्वारा विलम्ब न किया जाय। अब श्रीराम का पट्टाभिषेक किया जाय और **गिरिधर** कवि के द्वारा भी मंगल गान किया जाय, सबको सुख देने वाले श्रीहरि भगवान राम को आपश्री महाराज बनायें। हे नियमवान! अब किसी प्रकार का विलम्ब न करें।

**विशेष-** यह गीत हमारे बाल्यकाल में प्रचलित एक प्रार्थना गीत की ढाल पर निबद्ध है, बोल है- वह शक्ति हमें दो दयानिधे कर्तव्य मार्ग पर डंट जावें।

## गीत संख्या-२४

गायति कविः-

अद्य अयोध्यायां वर्द्धते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।
हत रावणो रामो वनवासादागतः सीतालक्ष्मणाभ्यां समं सखिभिश्च संयुतः।
अद्य अयोध्यायां वर्तते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।१।।
वर्षन्ति मुदिताः प्रसूनानि देवाः गायन्त्यो नृत्यन्त्यो देव्यः प्रस्तुवन्ति सेवाः।
अद्य अयोध्यायां वाद्यते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।२।।
तोरणादिभिः पुरीं च सज्जयन्ति नागराः हेमघटैरंशुमन्तं लज्जयन्त्युज्जागराः।
अद्य अयोध्यायां धीयते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।३।।
नृत्यन्ति कूर्दन्ते गायन्ति लोकाः वर्द्धन्ते वर्द्धयन्ते प्रहसन्त्यशोकाः।
अद्य अयोध्यायां दीयते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।४।।
स्नातानुलिप्ता योषाः श्रृगारयन्ते गिरिधरप्रभुं निहार्य सर्वं वारयन्ते।
अद्य अयोध्यायां गीयते वर्द्धापनं वर्द्धापनं राघवाभिषेको रामराज्याभिषेकः।।५।।

**भौमी-** कवि स्वयं गा रहे हैं-आज अयोध्या में बधाई हो रही है, बधाई हो रही है। यहाँ राघवजी का पट्टाभिषेक हो रहा है, श्रीराम का राज्याभिषेक हो रहा है। रावण का वध करके श्रीसीता लक्ष्मणजी के साथ तथा अपने मित्र राक्षस वानर-भालुओं को लेकर श्रीराम वनवास-पूर्ण करके अयोध्या पधार आये हैं। आज अयोध्या में बधाई सम्पन्न हो रही है। देवता प्रसन्न होकर पुष्पवर्षा कर रहे हैं और देवियाँ नाचती हुई, गाती हुई अपनी सेवाएँ प्रस्तुत कर रही हैं। आज अयोध्या में बधाइयाँ बज रही हैं। श्रीराम का पट्टाभिषेक हो रहा है। आज लोग शोकरहित होकर नाच रहे हैं, कूद रहे हैं, गा रहे हैं, हँस रहे हैं, बधाई ले रहे हैं और बधाई दे रहे हैं। आज अयोध्या में श्रीराम को बधाई दी जा रही है। श्रीराम का पट्टाभिषेक हो रहा है। अवध की महिलाएँ स्नान करके सुन्दर अंग रागों से अनुलेपन करके सोलह श्रृंगारों से स्वयं को श्रृंगारित कर रही हैं। **गिरिधर** कवि के प्रभु श्रीराम को निहार-निहारकर उन पर अपना सर्वस्व लुटा रही हैं। आज अयोध्या में बधाई के गीत गाये जा रहे हैं। श्रीराघव का पट्टाभिषेक हो रहा है। श्रीराम का राज्याभिषेक हो रहा है।

## गीत संख्या-२५

अद्य सीतारामौ दम्पती निहारयामहे।
दिव्यौ पूर्णकामौ दम्पती निहारयामहे।।
रत्नपीठे समासीनौ चन्दनानुलिप्तौ।
वसिष्ठेन द्विजैर्देवैर्मङ्गलाभिषिक्तौ।।
गौरश्यामौ राजदम्पती निहारयामहे।।१।।

**दिव्यदिव्यनव्यनव्यभव्यभव्यभावतः ।**
**भूषणैरदूषणैर्विभूषितौ स्वभावतः।।**
**लोकरामौ नव्यदम्पती निहारयामहे।।२।।**
**कनकसिंहासने वसिष्ठेन निवेशितौ।**
**श्वेतच्छत्रमुकुटादिभिश्च परिवेशितौ ।।**
**आत्मारामौ भव्यदम्पती निहारयामहे।।३।।**
**प्रथमं वसिष्ठमुनिना विहिततिलकौ।**
**गिरिधरप्रभू भूविभूती मेचकालकौ।।**
**अभिरामौ ब्रह्मदम्पती निहारयामहे।।४।।**

**भौमी-** आज श्रीसीताराम राजदम्पती को हम निहार रहे हैं और अलौकिक पूर्णकाम दम्पती अर्थात् महारानी-महाराजा को हम निहार रहे हैं। आज रत्नजटित सिंहासन पर विराजमान, चंदन चर्चित वसिष्ठजी ब्राह्मण और देवताओं द्वारा मंगल-जल से अभिषिक्त गौर-श्याम सीतामहारानी एवं महाराज रामजी को हम निहार रहे हैं। लोकोत्तर नये-नये-कल्याणमय-भावों से स्वभावतः दोषरहित, आभूषणों से विभूषित लोक को आनन्द देने वाले, इन नित्य नवीन दम्पती सीतारामजी को हम निहार रहे हैं। कनक सिंहासन पर वसिष्ठजी द्वारा विराजमान कराये हुये श्वेत-छत्र-मुकुट आदि राजकीय अलंकारों से सजाये हुये जीवात्माओं के भी उद्यान स्वरूप कल्याणमय दम्पती को आज हम निहार रहे हैं। सर्वप्रथम ब्रह्मर्षि वसिष्ठजी द्वारा जिन महारानी सीता और महाराज श्रीराम को तिलक किया गया है, ऐसे **गिरिधर** कवि के स्वामिनी और स्वामी, ठकुरानी-ठाकुर पृथ्वी पर चतुष्पाद विभूति के रूप में प्रकट नीले घुँघुराली अलकों वाले, सभी को आनन्द देने वाले, परब्रह्म स्वरूप दम्पती महारानी सीता और महाराज राम को हम निहार रहे हैं।

## गीत संख्या-२६

**मणिकनकमयसिंहासने राजाधिराजो राजते।**
**सहसीतया च नृपासने रघुराजराजो राजते।।**
**शतकोटिमन्मथसुन्दरो भवभीमवारिधिमन्दरो।**
**भूपालपूगपुरन्दरो रणहतसकुलदशकन्धरो।।**
**गुरुक्लृप्तपूतमहासने राजाधिराजो राजते।।१।।**
**रविविपुलमुकुटो ललिततिलकः कलितकाञ्चनकुण्डलः।**
**किसलाधरो दाडिमरदो मुखजितशरदविधुमण्डलः।।**
**पट्टाभिषेकवरासने राजाधिराजो राजते।।२।।**
**रामो मिहिरकुलभूषणो नृपराजराजसुभूषणो।**
**हतदूषणो जितदूषणो मैथिलीकण्ठविभूषणो।।।**

भारतभविष्यधरासने राजाधिराजो राजते।।३।।
केयूरकङ्कणसल्लसत्पाणिः करेसधनुश्शरः।
कापोतकण्ठे कौस्तुभः श्रीवत्सवक्षाः श्रीधरः।।
त्रैलोक्यभद्रकरासने राजाधिराजो राजते।।४।।
वामाङ्गविलसितसीतया श्लिष्टो नितान्तप्रतीतया।
तापिच्छ इव कलकनकवल्या प्रीतया श्रुतिगीतया।।
गिरिधरसुगीतगिरासने राजाधिराजो राजते।।५।।

**भौमी-** मणिजटित स्वर्णमय सिंहासन पर राजाधिराज श्रीराम सुशोभित हो रहे हैं, अयोध्या के राजसिंहासन पर सीताजी के सहित रघुवंश के सर्वश्रेष्ठ राजा श्रीराम सुशोभित हो रहे हैं। अनन्त कोटि कामदेवों के समान सुन्दर, भयंकर भवसागर के मन्दराचल स्वरूप, राजसमूहों के इन्द्र, युद्ध में रावण के वधकर्ता, राजाधिराज श्रीराम, गुरुदेव द्वारा व्यवस्थित, पवित्र, पूज्य राज-सिंहासन पर विराज रहे हैं। करोड़ों सूर्यों के समान, प्रकाशमान मुकुट धारण किये हुये, सुन्दर तिलक से सुशोभित, स्वर्णमय कुण्डल धारण किये हुये, पल्लव के समान ओष्ठ और अनार के समान दाँत वाले, मुख से शरदकालीन चन्द्र मण्डल को जीतने वाले, राजाधिराज श्रीराम पट्टाभिषेक सम्बन्धी श्रेष्ठ राज-सिंहासन पर विराज रहे हैं। सूर्यकुल के आभूषण, राजाओं के राजा, कुबेर के भी राजा, शिवजी के आभूषण, निर्दोष, दूषण शत्रु के विजेता, सीता के कंठाभूषण, राजाधिराज श्रीराम भारतीय भविष्य के आधार स्वरूप सिंहासन पर विराज रहे हैं। केयूर और कंकण से सुशोभित, श्रीहस्त वाले, हाथ में धनुर्बाण धारण किये हुये और कपोत जैसे कण्ठ पर कौस्तुभमणि तथा वक्ष पर श्रीवत्सलांछन धारण किये हुये, सीतापति राजाधिराज श्रीराम तीनों लोकों का कल्याण करने वाले, सिंहासन पर विराज रहे हैं। अत्यन्त विश्वस्त वामांग में सुशोभित सीताजी से उसी प्रकार आलिंगित हो रहे हैं मानों प्रसन्न वेदों द्वारा गायी हुयी स्वर्णलता से आलिंगित तमाल ऐसे राजाधिराज श्रीराम **गिरिधर** कवि के गीतों से सुशोभित वाणीमय सिंहासन पर विराज रहे हैं।

**विशेष-** इसे रूपकताल सप्त मात्रा में और दरबारी राग में निबद्ध किया गया है।

## गीत संख्या-२७

जयति रामचन्द्रो राजाधिराजः।
जयति रघुचन्द्रो राजाधिराजः।।
कनकसिंहासने सीतासमेतः।
समासीनो दीनबन्धुः करुणानिकेतः।।
सर्वश्रेष्ठगुणोपेतो महाराजः।।१।।
शशिकरछत्रधरः काञ्चनकिरीटः।
मकराकृतकुण्डलो निहतखलकीटः।।
रघुकुलकुमुदविमलद्विजराजः ।।२।।

**केयूरकङ्कणकलितबाहुदण्डो ।**
**हस्तिहस्तहस्तलसितकाण्डकोदण्डो ।।**
**महाबलपराक्रमव्राजो रघुराजः।।३।।**
**श्रीवत्सवक्षसि विराजमानहारो।**
**विपुलकोटिमन्मथमथनश्रीशृङ्गारः ।।**
**सज्जनसरोरुहतरुणदिनराजः ।।४।।**
**रत्नमणिमहार्घवसनभूषणपरीतः ।**
**पार्वतीशवाहनांशयज्ञोपवीतः ।।**
**गिरिधरगीतगीतो विजितऋतुराजः।।५।।**

**भौमी-** राजाधिराज श्रीरामजी की जय हो रही है। रघुकुल के चंद्रमा राजाधिराज की जय हो रही है। स्वर्ण के सिंहासन पर सीताजी के सहित आसीन दीनबन्धु, करुणा के भवन, सर्वश्रेष्ठ गुणों से युक्त महाराज राम की विजय हो रही है। चन्द्र के समान छत्र धारण किये हुये, सुवर्ण मुकुट से सुशोभित, मकराकृत कुण्डल से अलंकृत, राक्षस रूप कीड़ों को मारने वाले, रघुकुल कुमुद के निर्मल चन्द्रमा श्रीराम की जय हो रही है। केयूर और कंकण से सुशोभित, भुजदण्ड हाथी के सूँड के समान श्रीहस्त में बाण-धनुष धारण किये हुये, महाबल और पराक्रम के पुंज श्रीराम की जय हो रही है। वक्षस्थल पर श्रीवत्सलांछन और हार से सुशोभित, अनन्त कामदेवों के मद को हरने वाले, श्रीजी को सुशोभित करने वाले, भक्तकमलों के विकासार्थ बाल सूर्यस्वरूप राजाधिराज की जय हो रही है। रत्नों-मणियों से जटित, बहुमूल्य वस्त्रों-आभूषणों से सुसज्जित और पार्वतीपति शिवजी के वाहन नन्दी रूप धर्म के अंशीभूत, परमधर्म का यज्ञोपवीत धारण करने वाले, **गिरिधर** कवि की वाणी से सदैव गाये जाने वाले, आभूषणों की सज्जा से वसंत को भी जीतने वाले राजाधिराज श्रीराम की जय हो रही है।

**विशेष**-यह गीत "**भक्तों के राजा श्याम मोरे आजा**" इस गीत के ढाल पर है।

## गीत संख्या-२८

**जयति राघवो रामराजेन्द्रराजाधिपो रघुवरो रक्षिताशेषलोकः।**
**उत्तमश्लोकस्त्रैलोक्यशोकापहो नाशिताशेषसुरवृन्दशोकः।।१।।**
**जयति वृन्दारकानतनिखिलमुनिनिकरविनतपदपद्मपीठः खरारिः।**
**देवदेवः परब्रह्म पुरुषोत्तमो मधुरमूर्तिर्महादानवारिः।।२।।**
**जयति व्यापको व्याप्य एकोऽद्वितीयोऽनुपमभूतिकृतभूतिभृतभूतिहारी।**
**निर्गुणः सगुण उपमारहित ईश्वरो रोमरोमाण्डशतकोटिधारी।।३।।**
**जयति सुरनागकिन्नरमहामुनिनिकरयक्षगन्धर्वजेगीयमानः।**
**भूमिजाचारुलोचनचकोरकचकितद्वारतो मुदितपेपीयमानः।।४।।**

**जयति खलदण्डदाता महितदण्डको दण्डकारण्यवीथीविहारी।**
**प्रवलभुजदण्डकोदण्डशरचण्डधरगिरिधरत्रासभवभीतिहारी ।।५।।**

**भौमी-** रघुकुल में प्रकट राम राजेन्द्र राजाओं के भी राजा, रघुकुल में ज्येष्ठ, सभी लोकों की रक्षा करने वाले, उत्तम यश वाले, तीनों लोकों का शोक नष्ट करने वाले, सम्पूर्ण देवताओं का शोक नष्ट करने वाले, राजाधिराज श्रीराम की जय हो रही है। विनम्र देवता, सम्पूर्ण मुनिवृन्द द्वारा जिनके चरण पादुका को नमन किया गया है, ऐसे खर के शत्रु देवताओं के भी देवता, परब्रह्म मर्यादा पुरुषोत्तम, मधुर मूर्ति, खर नामक राक्षस के शत्रु और महान दानवों के शत्रु श्रीराम भगवान की जय हो। ज्ञानियों के लिये व्यापक, भक्तों के लिये व्याप्य, एक अद्वितीय उपमारहित, भक्तों का ऐश्वर्य बढ़ाने वाले, स्वयं ऐश्वर्यों का पालन करने वाले, निर्गुण-सगुण सभी उपमाओं से रहित पाँचों क्लेशों से रहित ईश्वर और प्रत्येक रोम में कोटि-कोटि ब्रह्माण्डों को धारण करने वाले श्रीराम की जय हो। देवता, नाग, किन्नर, महामुनि, यक्ष और गन्धर्वों द्वारा बार-बार गाये जाते हुए पृथ्वीपुत्री सीताजी के सुन्दर नेत्ररूप चकोरों द्वारा प्रसन्नतापूर्वक पीये जाते हुए श्रीरामचन्द्र की जय हो। खलों को दण्ड देने वाले, दण्डक वन को पवित्र करने वाले, दण्डक वन की गलियों में भ्रमण करने वाले, प्रबल भुजदण्ड में धनुष एवं दिव्य बाण धारण करने वाले, **गिरिधर** कवि के त्रास और भय को हरने वाले दण्डक बिहारी श्रीराम जी की जय हो।

**विशेष-** यह गीत दण्डक वृत्त में निबद्ध है।

## गीत संख्या-२९

**जयति कम्रकल्याणकोसलसुतागर्भपाथोधिभवभवविभवचारुचन्द्रः।**
**जानकीचारुलोचनचकोरकनिखिलसुजनकैरवसुखदरामचन्द्रः।।१।।**
**जयति सगुणसाकारविग्रहनिखिलदनुजनिग्रहनिरन्तरमहितवेदसेतुः।**
**सच्चिदानन्द आनन्दकन्दाकरोद्रुहिणसुततनयसुतवंशकेतुः।।२।।**
**जयति मुनिकौशिकाध्वरसुरक्षणकुणपकदनचणमुनिवधूशापहर्ता।**
**जानकीवरस्वयंवरत्रिपुरहरधनुर्मथनभृगुवर्यगर्वापहर्ता ।।३।।**
**जयति सीतासमर्पित विजयमालिकाललितमिथिलानगरमोदकारी।**
**सीरकेतूत्तमानन्ददाता रुचिररुपमोहितसकलपुरुषनारी।।४।।**
**जयति दशरथनिदेशैकपालनविपिनगमनशुचिचित्रकूटद्रिकाशी।**
**भरतभावैकसाक्षी प्रहितपादुकः पादपद्मार्चनाभीतिनाशी।।५।।**
**जयति कुविराधखरत्रिशिरदूषणकदनविहितदशवदनभगिनीविरूपः।**
**नीचमारीचमर्दनजनकजाहरणविरहसुविलापमनुजानुरूपः ।।६।।**
**जयति जटायुर्महाश्राद्धकर्ता शबरिकारुचिरकन्दफलमूलभक्षी।**
**चरणपङ्कजमहितपवनसुतपृष्ठको निहतहरिशूनुहरिशूनुरक्षी।।७।।**

**जयति दत्तमुद्रिकहनूमद्विवर्धितवलो लङ्घिताम्भोधिरिपुनगरदाही।**
**घातिताक्षोन्मथितवनवलागारभटचूड़ामणिदेशसंदेशवाही ।।८।।**
**जयति वद्धसेतुर्महारणनिहतरावणो वह्निशुद्धश्रिया प्रेक्ष्यमाणः।**
**पुष्पकारूढरामो घनश्यामलः सुकविगिरिधरगिरापेक्ष्यमाणः।।९।।**

**भौमी-** सुन्दर कल्याणमय, कौसल्या के गर्भरूप, क्षीरसागर से उत्पन्न, संसार का जन्म, पालन, संहार करने वाले, पूर्णचंद्रमा, जानकीजी के सुंदर नेत्ररूप चकोर तथा सभी सज्जनरूप कुमुदों को सुख देने वाले श्रीरामचन्द्र की जय हो। सगुण-साकार, मानव विग्रह, दनुजवंश का निग्रह करने वाले, वैदिक सेतु की निरंतर रक्षा करने वाले, सच्चिदानंद, आनंद के मेघों की खानि और ब्रह्मपुत्र मरीचि के भी पुत्र कश्यप के पुत्र सूर्यनारायण के कुल के दिव्य पताका, आपकी जय हो। विश्वामित्र के यज्ञ के रक्षक, राक्षस वध में निपुण, अहल्या के शापहारी, सीतापति और सीता के श्रेष्ठ स्वयंवर में शिवजी का धनुष तोड़ने वाले, परशुराम के गर्वहर्ता श्रीराम की जय हो। सीताजी द्वारा समर्पित, श्रेष्ठ जयमाला से सुशोभित, मिथिला नगर को आनंद देने वाले, जनकजी के उत्तम आनंददाता और सुंदररूप से नगर के नर-नारियों को मोहित करने वाले श्रीराम की जय हो रही है। दशरथजी के आदेश के एकमात्र पालनकर्ता, वनगमनकर्ता, पवित्र चित्रकूट पर्वत पर निवास करने वाले, भरतजी के भावों के एकमात्र साक्षी, पादुका प्रदान करने वाले और चरणकमल के पूजन से भय को नष्ट करने वाले प्रभु श्रीराम की जय हो रही है। विराध, खर, त्रिशिरा, दूषण का वध करने वाले, रावण की बहन को कुरूप करने वाले, नीच मारीच का वध करने वाले, सीताजी के हरण से उत्पन्न विरह में मनुष्य के अनुरूप विलाप करने वाले श्रीराम की जय हो रही है। जटायु का महाश्राद्ध करने वाले, शबरी के सुंदर कंद-मूल-फल खाने वाले, अपने चरणकमल से हनुमानजी की पीठ को सम्मान देने वाले, हरिशूनु अर्थात् इन्द्रपुत्र बालि को मारने वाले और हरिशूनुरक्षी अर्थात् सूर्यपुत्र सुग्रीव की रक्षा करने वाले श्रीराम की जय हो रही है। मुद्रिका देकर हनुमानजी का बल बढ़ाने वाले, हनुमानजी द्वारा सागर का लंघन कराने वाले और हनुमानजी द्वारा ही लंका को भस्मसात् कराने वाले, श्रीहनुमान द्वारा अक्ष का वध कराने वाले, अशोक वाटिका, सेना, भवन और वीरों को तहस-नहस कराने वाले और चूड़ामणि के द्वारा स्वयं अपना संदेश हनुमान जी द्वारा मँगवाने वाले श्रीराम की जय हो रही है। समुद्र में सेतु बँधाकर, भयंकर युद्ध में रावण का वध करने वाले, अग्नि को शुद्ध करने वाली और दस महीने पर्यन्त अग्नि में निवास करके प्रगटी हुयी सीताजी द्वारा देखे जा रहे, मेघ के समान श्यामल, कविश्रेष्ठ **गिरिधर** की वाणी से अपेक्षित होते हुये पुष्पक विमान पर विराजमान श्रीराम की जय हो रही है।

## गीत संख्या-३०

**जयति जानकीचारुलोचनचकोरकविधुर्विधुविधू राघवो रामचन्द्रः।**
**घोरसंयुगदमितदुष्टदशकन्धरो मृगपकलकन्धरो रामभद्रः।।१।।**
**जयति मुनिवरवसिष्ठप्रहितदिव्यतमतिलकसँल्लसितमञ्जुलललाटः।**
**सीतया प्रीतया जुष्टसिंहासनो हंस इव सूर्यबिम्बेवराटः।।२।।**

जयति भरतार्पितच्छत्रसम्भूषितः सौम्यसौमित्रिश्रितचामराढ्यः।
शत्रुसूदनधृतव्यजनलङ्काधिपतिधृतधनू राजसद्गुणधनाढयः।।३।।
जयति हरिसुतसुतासिर्मरून्नन्दनप्रोल्लसच्चारुचर्मा नृपेन्द्रः।
सूर्यसुतशक्तिको वायुसुतभक्तिको भावुकैर्भावितो राघवेन्द्रः।।४।।
जयति विश्वविश्रुतविभूतिर्विभुर्भूतिमान्भूतिभूतिश्चतुष्पाद्विभूतिः।
सत्यसन्धो जगन्मङ्गलोतिः प्रभुर्ब्रह्मवेदान्तवेद्यानुभूतिः।।५।।
जयति लोकपालेशदिक्पालनरपालसुरपालभूपालमणिजुष्टपादः।
राजराजेन्द्रभूपेन्द्रमनुजैकमणिरीड्यगौरवसमितसद्विषादः ।।६।।
जयति वर्णाश्रमाचारवैदिकविहितधर्ममर्यादयामहितलोकः।
सर्वजनहितकरः सर्वजनसुखपरः परमकरुणाक्षपितसर्वशोकः।।७।।
जयत्येकपत्नीव्रतो लोकरक्षणरतो लोकशिक्षणरतो रामभद्रः।
नित्यसन्न्यस्तहेयप्रतीकेड्यगुणसदनविधुवदनशोभासमुद्रः ।।८।।
जयति विश्वविख्यातशासनप्रशासनरामराज्यजनरञ्जनो महाराजः।
भिक्षते भिक्षुको गिरिधरः पदरतिं रातु शं रातु राजाधिराजः।।९।।

**भौमी–** सीता जी के सुंदर नेत्ररूप चकोर के चन्द्रमा और विधु विधु अर्थात् विष्णु के भी विष्णु, रघुकुल में प्रकट श्रीरामचन्द्र की जय हो रही है। घोर युद्ध में दुष्ट रावण का दमन करने वाले, सिंह के समान कंधरा वाले रामभद्र की जय हो रही है। मुनिवर वसिष्ठ द्वारा किये हुये दिव्यतम तिलक से जिनका सुंदर ललाट सुशोभित हो रहा है, प्रसन्न सीताजी से जिनका सिंहासन शोभित है, जैसे सूर्यमंडल में हंसिनी के सहित हंस हो ऐसे राजाधिराज की जय हो। भरतजी के द्वारा अर्पित छत्र से सुशोभित, सौम्य सुमित्रापुत्र लक्ष्मण के द्वारा चलाये जा रहे, चामर से सुशोभित, शत्रुघ्न के द्वारा लिये हुये पंखे एवं विभीषण द्वारा लिये हुये धनुष एवं अन्य राज्यगुणों से सुशोभित श्रीराम की जय हो रही है। इन्द्र के पौत्र अंगद ने जिनकी तलवार ले रखी है, मरुतपुत्र हनुमान ने जिनकी ढाल सम्भाल रखी है तथा सूर्यपुत्र सुग्रीव ने जिनकी शक्ति पकड़ कर रखी है, हनुमानजी की भक्ति से युक्त और भावुकों से पूजित राजाओं में श्रेष्ठ राघवेन्द्र श्रीराम की जय हो रही है। विश्व में प्रसिद्ध विभूति वाले, सर्वव्यापक, षड़ैश्वर्य सम्पन्न, ईश्वरों के भी ईश्वर, चतुष्पाद विभूति, सत्यप्रतिज्ञ और जगन्मंगलकारिणी लीला करने वाले, प्रभु सर्वसमर्थ, परब्रह्म परमात्मा, वेदान्त विद्या की अनुभूतियों से युक्त प्रभु श्रीराम की जय हो। श्रेष्ठ लोकपाल, दिग्पाल, राजा इन्द्र एवं पृथिवी के पालक भूपालमणियों द्वारा जिनके चरणकमलों की सेवा की गयी है, राजाओं के भी राजाओं से श्रेष्ठ और मनुष्य के एकमात्र श्रेष्ठमणि और स्तुति करने योग्य गौरव संतों का विषाद नष्ट करने वाले श्रीराम की जय हो। वर्णाश्रम संबंधी आचरण और वेदविहित धर्म की मर्यादा से इस लोक की पूजा करने वाले, सभी का हित करने वाले, सभी के सुख के एकमात्र परायण और अपनी दिव्य करुणा से सबका शोक नष्ट करने वाले श्रीराम की जय हो। एकपत्नी व्रतधारी, लोक के रक्षण में परायण और लोक के शिक्षण में लगे हुये, निरंतर हेय प्रत्यनीक गुणों को छोड़ देने वाले और सद्गुण के सागर,

चन्द्रमुख, शोभा के समुद्र रामभद्र की जय हो। जिनका शासन और प्रशासन विश्वविख्यात है, ऐसे रामराज्य के प्रवर्तक, लोगों को आनन्द देने वाले महाराज आपकी जय हो। भिक्षुक **गिरिधर** आप श्रीराम के चरणप्रेम की भिक्षा माँगता है। हे राजाधिराज! आप **गिरिधर** कवि को अपने चरण की भक्ति दें और भजन में कोई बाधा न आये ऐसा कल्याण प्रदान करें।

## गीत संख्या-३१

**अद्य कोसलपुरे महामङ्गलं रामराज्याभिषेकस्य मङ्गलम्।।**
**भाति सिंहासनस्थस्त्रिलोकेश्वरो दिव्यशतपत्रनेत्रश्च सीतावरो।**
**विश्वसङ्कटहरो विश्वमङ्गलम्।।१।।**
**सीताननचारुचन्दिरचकोरः प्रभुः सर्वविश्रामदाताविधाता विभुः।**
**संविधित्सन् सदा सर्वमङ्गलम्।।२।।**
**श्वेतछत्रं वहन् भाति भरतो भजन् लक्ष्मणश्चामराभ्यां सुसेवां सृजन्।**
**व्यजनं शत्रुघ्नो लोकाय मङ्गलम्।।३।।**
**वायुपुत्रो विनृत्यन् प्रगायति यशः रामराज्यस्य सर्वत्र माद्यन् रसः।**
**गिरिधरायापि शं रायान् मङ्गलम्।।४।।**

**भौमी-** आज कोसलपुर में महामंगल है और रामराज्याभिषेक का मंगल है। तीनों लोकों के ईश्वर और दिव्य कमलनेत्र, सीताजी के पति और विश्व का संकट हरने वाले और विश्व के मंगलस्वरूप राजाधिराज श्रीराम सिंहासन पर विराज रहे हैं। सीताजी के मुखचन्द्र के चकोर सबको विश्राम देने वाले, सबका निर्माण करने वाले, सबका मंगल विधान करने के लिये इच्छुक श्रीराम सिंहासन पर विराज रहे हैं। भरतजी भगवान श्रीराम का श्वेत छत्र लिये हुये भजन की मुद्रा में सुशोभित हो रहे हैं और लक्ष्मण चामरों से सुंदर सेवा करते हुये, शोभा पा रहे हैं और शत्रुघ्नजी व्यजन लेकर संसार को मंगल प्रदान कर रहे हैं। वायुपुत्र हनुमानजी नृत्य करके भगवान का यश गा रहे हैं और रामराज्य का रस सर्वत्र प्रसन्नता से फैल रहा है। वह **गिरिधर** कवि के लिये भी कल्याण मंगल प्रदान करे।

## गीत संख्या-३२

हनुमान् गायति-

**मनो मे निरन्तरमिदं गुनगुनाय नमो राघवाय नमो राघवाय।।**
**पिता राघवो राघवश्चैव माता सखा राघवो राघवश्चैव भ्राता।**
**विना राघवं चित्त किञ्चिन्न ध्याय नमो राघवाय नमो राघवाय।।१।।**
**मतौ राघवो मे श्रुतौ राघवो मे गतौ राघवो मे रतौ राघवो मे।**
**रतं राघवे मे मनो नैव म्लाय नमो राघवाय नमो राघवाय।।२।।**

**धृतौ राघवो मे कृतौ राघवो मे स्थितौ राघवो मे नतौ राघवो मे।**
**श्रितं राघवे चेतः किञ्चिन्न ग्लाय नमो राघवाय नमो राघवाय।।३।।**
**वस प्राणे राघव लस ध्याने राघव रस ज्ञाने राघव स्पृशोद्याने राघव।**
**यशो राघवस्यैव गिरिधरप्रगाय नमो राघवाय नमो राघवाय।।४।।**

**भौमी-** अब हनुमानजी गा रहे हैं-अरे मेरे मन! तुम नमो राघवाय, नमो राघवाय यही निरंतर गुनगुनाते रहो। राघव जी मेरे पिता हैं, राघव जी मेरे माता हैं, राघव जी मेरे मित्र हैं और राघव जी मेरे भ्राता हैं। मेरे चित्त! तू राघव के अतिरिक्त कुछ भी ध्यान मत कर। मेरी बुद्धि में राघव हैं, मेरी भक्ति में राघव हैं, मेरी गति में राघव हैं, मेरी श्रुति में राघव हैं और राघव में लगा हुआ मेरा मन तू दुःखी न हो। मेरे धैर्य में राघव हैं, मेरी कृति में राघव हैं मेरी स्थिति में राघव हैं, मेरी श्रुति में राघव हैं। श्रीराघव में लगा हुआ मेरा चित्त कुछ भी ग्लानि मत कर। हे राघव! आप मेरे प्राण में बसें, मेरे ध्यान में सुशोभित हों, मेरे ज्ञान में आनन्द लें और मेरे गमन को भी स्पर्श करें। हे गिरिधर! तू निरंतर राघव का यश गाता रह।

## गीत संख्या-३३

**शिवः प्राह-**

**त्रैलोक्यसङ्कटशोकहर राजाधिराज नमोऽस्तुते।**
**भवरोगसंसृतिलोकहर रघुराजराज नमोऽस्तुते।।१।।**
**सिंहासने सीतासहित आसीनभयसंशयरहित।**
**रावणरिपो विद्याविभवसाद्गुण्यशुभमहिमामहित।**
**वरतूणयुगशरचापधर राजाधिराज नमोऽस्तुते।।२।।**
**रणधीर श्रीरघुवीर हे शतकोटिसिन्धुगभीर हे।**
**हे ब्रह्मनिर्गुणनिस्प्रलय नवकन्दश्यामशरीर हे।**
**हे राम परमेश्वरमधुर राजाधिराज नमोऽस्तुते।।३।।**
**रघुनाथ सीतानाथ हे श्रीनाथ दीनानाथ हे।**
**नरनाथ जगदगनाथ हे श्रुतिचयविदितगुणगाथ हे।**
**गिरधरगिराश्रयपुरुषपर राजाधिराज नमोऽस्तुते।।४।।**

**भौमी-** अब शिवजी स्तुति करते हुये कह रहे हैं। तीनों लोकों के संकट और शोक को नष्ट करने वाले हे राजाधिराज! आपको नमस्कार। और संसार के रोग तथा संसार भाव को हरने वाले, हे रघुकुल के राजाओं के भी राजा श्रीराम! आपको नमस्कार हो। सिंहासन पर सीताजी के साथ विराजमान, भय-संशय से रहित, रावण के शत्रु, विद्या, वैभव, श्रेष्ठ गुण और महिमा से आमहित अर्थात् पूर्ण पूजित दो तरकस, धनुष-बाण धारण करने वाले हे राजाधिराज! आपको नमन हो। हे रणधीर, हे रघुवीर, हे करोड़ों सागरों जैसे गंभीर, हे निर्गुण, प्रलयरहित ब्रह्म, नवीन मेघ जैसे शरीर वाले, हे परमेश्वर, मधुरब्रह्म श्रीराम

राजाधिराज! आपको नमन हो। हे रघुनाथ! हे सीतानाथ! हे श्रीनाथ! हे दीनानाथ! हे मनुष्यों के नाथ! हे जड़–चेतन के नाथ! हे वेदों में विदित गुण–गाथा वाले और **गिरिधर** की वाणी के आश्रय परात्पर पुरुष राजाधिराज! आपको नमस्कार हो।

## गीत संख्या–३४

**ब्रह्मा गायति–**

**देहि नो निजरतिं महाराज।।**
**दीनबन्धो कृपासिन्धो अशितशबरीसुकारकन्धो।**
**खातनक्तंचर महान्धो रामश्रीरघुराज।।१।।**
**मुनिवधूमयशिलातारण जनकसंशयभयनिवारण।**
**त्रिपुरहरकार्मुकविदारण श्रीपते सुरराज।।२।।**
**सशरसङ्गरनिहतरावण यातुधानप्रततरावण।**
**पतितपावन प्रणतभावन नृपमणे नरराज।।३।।**
**पट्टमहिषीमहितराघव सकलकश्मलरहितराघव।**
**गिरिधरं श्रीसहितराघव पाहि राजाधिराज।।४।।**

**भौमी–** अब ब्रह्माजी गा रहे हैं–हे महाराज! हम जीवों को अपने श्रीचरणों की भक्ति दीजिये। हे दीनों के बंधु! कृपा के सागर! शबरी का बेर खाने वाले! और राक्षसों के लिये मरण का कूप खोदने वाले! हे रघुकुल के राजा श्रीराम! हम जीवों को अपने चरणों की रति दीजिये। मुनिपत्नीरूप शिला का उद्धार करने वाले! जनकजी का संशय और भय दूर करने वाले! भगवान शंकर का धनुष तोड़ने वाले! श्रीपति! देवताओं के प्रशासक प्रभु! आप हम जीवों को भक्ति दीजिये। सुंदर बाण धारण करने वाले! युद्ध में रावण का वध करने वाले! जातुधान! राक्षससमूहों को रुलाने वाले! पतितपावन! प्रणतजनों को सुख देने वाले! राजाओं के मुकुटमणि! राजाधिराज! हम जीवों को अपनी भक्ति दीजिये। पट्टमहिषी सीताजी से पूजित! रघुकुल में प्रकट! सभी पापों से रहित! रघु नामक जीवों के हितैषी! एवं रघु के जनपद में आविर्भूत! सीताजी के सहित हे राघव! हे राजाधिराज! **गिरिधर** कवि की रक्षा कीजिये।

**विशेष–** यह गीत रूपक ताल में निबद्ध है। इसे मालकौश, चन्द्रकौश, तिलककामोद, केदारा और दरबारी राग में भी गाया जा सकता है।

## गीत संख्या–३५

**गायत उभौ राजदम्पती–**

**दत्तमिमं हारं सीते यस्येच्छसि तस्मै समर्पयेः।**
**यं चेच्छसि वात्सल्यभाजनं तस्मै हारं त्वमर्पयेः।।१।।**
**यस्स्यात् तव पुत्रो वरवर्णिनी तमथनिर्भयं शृङ्गारय।**
**तं जगतीतलभागधेयभाजं निजबुद्ध्या निर्धारय।।२।।**

सीता हारं हनूमते दत्त्वाधिषभं प्रोचे वाचम्।
मन्ये हनुमन्तं राजाधिराज तव मूर्तं नाराचम्।।३।।
वीर्यं बलं साहसं बुद्धिः सङ्ग्रामे शौर्यं स्थैर्यम्।
यस्मिन् सर्वे गुणाः सोदरा भान्ति दधाना इव धैर्यम्।।४।।
शतयोजनविस्तीर्णसागरं को लङ्घेत दुरामर्षम्।
विनैवाञ्जनेयं दशवदनं को धर्षयेद्दुराधर्षम्।।५।।
को नौ गिरिधरप्रभू विरहवारिधितः शीघ्रं हि तारयेत्।
को हनुमन्तं विना रामरावणसङ्ग्रामं प्रपारयेत्।।६।।

**भौमी-** अब स्वयं राजदम्ती गा रहे हैं। भगवान राम कहते हैं–हे सीते! यह हार मैंने तुम्हें दे दिया, तुम जिसे चाहो दे दो। जिसको तुम वात्सल्य भाजन मानती हो उसी को अर्पित कर दो। हे वरवर्णिनी जो तुम्हारा बेटा हो इस सभा में निर्भयतापूर्वक उसी का श्रृंगार करो और संसार के भाग्यभाजन उसी पुत्र को अपनी बुद्धि से निश्चित कर दो। सीताजी ने प्रभु का दिया हुआ हार हनुमानजी को पहनाकर सभा के बीच प्रभु को सम्बोधित करके कहा–हे राजाधिराज! मैं हनुमान जी को आपका देहधारी बाण ही मानती हूँ। वीर्य, पराक्रम, साहस, बुद्धि, संग्राम में वीरता, स्थिरता ये सभी दिव्य गुण जिनमें सहोदर भाइयों की भाँति धैर्य धारण किये हुये से एक साथ विराजते हैं। भला बताइये हनुमानजी के बिना–सौ योजन विस्तीर्ण चिन्तन में कठिन इस सागर को कौन लाँघ सकता और दुराधर्ष रावण का प्रधर्षण कौन कर सकता? बिना हनुमान के **गिरिधर** कवि के स्वामिनी–स्वामी हम आप सीताराम को विरह सागर से कौन पार करता और 'हनुमान' के बिना इस अभूतपूर्व राम–रावण संग्राम को पूर्णता की ओर कौन ले जाता?

**विशेष-** यह गीत केदारा राग में निबद्ध है।

## गीत संख्या-३६

**रामः प्राह-**

भरतभ्रातः कपेरहं ऋणी नित्यम्।।
सत्यं वच्मि समेसामग्रे नास्ति कपटि मम चित्तम्।
एष मदीयं सर्वस्वं पुत्रो मित्रं मम वित्तम्।।१।।
भौमीतो निराशमनसं विरहाब्धौ मां मज्जन्तम्।
को हनुमन्तं विना त्रायतां निधनस्त्रजं सृजन्तम्।।२।।
शतयोजनविस्तीर्णजलधिमथ को लङ्घतामपारम्।
ऋते वैनतेयं धीमन्तं यद्वाञ्जनाकुमारम्।।३।।
शक्त्या व्रणितं को नु लक्ष्मणं त्यज्यमानतनुमव्यात्।
को भरतस्य तवाहो विरहवारिधौ सपदि सुनाव्यात्।।४।।

**अहं लक्ष्मणो वैदेही भरतस्त्वं कोसलराज्यम्।**
**सर्वे गिरिधरहरेर्वयं ऋणिनस्तत् पार्श्वे प्राज्यम्।।५।।**

**भौमी–** भगवान राम कह रहे हैं–हे भरत भैया! मैं हनुमानजी का नित्य ही ऋणी हूँ। मैं सभी के समक्ष सत्य बोल रहा हूँ। मेरा चित्त कपटी नहीं है। ये हनुमान मेरे सब कुछ हैं। ये मेरे पुत्र, मित्र और धन भी हैं। सीताजी से निराश मन वाले, विरह सागर में डूबते हुए और अपनी मृत्यु की माला गूँथते हुए मुझ राम को हनुमान के बिना कौन बचाता? अरे! धीमान् गरुड के बिना अथवा अञ्जनानन्दवर्धन हनुमान के बिना सौ योजन लम्बे सागर को एक छलांग में कौन लाँघ सकता है? अरे! वीरघातिनी शक्ति से घायल शरीर छोड़ रहे कुमार लक्ष्मण की रक्षा कौन करता और तुम भरत के लिए विरह सागर में जलपोत की भूमिका कौन निभाता? मैं राजाधिराज, लक्ष्मण, सीता, तुम भरत, कोसलपुर का यह राज्य इसके प्रति वर्तमान सम्पूर्ण धन ये हम सभी गिरिधर कवि के आराध्य और गिरिधर अर्थात् पर्वतधारी इन वानर श्रेष्ठ हनुमान जी के ऋणी हैं।

## उपसंहारश्लोकः

**इत्थं राजाधिराजो नरवरसदसि प्रोज्य वातेःप्रशस्तिं**
**सीतादत्तेड्यहारं हृदयगतहरिं हर्षयन् हर्षितार्यः।**
**आलिङ्ग्य प्रेमपूर्णं कपिकुलतिलकं पूर्णकामं प्रपुष्णन्**
**रेजे श्रीरामराज्ये हरिरखिलपतिर्गीतसीताभिरामः।।१।।**

**भौमी–** इस प्रकार श्रेष्ठ मनुष्यों की सभा में वायुपुत्र हनुमान जी की प्रशंसा करके, जिन्हें सीताजी के द्वारा सुन्दर हार दिया गया है। जिनके हृदय में स्वयं श्रीहरि रामजी विराजते हैं ऐसे वानर श्रेष्ठ श्रीहनुमानजी को प्रसन्न करते हुए, उन्हें अपना प्रेमपूर्वक आलिङ्गन देकर, पूर्णकाम हनुमानजी को दुलारते हुए, श्रेष्ठ जनों को प्रसन्न करने वाले, गीतसीताभिराम महाकाव्य के प्रतिपाद्य सभी प्राणियों के ईश्वर श्रीहरि राजाधिराज भगवान राम स्वयं द्वारा प्रवर्तित रामराज्य में अनादि काल से विराज रहे हैं और अनन्त काल तक विराजते रहेंगे।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये उत्तरकाण्डे गीतसीतारामपट्टाभिषेको नाम प्रथमः सर्गः।**

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के उत्तरकाण्ड में गीतसीतारामपट्टाभिषेक नामक प्रथम सर्ग सम्पन्न हुआ।

।। श्रीराघवः शन्तनोतु।।

।।श्रीः।।

।।नमो राघवाय।।

# गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये उत्तरकाण्डे

## गीतराजाधिराजो नाम

# द्वितीयः सर्गः

## मङ्गलाचरणम्

वैदेहीं रमयन् सखींश्च मृडयन्नायोध्यकान् रञ्जयन्
सौन्दर्यं कलयन् बलं प्रबलयन् प्रीताः प्रजाः पालयन्।
संस्कारान् स्त्रजयन् चरित्रमहसा लोकत्रयं शिक्षयन्
वार्तिं वत्सलयन् कविं गिरिधरं राजाधिराजोऽवतु।।१।।

**अन्यच्च**

कदायोध्याधाम्नीश्वरसदसि सिंहासनगतम्
हरिं सीताप्रीतं सुरमुनिसदस्यघनरुचिम्।
अये राजन् राम प्रणतजनसारङ्गजलद
प्रसीदेत्याकुर्वन् निमिषमिव नेष्यामि शरदः।।२।।

**भौमी-** सीताजी को रमाते हुये, मित्रों को सुखी करते हुये, अवधवासियों को आनन्द देते हुये, सौन्दर्य धारण करते हुये, शक्ति और सेना को प्रबल करते हुये, प्रसन्न प्रजा का पालन करते हुये, संस्कारों का सर्जन करते हुये, अपने चरित्र के तेज से तीनों लोकों को शिक्षित करते हुये हनुमानजी के भक्तिमय कल्याण को दृढ़ करते हुए और वायुपुत्र हनुमान को वात्सल्य प्रदान करते हुये, राजाधिराज श्रीराम मुझ **गिरिधर** कवि की भी रक्षा कर लें। और भी अहो! श्रीअयोध्याधाम में श्रेष्ठ सभा में सिंहासन पर विराजमान सीताजी पर प्रसन्न देवता और मुनिरूप सभासदों से युक्त मेघवर्णी भगवान श्रीराम को हे राजन्! हे राम! हे प्रणतजनरूप चातकों के मेघ! प्रभु आप प्रसन्न हों, इस प्रकार प्रेम से स्मरण करता हुआ मैं **गिरिधर** कवि कब अपने जीवन के वर्षों को क्षण के समान सुखपूर्वक बिताऊँगा?

कुबेर और भक्तों के रक्षक हैं। हे स्वामी! आप मुझे स्वीकार कीजिये, जिससे मेरे भय का निषेध हो जाये अर्थात् वह कभी न आये। आप सेव्य हैं, मैं सेवक हूँ, आप नाथ हैं, मैं अनाथ हूँ, हे दीनानाथ! आपकी कृपादृष्टि से मैं सनाथ हो जाऊँ, ऐसा ही आशीर्वाद दीजिये। हे अन्तर्यामी! मेरा चिन्तन कीजिये। अथवा मुझे चिन्तन की प्रेरणा दीजिये, जिससे मेरा यह विषयवन सिद्ध न हो सके अर्थात् फूल-फल न सके। हे करुणा के सागर! हे सीतावर! हे वात्सल्य के महासागर! हे **गिरिधर** कविरूप चातक के स्वाति के मेघ! हे धनुर्विद्या में अत्यन्त निपुण श्रीराम! मेरी रक्षा कीजिये। हे हरिगामी अर्थात् 'हरि' शब्द के वाच्य वानर श्रेष्ठ हनुमानजी की पीठ पर आरूढ़ होकर समरयात्रा करने वाले प्रभु श्रीराम! एक बार मेरी ओर निहारिये जिससे मेरा जन्म लेना प्रसिद्ध अर्थात् विख्यात हो जाये।

**विशेष-** यह गीत बहुप्रचलित सुगम संगीतीय ढाल में निबद्ध है- इसके बोल हैं-

''राघव तेरे चरणों की मुझे धूल जो मिल जाय।''

## गीत संख्या-३१

**चित्रकूटकाननविहारिन् मयि द्रव हे धनुर्धारिन्।।**
**करसरसिजधृतकार्मुकसायक भारतभारतभाग्यविधायक।**
**रघुनायक सुखकारिन् मयि द्रव हे धनुर्धारिन्।।१।।**
**मन्दाकिनीपुलिनमहिमण्डन वसुन्धराधर भारविखण्डन।**
**खलखण्डन भयहारिन् मयि द्रव हे धनुर्धारिन्।।२।।**
**मैथिलीमानसहंसकृपालो भास्करवंशावतंसदयालो।**
**जनोत्तंशमलदारिन् मयि द्रव हे धनुर्धारिन्।।३।।**
**भरतभावसरसीरुहमधुकर निजजनचातकनूतनजलधर।**
**गिरिधरविभयविदारिन् मयि द्रव हे धनुर्धारिन्।।४।।**

**भौमी-** हे चित्रकूट कानन में विहार करने वाले धनुर्धारी श्रीराम! मुझ पर आप पिघल जाइये। अपने करकमल में धनुष-बाण धारण करने वाले ज्ञान में निरत, भारत के भाग्य विधाता, हे रघुनायक! हे सुखकारी! धनुर्धारी प्रभु! मुझ पर पिघल जाइये। हे मन्दाकिनी तट और पृथ्वी के अलंकार! वसुंधरा को धारण करने वाले और पृथ्वी का भार नष्ट करने वाले, खलों को दण्ड देने वाले प्रभु! मुझ पर पिघल जाइये। हे मैथिलीजी के मन-मानस सरोवर के हंस, कृपालु, सूर्य वंश के आभूषण दयालु! हे भक्तों के अलंकार, मलों को विदीर्ण करने वाले श्रीराम! मुझ पर कृपा कीजिये। हे श्रीभरत के भाव कमल के भ्रमर और अपने भक्त रूप चातकों के नवीन मेघ, **गिरिधर** कवि के भय को विदीर्ण करने वाले, चित्रकूट वन विहारी धनुर्धर श्रीराम! मुझ पर द्रवित हो जाइये।

## गीत संख्या-३२

**राम राघव राम राघव राम राघव पाहि माम्।।**
**घोरभवपाथोधिमग्नं पतितपावन पापलग्नम्।**

**खलमनोभवपाशनिघ्नं कलितलाघव त्राहि माम्।।१।।**
**परमपामरपापपीनं विषयवरुणालयकुमीनम्।**
**विषमभवभयदावदीनं गदितगौरव याहि माम्।।२।।**
**सन्मुखादाकर्ण्य दीव्यं भक्तवश्यस्वभावभव्यम्।**
**शरणमायातं सुनव्यं रघुपते मा दाहि माम्।।३।।**
**प्रणतपालक जनं पालय दीनबन्धुयशो निभालय।**
**चरणशरणागतं मालय गिरिधरं सम्माहि माम्।।४।।**

**भौमी-** हे राम! हे राघव! हे रघुकुल में प्रकट श्रीराम! हे योगियों के हितैषी! सम्पूर्ण जीवों के मंगलदाता! मेरी रक्षा कीजिये। हे पतितपावन! हे हस्तलाघव सम्पन्न राघवजी। घोर संसार सागर में डूबे हुये पाप के कीचड़ में फंसे हुये, दुष्ट काम के पाश-बन्धन के अधीन मुझ पापी की रक्षा कीजिये। हे प्रसिद्ध गौरव वाले राघव! अत्यन्त निकृष्ट पाप से स्थूल, विषयरूप महासागर की कुत्सित मछली और अत्यन्त भयंकर संसार की अग्नि से जले हुये मुझ नीच के पास आप पधारें। हे रघुकुल के स्वामी! संतों के मुख से लोकोत्तर, नवीन, भक्त के वश में रहने वाले! आपका सत्य स्वभाव सुनकर शरण में आये हुये मुझ दीन को अपने ऐश्वर्य कृपाण से मत काटिये। हे प्रणतों को पालने वाले प्रभु! हे दीनबन्धो! हे 'मा' अर्थात् सीतारूपिणी आह्लादिनी-शक्ति के निवास स्थान प्रभु श्रीराम! मुझ जन का पालन कीजिये। दीनबंधु रूप यश को सम्भालिये। आपके चरणों की शरण में आये हुए मुझ गिरिधर कवि को भी अपने चरणों में समाहित कर लीजिये।

**विशेष-** यह गीत रूपक ताल और भैरवी राग में निबद्ध है।

## गीत संख्या-३३

**राम राघव राम राघव राम राघव रक्ष माम्।।**
**कलिकरालकुकालभीतं सकलमङ्गलसौख्यवीतम्।**
**दुरितमोहमलैः परीतं पापिनं परिरक्ष माम्।।१।।**
**जन्ममरणजराभयार्तं कामवामकसाभयार्तम्।**
**भव प्रघोरमहामयार्तं तापिनं संरक्ष माम्।।२।।**
**भवद्गुरुगोत्रं प्रलीनं पापपङ्के दीनदीनम्।**
**उभयथा लोचनविहीनं चरणमितमवगच्छ माम्।।३।।**
**पाहि पाहि महाकृपालो त्राहि त्राहि जनं दयालो।**
**गिरिधरं कलये धनुर्धर पापिने मा यच्छ माम्।।४।।**

**भौमी-** हे रामराघव! मेरी रक्षा कीजिये। रक्षा कीजिये। कराल कलिकाल से भयभीत सभी मंगलों और सुख से रहित और दोष-मोह तथा मलों से व्याप्त मुझ पापी की चारों ओर से रक्षा कीजिये। जन्म-मृत्यु और वृद्धावस्था के भय से व्याप्त और नीच काम के कोड़े के भय से और संसार के घोर महान रोगों से विकल तीनों तापों से तपे हुए मुझ आतुर व्यक्ति की रक्षा कीजिये। आपके गुरुदेव वसिष्ठ के गोत्र में जन्मे हुए पाप के

दल-दल में फँसे हुए दोनों प्रकार के नेत्रों से विहीन मुझ साधक को अपने चरण के समीप आया हुआ जानिये। हे महाकृपालु! बचाइये, बचाइये। हे दयालो! मुझ भक्त की रक्षा कीजिये, रक्षा कीजिये। हे धनुर्धर श्रीराम! मुझ कवि **गिरिधर** को इस पापी कलिकाल के हाथ में मत सौंपिये।

**विशेष-** यह गीत भी रूपक ताल और राग भैरवी में निबद्ध है।

## गीत संख्या-३४

**जगति को राघवसदृश उदारः।**
**को रघुवीरसमो लोकेऽकारणकरुणाकूपारः।।**
**यां योगिनो गतिं स्पृहयन्ते यतयस्तप्त्वा प्राणम्।**
**तत्सङ्कुचन् खगाय शवर्यै राति हरिर्निर्वाणम्।।१।।**
**या रावणेन शिवतः सम्पन्मूर्धार्पणेन प्राप्ता।**
**सा रामेण विभीषणाय लज्जयार्पिता पर्याप्ता।।२।।**
**यच्चरणामृतमजोऽर्चयन् निजजलपात्रे कणमात्रम्।**
**तत्पीतं नाविकेन नूनं यावत्तृप्तिविमात्रम्।।३।।**
**यदि वाञ्छसि भवखेदच्छेदं भवभवविभवविरामम्।**
**तदानन्यगतिको भज गिरिधर भक्त्या सीतारामम्।।४।।**

**भौमी-** इस संसार में श्रीराम के समान कौन उदार है? इस लोक में श्रीरघुवीर के समान बिना कारण करुणा का सागर कौन है? जिस मोक्ष गति के लिये अपने प्राणों को तपाकर योगी, यति स्पृहा करते रहते हैं, उसी मोक्ष को भगवान श्रीराम शबरी और जटायु को संकुचित होकर दे देते हैं। जो सम्पत्ति रावण ने दशों मस्तक देकर शिवजी से प्राप्त की थी वही और उससे भी पर्याप्त सम्पत्ति श्रीराम के द्वारा संकोचपूर्वक विभीषण को दी गयी। प्रभु का जो चरणामृत ब्रह्माजी ने अपने कमंडल में केवल एक बूँद इकट्ठा किया था, प्रभु का वही चरणामृत केवट ने मात्रा से रहित अर्थात् पच्चीसों कठोते भर-भरकर अपनी प्यास की तृप्ति पर्यन्त पिया। हे कवि **गिरिधर**! यदि तुम संसार के खेद का विनाश चाहते हो और यदि तुम संसार में उत्पन्न विकृत पदार्थों का अभाव चाहते हो तब तो एकमात्र श्रीराम को अपना आश्रय मानकर अनन्य गति से अनन्य प्रेमाभक्ति से श्रीसीतारामजी को भजो।

## गीत संख्या-३५

**अर्थ ईप्स्यते न धर्मः काम ईप्स्यते।**
**कौसल्याकुमारो मह्यं राम ईप्स्यते।।**
**भगवाननाथनाथो दीनहितकारी।**
**सदेप्स्यते विप्रवधू पापतापहारी।।**
**जानकीजीवनः पूर्णकाम ईप्स्यते।**
**कौसल्याकुमारो मह्यं राम ईप्स्यते।।१।।**

सत्यसन्धो दयासिन्धुर्वीरव्रतधारी।
सदेप्स्यते चित्रकूटकाननविहारी।।
मन्दाकिनीललितललाम ईप्स्यते।
कौसल्याकुमारो मह्यं राम ईप्स्यते।।२।।
नीलनीलधरश्याम राम मह्यं ईप्स्यते।
शक्रनीलमणिश्याम राम मह्यं ईप्स्यते।।
परब्रह्म भवभयविराम ईप्स्यते।
कौसल्या कुमारो मह्यं राम ईप्स्यते।।३।।
कोटिमन्मथाभिरामरामो मह्यं ईप्स्यते।
लोकलोचनाभिरामो राम मह्यं ईप्स्यते।।
गिरिधरगीतसीताभिराम ईप्स्यते।
कौसल्या कुमारो मह्यं राम ईप्स्यते।।४।।

**भौमी-**

अर्थ चाहिये न धर्म काम चाहिये।
कौसल्या कुमार मुझे राम चाहिये।।
अशरण, अनाथ, नाथ, दीन हितकारी।
चाहिये विप्र वधु पाप शाप हारी।।
जानकी जीवन पूर्ण काम चाहिये।।१।।कौसल्या.
सत्य-सन्ध, दया सिन्धु वीर व्रत धारी।
चाहिये चित्रकूट कानन बिहारी।।
मन्दाकिनी ललित ललाम चाहिये।।२।।कौसल्या.
इन्द्र-नील-मणि श्याम राम मुझे चाहिये।
नील-नीरधर श्याम राम मुझे चाहिये।
परब्रह्म भवभय विराम चाहिये।।३।।कौसल्या.
कोटिमन्मथाभिराम राम मुझे चाहिये।
लोकलोचनाभिराम राम मुझे चाहिये।।
गिरिधर गीत सीताभिराम चाहिये।।४।।कौसल्या.

**विशेष-** यह गीत राग-भीमपलासी एवं दादरा ताल में निबद्ध है।

## गीत संख्या-३६

मनो भज मे सन्ततं सीतारामम्।
मनो भज मे शाश्वतं सीतारामम्।।

कोटिकोटिरतिकन्दर्पमोहनम् ।
चपलाजलधरगौरश्यामम् ।।
मनो मन मे सुन्दरं सीतारामम्।।१।।
जनरञ्जनभवभञ्जनचरितम् ।
भवभयविषमयविषयविरामम् ।।
मनो वर मे बन्धुरं सीतारामम्।।२।।
करतलधृतसायकवरचापम् ।
सततं पूरितसज्जनकामम्।।
मनो नम मे वत्सलं सीतारामम्।।३।।
नीरजनयननं मङ्गलचयनम्।
करुणं सुजनसुखदपरिणामम्।
मनो जप मे निष्कलं सीतारामम्।।४।।
गीतरामायणं गीतसीताभिरामम्
सुरगिरि गिरिधरगिराभिरामम्।
मनः स्मर मे निर्मलं सीतारामम्।।५।।

**भौमी-** हे मेरे मन! निरन्तर श्रीसीतारामजी का भजन करो। हे मेरे मन! शाश्वत सीतारामजी का भजन करो। करोड़ों-करोड़ों रति-कामदेवों को मोहित करने वाले, बिजली और मेघ के समान गौर-श्यामल सुन्दर श्रीसीताराम को मेरे मन निरन्तर मनन करो। ओ मेरे मन! जिनका चरित्र भक्तों को आनन्द देने वाला और भव-भय को नष्ट करने वाला है, ऐसे संसार का भय-विषस्वरूप विषयों को विराम देने वाले सबके बन्धु श्रीसीतारामजी को वरण करो। अरे मेरे मन! हाथ में सुंदर धनुष-बाण लिये हुये सदैव सज्जनों की कामनाओं को पूर्ण करने वाले प्राणिमात्र पर वात्सल्य करने वाले सीतारामजी को नमन करो। अरे मेरे मन! कमल नेत्र मंगलों का चयन करने वाले परिणाम में सज्जनों को सुखद पाप की कलाओं से रहित श्रीसीताराम का जप करो। हे मेरे मन! इस प्रकार गीतरामायण तथा उपनाम गीतसीताभिरामम् के प्रतिपाद्य-देववाणी में प्रयुक्त **गिरिधर** कवि की वाणी को आनन्द देने वाले ऐसे श्रीसीतारामजी को स्मरण करो।

**''श्रीसीताराम जी की जय''**

## विश्रामश्लोकः

**श्रीसीतारामपादाम्बुजरसरसिके नाप्तबोधेन दिव्यं**
**नव्यं गीतैः परीतं वसुखखहरिभिः प्रेमभक्त्येकसारम्।**
**गीतं श्रीदेववाण्यां गिरिधरकविना गीतरामायणं तत्**
**नित्यं श्रीरामभक्तिं दिशतु सुकृतिनां गीतसीताभिरामम्।।१।।**

**भौमी-** श्रीसीताराम जी के श्रीचरणकमल के प्रेम रस के रसिक और सीताराम जी की कृपा से रामायण रचना सम्बन्धी अलौकिक ज्ञान प्राप्त किये हुये मुझ श्रीचित्रकूट तुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य **गिरिधर** कवि द्वारा एक हजार आठ गीतों से युक्त दिव्य और नवीन संस्कृत भाषा में गाया हुआ प्रेम-भक्तिरूप एकमात्र तत्व से युक्त 'गीतरामायणम्' गीतसीताभिराम नामक यह संस्कृत महाकाव्य सुकृति श्रीवैष्णव जनों को सदैव श्रीरामभक्ति प्रदान करता रहे।

**इति**

**श्रीचित्रकूटतुलसीपीठाधीश्वरमहाकविजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यगिरिधरकविप्रणीते गीतरामायणे गीतसीताभिरामे संस्कृतगीतमहाकाव्ये उत्तरकाण्डे गीतराजाधिराजो नाम द्वितीयः सर्गः।**

## ।।उत्तरकाण्डं सम्पूर्णम्।।

## ।।सम्पूर्णञ्च गीतरामायणम्।।

इस प्रकार श्रीचित्रकूटतुलसीपीठाधीश्वर महाकवि जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य गिरिधरकवि द्वारा विरचित गीतरामायण 'गीतसीताभिराम' नामक संस्कृत गीतमहाकाव्य के उत्तरकाण्ड में गीतराजाधिराज नामक द्वितीय सर्ग सम्पन्न हुआ और गीतरामायणम् नामक यह महाकाव्य भी संपन्न हुआ।

**।। श्रीराघवः शन्तनोतु।।**

**।।श्रीसीतारामार्पणमस्तु।।**

।।श्रीः।।

।।नमो राघवाय।।

## ।।अथ गीतरामायणस्य नीराजनम्।।

भक्त्या नीराजये गीतरामायणम्,
पापसन्त्रासनं पुण्यपारायणम्।।
गीतसीताभिरामं परमशोभनम्,
प्रोल्लसत् सीतारामं सतां लोभनम्,
निर्मलं निष्कलं प्रेमपारायणम्।।१।।
देवगव्या सुगव्यं शुभं सुन्दरम्,
नव्यनव्यञ्च भव्यं भवाब्धिमन्दरम्,
जगन्मङ्गलायनं धर्मपारायणम्।।२।।
सीतारामयशोमहितरामचरितसागरम् ,
अष्टोत्तरसहस्त्रगीतमयं प्रेमनागरम्,
मञ्जुमारुतिमहं मर्मपारायणम्।।३।।
भारतोद्गीतलोकध्वनिस्वादृतम् ,
शतपदेनेव सुमनः सुमध्वाहृतम्,
कविगिरिधरेण कृतं भक्तिपारायणम्।।४।।

**भौमी–** मैं भक्तिपूर्वक गीतरामायण की आरती कर रहा हूँ जो पाप का नाशक और पुण्य का पारायण है। जिसमें सीतारामजी निरन्तर विराज रहे हैं ऐसे सज्जनों को लुभाने वाले प्रेमपारायण स्वरूप, निर्मल, निर्दोष, परमसुन्दर, गीतसीताभिराम गीतरामायण की मैं आरती करता हूँ। देवभाषा रूप कामधेनु के गव्य कल्याणकारी, सुन्दर, अत्यंत दिव्य, नवीन, भवसागर के लिये मन्दराचल स्वरूप, विश्व के मंगल के आयतन, धर्म पारायण स्वरूप गीतरामायण की मैं आरती कर रहा हूँ। श्रीसीतारामजी के यश से सुशोभित श्रीरामजी के चरित्रों के महासागर एक हजार आठ गीतों से युक्त भगवद्प्रेम में निपुण श्रीहनुमानजी को महोत्सव प्रदान करने वाले और मार्मिक तत्वों के पारायण स्वरूप गीतरामायण की मैं भक्तिपूर्वक आरती करता हूँ। भारत में प्रसिद्ध लोक ध्वनियों में भ्रमर द्वारा पुष्पों में मधु की भाँति **गिरिधर** कवि द्वारा रचित भक्ति–पारायणस्वरूप गीतरामायण की मैं आरती करता हूँ।

।।नमो राघवाय।।